च्यते । नमस्कार्यश्च स एव भवति, यस्य पूजातिशयवचनातिशयज्ञानातिशयापायापगमातिशयलक्षणमतिशयचतुष्टयं भवति । तत्र ' परमात्मानम् ' इत्यनेन पूजातिशयः प्रकाशितः । अत एव " सन्महत्परमो० " इत्यनेन पूजायां समासः । तथा श्रेयांसश्च ते शब्दाश्च,ताननुशास्तीति " रम्यादिभ्यः० " इत्यनटि श्रेयःशब्दानुशासनः । तमेवंविधं परमात्मानमित्यावृत्तिव्याख्यानाद् वचनातिशयः, स च न ज्ञानातिशयं विनेति, तेन ज्ञानातिशय आक्षिप्यते, सोऽपि च नाऽपायापगमातिशयं विनेति, तेनाऽप्यपायापगमातिशय आक्षिप्यते । अपायभूता हि रागादयस्तेषामपगमः स एवाऽतिशयः । ईश्वरस्याऽपि हि सदा शिवावस्थायां रागाद्यपगमोऽस्त्येव । अन्यदेवतानां तु सुगम एव । तथा शब्दानुशासनमिति पदेन शब्दा व्युत्पाद्याः । इदं च व्याकरणं व्युत्पादकमिति व्युत्पाद्यव्युत्पादकलक्षणः सम्बन्ध उक्तः । तदन्तर्गतं च शिष्यस्य शब्दव्युत्पत्तिराचार्यस्य च शब्दव्युत्पादनं प्रयोजनं प्रतिपादितं, यत उक्तं—

" सिद्धार्थं सिद्धसम्बन्धं, श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः, सम्बन्धः सप्रयोजनः ॥ १ ॥ " इति ।

अप्रशस्यतरेण च शब्दानुशासनेन शिष्याचार्ययोः शब्दव्युत्पत्तिव्युत्पादनलक्षणे प्रयोजने नोपपद्येत, इत्याह श्रेयः प्रशस्यतरं । ननु पूर्वप्रणीतं—

" ब्राह्ममैशानमैन्द्रं च, प्राजापत्यं बृहस्पतिम् ।
त्वाष्ट्रमा पिशलं चेति, पाणिनीयमथाऽष्टमम् ॥ १ ॥ "

इत्यादि शब्दानुशासनजातमस्ति तस्माच्च कथमिदं प्रशस्यतरमिति ? उच्यते, तद्धि अतिविस्तीर्णं विप्रकीर्णं च कातन्त्रं तर्हि साधु भविष्यतीति चेन्न तस्य संकीर्णत्वात्, इदं तु सिद्धहेमचन्द्राभिधानं शब्दानुशासनं नाऽतिविस्तीर्णं, न विप्रकीर्णं, न च संकीर्णमिति । अनेनैव शब्दव्युत्पत्तिर्भवतीति, इति मौलोऽर्थः प्रतीत एव । न च गुरुशिष्ययोः सावधानतामन्तरेण शब्दव्युत्पादनव्युत्पत्ती सम्भवत इति पूर्वार्धमावृत्त्याऽपि व्याख्यायते । परं आत्मानं च प्रणम्य प्रह्वीकृत्य सावधानीकृत्येति योगः । किं विशिष्टं परं ? श्रेयःशब्दाननुशासयतीति श्रेयःशब्दानुशासनस्तं, किं विशिष्टं चाऽऽत्मानम् ? श्रेयःशब्दाननुशास्ति श्रेयःशब्दानुशासनस्तं, उभयत्र " रम्यादिभ्यः " इत्यनट् । इति श्लोकपूर्वार्द्धव्याख्या ॥ उत्तरार्द्धेन तु स्वकीयनाम भङ्ग्यन्तरेण च सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनटीका नाम च ग्रन्थकारः प्राचकटत् । स्वोपज्ञशब्दानुशासनस्य ' तत्त्वप्रकाशिका ' टीका मया विरच्यत इत्यर्थः । इह हि

१ ३-१-१०७ । २ ५-३-१२६ । ३ आचार्यहेमचन्द्रेण, स्मृत्वा किञ्चित् प्रकाश्यते ॥ इति उत्तरार्धः ॥

संस्कृतप्राकृतसौरसेनमागधपैशाचिकापभ्रंशभाषाभेदेन षोढा शब्दा भवन्ति, ते च नाऽव्युत्पादिता ज्ञायन्त इत्यतस्तेषां सर्वेषामपि व्युत्पादनायाऽष्टभिरध्यायैः पादचतुष्टयरूपैः श्रीसिद्धहेमचन्द्राभिधानमिदं शब्दानुशासनं श्रीमदाचार्यहेमचन्द्रश्चकार। तत्र च सप्तभिरध्यायैः संस्कृतशब्दा एकेन चाऽध्यायेन तदितरे सर्वेऽपिव्युत्पादिताः। तत्राऽप्यध्यायसप्तके चतुष्का[1]ऽऽख्या[2]त कृत्[3]तद्धित[4]रूपाणि चत्वारि प्रकरणानि भवन्ति। तत्र सन्धि[1]नाम[2]कारक[3]समासै[4]श्चत्वारो मानमस्येति चतुष्कश्चतुर्णां समुदायः। धातुप्रत्यययोगात् क्रियासाधकत्वेनाऽऽख्यायते स्मेत्याख्यातं, चतुष्काख्याताभ्यां पश्चात् क्रियत इति कृत्, तेभ्योऽणादिप्रत्ययेभ्यो हितं तद्धितं। तत्र चतुष्के दश पादा, आख्याते षट्, कृति चत्वारस्तद्धिते चाऽष्टौ। इति सिद्धहेमचन्द्राभिधानशब्दानुशासनसकलसूत्रार्थसमुद्देशः। अस्य चाऽऽदौ सूत्रकारो निर्विघ्नशब्दानुशासनसूत्रनिष्पत्तिनिमित्तमिष्टदेवतानमस्कारं चकार—

'अर्हम्' १-१-१॥ अर्हम् इति इदं च सानुनासिकाकारान्तमव्ययं, अर्हमिति मन्तोऽप्यस्ति शब्दः। 'अक्षर' मिति समुदायसमुदायिनोरभेदादेकत्वं, अथवा न क्षरति–न चलति स्वस्वरूपादित्यक्षरं। तत्त्वं परमब्रह्मेति—यावद्। व्याख्यानं च[1] त्रिधा भवति, स्वरूपाख्या(१)नमभिधा(२)तात्पर्यं(३) चेति। ततोऽक्षरमिति स्वरूपाख्यानं। 'परमेश्वरस्य परमेष्ठिनो वाचकम्' इत्यभिधा[2], 'सिद्धचक्रस्याऽऽदिबीजम्'[3] इति तात्पर्यं, व्याख्यानं तत्र परमे पदे तिष्ठतीति "परमात्कित्[1]" इतीन् तत्पुरुषे "कृति[2]" इति "अद्व्यञ्जनात् सप्तम्या[3]" अलुप्प्राप्तावपि "नेर्न्[4] सिद्धस्थे" इत्यनेन बाधिता, ततो "भीरुष्ठानादयः[5]" इति पाठात् षत्वे "अद्व्यञ्जनात् सप्तम्या०[6]" अलुपि च परमेष्ठी। परमेष्ठिनश्चाऽर्हत्सिद्धाचार्योपाध्यायसर्वसाधुरूपाः पञ्च भवन्तीति, शेषचतुष्टयव्यवच्छेदायाऽऽह–परमेश्वरस्येति, चतुस्त्रिंशदतिशयरूपपरमैश्वर्यभाजो जिनस्येत्यर्थः। सिद्धा विद्यासिद्धादयस्तेषां चक्रमिव। तस्य पञ्च बीजानि तेषु चेदमादिबीजं 'सकलाः[7]' निशेषाः लौकिकाः लोकोत्तराश्च य आगमास्तेषामुपनिषद्भूतं प्राप्त[9] "श्रितादिभिः[8]" इति समासः।

ननु "अर्ह" इत्यर्हद्वाचकत्वेन कथं लौकिकागमानामुपनिषद्भूतमिति ? सत्यं, सर्वपार्षदत्वाद्धि शब्दानुशासनस्य सर्वदर्शनानुयायीनमस्कारो वाच्यस्तत इत्थं व्याख्येयम्—

---

१ उ. ९२५।। २ ३-१-७७। ३ ३-२-१८। ४ ३-२-२९। ५ २-३-३३। ६ ३-२-१८। ७ सकलागमोपनिषद्भूतम् इति। ८ ३-१-६२। ९ रहस्यभूतम्।

" अकारेणोच्यते विष्णू, रेफे ब्रह्मा व्यवस्थितः ।
हकारेण हरः प्रोक्त-स्तदन्ते卐 परमं पदम्[१] ॥ १ ॥

इतिश्लोकेनाऽर्हंशब्दस्य विष्णुप्रभृतिदेवतात्रयाभिधायित्वेन लौकिकागमेष्वपि 'अर्हम्' इतिपदमुपनिपन्नमूतमेवेति । अत्र 卐तदन्त इति तुर्यपादस्याऽयमर्थः, तस्याऽर्हंशब्दस्याऽन्त उपरितनभागे परमं पदं सिद्धिशिलारूपं; तदाकारत्वादनुनासिकरूपा कलाऽपि परमं पदमित्युक्तम् । '**अशेषविघ्न०**' इत्यादि, विहन्यन्ते कार्याण्येभिरिति विघ्नाः । नियमेन हन्यते ज्ञायते पारतन्त्र्येणेति निघ्नं, उभयत्राऽपि "स्थादिभ्यः[३]" क इति । '**दृष्टादृष्ट०**' इत्यादि दृष्टं राज्यादि, अदृष्टं स्वर्गादि । सङ्कल्प इच्छासम्पादनं । '**आशास्त्र०**' इत्यादि, शास्त्रात् 'आ' अभिव्याप्य आशास्त्रं, अध्ययनं चाऽध्यापनं चाऽध्ययनाध्यापने ते अवधी यस्य तत्तथेति क्रियाविशेषणं ।

'**प्रणिधानं च**' चतुर्धा, पदस्थं पिण्डस्थं रूपस्थं रूपातीतं चेति । पदस्थमर्हमितिपदस्थस्य, पिण्डस्थं शरीरस्थस्य, रूपस्थं प्रतिमारूपस्य, रूपातीतं योगिगम्यस्याऽर्हतोध्यानमिति । एष्वाद्ये द्वे शास्त्रारम्भे सम्भवतो नोत्तरे द्वे । '**अनेनाऽऽत्मनः सर्वतःसम्भेदः**' इत्युक्तंपदस्थम्, सम्भेदो वेष्टनं; अत्र सप्तमी प्राप्नोति तत्र प्रणिधानं ध्यानमित्यर्थः । तत्कथं सामानाधिकरण्यं ? सत्यं, ध्यानं विषयि सम्भेदस्तु विषय इति तयोरभेदोपचारात्सामानाधिकरण्यं, '**तदभिधेयेन चाऽभेदः**' इति पिण्डस्थमुक्तम्; तदभिधेयेनाऽर्हताऽऽत्मनोऽभेदः । य एवाऽहं स एवाऽर्हन्निति य एव चाऽर्हन् स एवाऽहमिति । '**वयमपि च०**' इत्यादि, अत्र विशिष्टप्रणिधेयप्रणिधानादिगुणप्रकर्षादात्मन्युत्कर्षाधानाद्गुणबहुत्वेनाऽऽत्मनोऽपि तदभिन्नतया बहुत्वाद्वयमिति बहुवचननिर्देशः । '**तात्त्विक०**' इति, तत्त्वमेव "विनयादिभ्यः[४]" इति इकण्, तत्त्वं प्रयोजन मस्येति वा १-१-१ ॥

'**सिद्धिः स्याद्वादात्**' १-१-२ ॥ इत्यत्र गम्ययप इति पञ्चमी स्याद्वादमाश्रित्येत्यर्थः । इह हि—" **संज्ञा[१] च परिभाषा[२] च, [३]विधिर्नियम[४] एव च ।**
**प्रतिषेधो[५] विकार[६]श्च, विकल्प[७]श्च समुच्चयः[८] ॥ १ ॥**
**अतिदेशो[९]ऽनुवाद[१०]श्च, दशधा सूत्रलक्षणम् ।**"

इति दशधा सूत्राणि भवन्ति, तानि च "औदन्ताः स्वराः[५]" इति १ । "प्रत्ययः प्रकृत्यादेः[६]" इति २ । "नाम्यन्तस्थाकवर्गात्[७]" इति ३ । "नाम सिदय्व्यञ्जने[८]"

---

१ कलिकालसर्वज्ञश्रीहेमचन्द्रसूरीश्वरविरचितश्रीमहादेवस्तोत्रे श्लो० ३९ । २ विघ्ने निघ्ने च । ३ ५-३-८२ । ४ ७-२-१६९ । ५ १-१-४ । ६ ७-४-११५ । ७ २-३-१५ । ८ १-१-२१ ।

इति ४ । " नस्तं मत्वर्थे[1] " इति ५ । " घुटि[2] " इति ६ । " सौ नवेतौ[3] " इति ७ । " शसोऽता[4] " इति ८ । " इदितो वा[5] " इति ९ । " तयोः समूहवच्च बहुषु[6] " इति १० । आदीनि सूत्राणि क्रमेण ज्ञातव्यानि । एतेषां मध्य एतदधिकारसूत्रमाशास्त्रपरिसमाप्तेः ।

5 'स्यादित्यव्ययम्' इति यद्वा स्याद्रूपो वादः स्याद्वाद इति । " अव्ययं प्रवृद्धादिभिः[7] " इति समासः । तदा 'वाद' शब्देनोक्तस्याऽनेकान्तस्य द्योतको यदा तु स्वरादित्वाद्वाचकत्वेन 'अनेकान्तद्योतकः' तदा स्यादित्येतस्य वादः 'स्याद्वादः' "कृति[8]" इत्यनेन समासः । अमति गच्छति धर्मिणमिति " दम्यमि[9]० " 10 इति तेऽन्तो धर्मः, न एकोऽनेकः—अनेकोऽन्तो यस्याऽसाविति अनेकान्तः, तेषु तस्य वदनं याथातथ्येन कथनं वादः । स च स्वाभ्युपगतस्यैव भवतीत्याह—'नित्यानित्या०' इति निर्ध्रुवं भवं " नेर्ध्रुवे[10] " इति त्यचि नित्यं, नीयते कालान्तरेऽपि प्राप्यत इति वा नित्यं " शिक्यास्या[11]० " इति निपातनादुभयान्तापरिच्छिन्नसत्ताकं नित्यं तद्विपरीतमनित्यम् । आदीयतेऽर्थोऽस्मादिति " उपसर्गादः कि[12] " इति कौ 15 आदिः—आदिशब्दात्सदसदात्मकत्वाभिलाप्यानभिलाप्यत्वगुणपर्यायग्रहः । सर्वं वस्तु द्रव्यरूपतया नित्यं पर्यायरूपतया त्वनित्यं, तथा सर्वं वस्तु स्वरूपेण सत् पररूपेणाऽसत् । तथा—गोत्वादि सर्वगवादि व्यक्त्यनुगतत्वेन सामान्यं सत्ता सामान्यापेक्षया तु विशेषः । इक्षुक्षीरादीनां माधुर्यं शब्दाभिधेयत्वेनाऽभिलाप्यं, माधुर्यतारतम्यस्य वक्तुमशक्यत्वेनाऽनभिलाप्यं । सह भाविनो धर्माः सामान्यादधोगुणा उच्यन्ते, क्रमभा- 20 विनस्तु नवपुराणादयः पर्यायाः । धरन्ति वस्तुनो धर्मिरूपतामिति 'धर्माः,' शाम्यति विविधैर्धर्मैर्युगपत्परिणतिं यातीति " शमेर्बचवा[13] " इत्यले 'शबलं' । एति गच्छत्येकत्वसंख्यामिति क एकः । वसन्ति धर्मा अस्मिन्निति " वसेर्णिद्वा[14] " इति तुनि 'वस्तु,' नित्यादिनाऽनेकधर्मेण शबलं यदेकं वस्तु तस्य 'अभ्युपगमः' । प्रमाणाविरुद्धोऽङ्गीकारस्तत एव शब्दानामनित्यत्ववादिमते सिद्धिर्नि- 25 ष्पत्तिः, नित्यत्ववादिमते तु ज्ञप्तिर्भवति ।

नाऽन्यथेत्यत आह—'एकस्यैवह्रि०' इत्यादि । नदि एषा इत्यादौ ह्रस्वो, दण्डाग्रम् इत्यादौ दीर्घो, देवदत्त ३ अत्र त्वमसि इत्यादौ प्लुतः । वर्णानां च सर्वथा नित्यत्वे पूर्वधर्मनिवृत्तिरूपस्य 'ह्रस्वादिविधिः' असम्भवः । सर्वथाऽनित्यत्वे तूत्प-

---

१ १-१-२३ । २ १-४-६८ । ३ १-२-३८ । ४ १-४-४९ । ५ ८-४-१ । ६ ७-३-३ । ७ ६-१-४८ । ८ ३-१-७७ । ९ उ २०० । १० ६-३-१७ । ११ उ ३६४ । १२ ५-३-८७ । १३ उ. ४७० । १४ उ. ७७४ ।

त्यनन्तरमेव विनाशात्कस्य 'ह्रस्वादिविधिः'। तस्माद्वर्णरूपतया नित्या वर्णा ह्रस्वादिरूपतया त्वनित्या इति ह्रस्वादिविधिरुपपद्यते । 'अनेककारक०'[1] इति द्रव्याणां हि स्वपराश्रयसमवेतक्रियानिर्वर्तकं सामर्थ्यं कारकं, तच्च कर्त्राद्यनेकप्रकारमेकस्याऽपि लभ्यते, यथा पीयमानं मधु मदयति, वृक्षमारुह्य ततः फलान्यवचिनोति, विषयेभ्योऽबिभ्यदनात्मज्ञस्तेभ्य एवाऽऽत्मानं प्रयच्छन् तैरेव बन्धमाप्नोतीत्यादि । तच्चैकस्य सर्वथा नित्यत्व एकरूपवृत्तित्वेन रूपान्तरानुपपत्तेर्न घटते, सर्वथाऽनित्यत्वेपि न घटते, तथाहि–स्वातन्त्र्यं कर्तृत्वं, तच्चेदं फलम्, इयं क्रिया, इदं करणम्, अयं क्रमः, अयं व्ययः, इदमनुषङ्गजं फलम्, इयं मम दशा, अयं मम सहायः, अयं विपक्षः, इमौ च मम प्रयतमानस्य देशकालौ इति विमृशन् प्रेक्षापूर्वकारी प्रयतते । इत्येवं परिदृष्टं सामर्थ्यं कारकप्रयोक्तृत्वलक्षणं, तदपि नाऽनित्यस्य क्षणमात्रावस्थायित्वेन जन्मानन्तरमेव विनष्टस्य युज्यते, किं पुनः–'कारकसंनिपातः'? इति नित्यानित्यात्मकः स्याद्वादोऽङ्गीकर्तव्यः । तथा तमन्तरेण भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकत्राऽर्थे वृत्तिः 'सामानाधिकरण्यम्' इति लक्षणं सामानाधिकरण्यं न घटते, तयोर्हि भेदे घटपटयोरिव नैकत्र वृत्तिः स्यात्, नाऽप्यत्यन्ताभेदे भेदनिबन्धनत्वात् तस्य नहि भवति नीलं नीलमिति, किञ्च नीलशब्दादेव तदर्थप्रतिपत्तावुत्पलशब्दानर्थक्यप्रसङ्गः । तथा 'विशेषणविशेष्ययोः' परस्परमत्यन्तभेदे घटपटयोरिव न विशेषणविशेष्यभावः स्यात्, अत्यन्ताभेदेऽपि स न स्यात्, नहि भवति घटो घट इति विशेषणविशेष्यभावो द्वयनिबन्धत्वात्तस्य, तथा खञ्जकुण्टः कुण्टखञ्ज इत्यादिष्वेकस्यैव विवक्षावशाद्विशेषणत्वं विशेष्यत्वं च भवति ततः कथञ्चिद्भेदः कथञ्चिदभेदः, कथञ्चिद्विशेषणत्वं कथञ्चिद्विशेष्यत्वं चेत्यादिरूपः स्याद्वादोऽङ्गीकर्तव्यः, 'आदि' शब्दात् स्थान्यादेशप्रकृतिविकारनिमित्तनिमित्तिभावादिपरिग्रहः । किञ्च–शब्दानुशासनमिदं शब्दं प्रति विप्रतिपद्यते । नित्य इत्येके, अनित्य इत्यन्ये, नित्यानित्य इत्यपरे । अत्र नित्यत्वानित्यत्वयोरेकतरपक्षपरिग्रहे शब्दानुशासनस्य सर्वोपादेयत्वं न स्यादित्याह 'सर्वपार्षदत्वाच्चेति,' "पृणातीति"[2] "पृः सद्"[3] इति पर्षद्, तत्र साधुः "पर्षदोर्ण्यणौ"[4] इति णे पार्षदं, पार्षदत्वेन च साधारणत्वं लक्ष्यते, तेन सर्वेषां पार्षदं सर्वपार्षदं सर्वसाधारणमित्यर्थः । दृश्यते तत्त्वमेकदेशेनैभिरिति दर्शनानि नयाः, समस्तानां तेषां यः समुदायस्तदात्मकस्य स्याद्वादस्याऽभ्युपगमो नितरां निर्दोष इत्यर्थः । अतिरमणीयमिति–रमेर्णिगन्तात् "प्रवचनीयादयः"[5] इत्यनीयः ।

---

१ अनेककारकसन्निपातः इति ॥ २ पृृश् पालनपूरणयोः । ३ उ ८९७ । ४ ७–१–१८ । ५ ५–१–८ ।

'**अन्योन्यपक्ष०**'[1] इति–साध्यधर्मवैशिष्ट्येन, पच्यते व्यक्तीक्रियते हेत्वादिभिरिति "मावावद्यमि०"[2] इति से पक्षः साध्यधर्मविशिष्टो धर्मी, शब्दोऽनित्य एवेत्यादि, प्रतिकूलः पक्षः प्रतिपक्षः, अन्योन्यं पक्षप्रतिपक्षास्तेषां भावः, परस्परविरुद्धधर्मोपन्यासस्तस्माद्यथा मत्सरः–सातिशयो[3] विद्यते येषामतिशायने "ईनि" इति मत्सरिणः प्रकर्षेणोद्यते प्रतिपाद्यते स्वाभ्युपगतोऽर्थ एभिरिति "व्यञ्जनाद्घञ्" इति घञि प्रवादाः शेषदर्शनानि, यथा ते परस्परविरोधान्मत्सरिणः सन्तः पक्षपातिनो, न तथा मत्सरी सन् त्वत्समयः पक्षपातीति प्रक्रमभेदाभावं न पक्षपातीति न विरोधी । सम्यगेति गच्छत्यर्थमिति समयः सङ्केतो, यद्वा सम्यगयन्ति गच्छन्ति जीवादयः पदार्थाः स्वरूपप्रतिष्ठामस्मिन्निति **समयः**–सिद्धान्तः "पुंनाम्नि घः" । अत्राऽर्थे विशेषणद्वारेण हेतुवैशिष्ट्यमिति निरवधारणा अभिप्रायविशेषाः, सावधारणास्तु दुर्नयाः; समस्तार्थप्रदर्शकं तु प्रमाणमेवं–ते च नैगम १–संग्रह २–व्यवहार ३–ऋजुसूत्र४–शब्द ५–समभिरूढ ६–एवम्भूता ७ इति सप्त, अविशेषं समत्वेन मन्यमानः । '**नयास्तव०**' इति—त्वदीयस्यात्पदचिह्निताः । अभिप्रेतं फलन्ति "लिहादिभ्यः" इति अभिप्रेतं फलं येभ्य इति वा अभिप्रेतफला भवन्ति, **रसेन** पारदेनोपविद्ध मिश्रिता लोहधताव इव शुल्वादिधातव इव । यतस्तस्मादारात् सम्यग्ज्ञानदर्शनचारित्रात्मकमोक्षमार्गस्य समीपं याताः । आराद्दूरं सर्वपापेभ्यो याता इति वा "क्विर्ड्" इति डे, "पृषोदरादयः" इति साधुत्वात् । आर्या–गौतमादयः, प्रणता इति प्रणन्तुमारब्धा यतो हितैषिणस्ते ॥

अथ व्याख्यानान्तरेणाऽभिधेयप्रयोजनाभिधानायाऽऽ–**अथवा** इति, विविक्तानामसाधुत्वविप्रमुक्तानां शब्दानां प्रयोगात्तत्त्वज्ञानं, तद्द्वारेण च परमपदं भवेत्, यत उक्तं—

> "द्वे एव ब्रह्मणी ज्ञेये, परं चाऽपरमेव च ।
> शब्दब्रह्मणि निष्णातः, परं ब्रह्माऽधिगच्छति ॥ १ ॥"

इति । शब्दब्रह्म शब्दतत्त्वं तच्च शब्दानुशासनादेव ज्ञायते, अत्र च शब्दा अभिधेयाः, सम्यग्ज्ञानमनन्तरं प्रयोजनं, परम्परं तु परमपद प्राप्तिरिति ।

---

१ कलिकालसर्वज्ञविरचितान्ययोगव्यवच्छेदिकायाम् । २ उ ५६४ । ३ मत्सरः । ४ ७–२–४ । ५ ५–३–१३२ । ६ ५–३–१३० । ७ स्तुतिकारोऽप्याह–' नयास्तव स्यात्पदलाञ्छना इमे रसोपविद्धा इव लोहधातवः । भवन्त्यभिप्रेतफला यतस्ततो भवन्तमार्याः प्रणता हितैषिणः ॥ १ ॥ इति सामंतभद्राचार्यकृतश्रीविमलनाथस्तवे । ८ ५–१–१७१ । ९ ३–२–१५५ ।

यतः शब्दानुशासनात्पदसिद्धिरर्थनिर्णयः तस्मात् तत्त्वज्ञानं तस्माच्च परं श्रेयः। सम्बन्धस्त्वभिधेय–प्रयोजनयोः साध्यसाधनभावः । शब्दानुशासनाभिधेययोस्त्व-भिधानाभिधेयभावः, स च तयोरेवाऽन्तर्भूतत्वात्पृथङ् न दर्शित इति ॥ १–१–२ ॥

'लोकात्' । १–१–३ ॥ लोकान् आलोकते सर्वभावाननन्तज्ञानोऽस्मिन्निति "व्यञ्जनाद् घञ्" इति घञि, आलोक्यते तत्त्वनिश्चया वेति 5 "भावाकर्त्रोः" इति घञि, लोकते सर्वपदार्थान् इति "अच्" वाऽचि लोकः तस्माद् "गम्य यपः कर्माधारे" इति पञ्चमी । 'उक्तातिरिक्तानाम्' इत्यादि–उक्ताभ्योऽतिरिक्ता उक्तातिरिक्ता अधिकास्तासां पूर्वापरीभूतावयवाक्रिया, विशेषणं–गुणः । "सत्त्वे निविशतेऽपैति, पृथग्जातिषु दृश्यते । आधेयश्चाऽक्रियाजश्च, सोऽसत्त्वप्रकृतिर्गुणः ॥ १ ॥" इति वा विशेष्यं-द्रव्यम् । "आकृतिग्रहणाज्जाति– 10 लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या, गोत्रं च चरणैः सह ॥ १ ॥" इति जातिः । त्रुट्यादिलक्षणः–कालः । अयमियमिदमिति यतस्तत्पुंस्त्रीनपुंसकरूपं लिङ्गम् । "अविकारोऽद्रवं मूर्त्तं, प्राणिस्थं स्वाङ्गमुच्यते । च्युतं च प्राणिनस्तत्त–न्निभं च प्रतिमादिषु ॥ १ ॥" इति स्वाङ्गम् । एकाद्यभिधानप्रत्ययहेतुः संख्या । "ऊर्ध्वमानं किलोन्मानं, परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्, 15 संख्या बाह्या तु सर्वतः ॥ १ ॥" इति परिमाणम् । अपत्यं पुत्रपौत्रादि । क्रिया-गुणद्रव्यैर्युगपत्प्रयोक्तव्याप्तुमिच्छा वीप्सा । अदर्शनं लुक् । अष्टादशभेदोऽकारादि-समुदायोऽवर्णः । आदिशब्दादिवर्णादिपरिग्रहः ॥ तथा संवृतस्याऽप्यकारस्य स्वसंज्ञा-प्रसिद्ध्यर्थं विवृतत्वमपीति वैयाकरणाः । तथा संयोगविभागयोरनपेक्ष्य कारणं कर्म–उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनरूपं सा क्रिया, द्रव्याश्रयी गुणो, गुणाश्रयो 20 द्रव्यं, अनुवृत्तप्रत्ययहेतुः–सामान्यं जातिः, परापरादि–प्रत्ययहेतुः कालः, अनुमानं लिङ्गं, स्वाङ्गारम्भकमवयवरूपं स्वाङ्गं, अणुमहदादिप्रत्ययहेतुः परिमाणमितिप्रामाणिकाः । अत्राऽऽदिशब्दाज्ज्योतिषिकच्छान्दसादिपरिग्रहः ।

'परान्नित्यम्' इति तथाहि–वनानीत्यादौ "शसोऽता०" इति दीर्घं बाधित्वा परत्वात् "नपुंसकस्य शिः" इत्येव भवति, तस्मान्नित्यं बलीयः–यथा स्योन इत्यत्र परमपि 25 गुणं बाधित्वा नित्यत्वादूट् । तथा नित्यादन्तरङ्गं यथाऽत्रैवोटि कृते नित्यमपि गुणं बाधित्वाऽल्पाश्रितत्वेनाऽन्तरङ्गत्वाद्यत्वं, तथाऽन्तरङ्गादनवकाशं यथा—गर्ग-

---

१ ५–३–१३२ । २ ५–३–१८ । ३ ५–१–४९ । ४ २–२–७४ । ५ १–४–४९ । ६ १–४–५५ ।

स्याऽपत्यानि यञ् तेषां छात्रा "दोरीयः[1]" इत्यतो "वहुष्वस्त्रियाम्[2]" इति यञि लुप्, "न प्राग्जितीये[3]०" इति तन्निषेधश्च प्राप्नुतः परमनवकाशत्वात् "न प्राग्जितीये[3]०" इत्येव प्रवर्तते ततो गार्गीया इति सिद्धम् । तथा परादन्तरङ्गमपि यथा–सिवेः "स्यैधापन्यनि[4]०" इति नेऽपवादत्वाद्गलोपं बाधित्वा गुणात्पूर्वं नित्यत्वादूटि च कृते परत्वाद्गुणे प्राप्तेऽन्तरङ्गत्वात्तं बाधित्वा यत्वं भवति स्योनं[5] इति ।

एतासां क्रियादीनां नीयते संदिग्धोऽर्थ [ निर्णयपदम् ] एभिरिति "न्यायावा[6]-याध्यायोद्याव०" इति निपातनात्, न्यायाः–युक्तयः, तेषां च शास्त्रस्य, "क्रियार्थो[7]धातुः" "गुणादस्त्रियां[8] नवा" "जातिकाल[9]सुखादेर्नवा" "स्वाङ्गादे[10]रकृतमित०" इति । "संख्यानां[11] ष्णाम्" "परिमाणात्[12]तद्धित०" इति, "ङसोऽपत्ये[13]" "वीप्सायां[14]" "लुगस्यादे[15]त्यपदे०" "अवर्णस्ये[16]वर्णा०" इति, "इवर्णादे[17]रस्वे स्वरे०" इत्यादिकस्य प्रवृत्तये सिद्धिर्वेदितव्या, 'वर्णसमाम्नायस्य च' सिद्धिः । सम्यगाम्नायन्तेऽभ्यस्यन्ते वर्णा अस्मादिति "भावाकर्त्रोः[18]" इति घञि समाम्नायः, वर्णानां समाम्नायःपाठक्रमः, स च–अकारादिस्वराः १४ । अं अः इत्यनुस्वारविसर्गौ २ । अनुस्वारोपलक्षितोऽनुनासिको १ । विसर्गोपलक्षितौ जिह्वामूलीयोपध्मानीयौ २ । अल्पविषयत्वेन चैषामुपलक्षणं कृतं न तु साक्षात्पाठः । कादिव्यञ्जनानि च ३३ इत्येवं द्विपञ्चाशदक्षरात्मको लोकप्रसिद्धो मातृकारूपो ज्ञेयो, न ह्यस्माभिर्नूतनोऽज्झलादिरूपो विधेयः । सर्वज्ञप्रणीतकेवलिकादिशास्त्रेषु, ऐन्द्रेशानादिव्याकरणेषु चाऽच्हलादिरूपस्याऽप्रसिद्धेः । एकस्मिन्नेव च पाणिनिव्याकरणे तस्य प्रसिद्धेः, तथाहि–अइउण्, ऋऌक्, एओङ्, ऐऔच्, हयवरट्, लण्, ञमङणनम्, झभञ्, घढधष्, जबगडदश्, खफछठथचटतव्, कपय्, शषसर्, हल् इति प्रत्याहारः । आदिरन्त्येनेता सह मध्यवर्णानां ग्राहक इति । अण्–अइउवर्णाः, अक्–समानाः, एङ्गुणः, ऐच् वृद्धिः, अच् स्वराः, हल् व्यञ्जनानीत्यादि । अयं तु क्रमः कष्टगम्यस्ततः प्रसिद्धो वर्णसमाम्नायः, प्रसिद्धाश्च स्वरादिसंज्ञा अस्माभिरादृताः । तत्रेति वर्णसमाम्नाये स्वरादयः प्रस्तूयन्ते ।

'औदन्ताः स्वराः' । १–१–४ ॥ अत्र औकारेण अवयवेन विग्रहसमुदायः, अकारादिश्चतुर्दशवर्णरूपोऽन्यपदार्थसमासस्याऽर्थः, अत एवाऽत्र लम्बकर्ण इत्यादिवत्तद्गुणसंविज्ञानो बहुव्रीहिः, न तु चित्रगुरित्यादिवदतद्गुणसंविज्ञानः । "प्रश्नार्चा[19]०" इत्या-

---

१ ६–३–३२ । २ ६–१–१२४ । ३ ६–१–१३५ । ४ उ. २५८ । ५ स्योनम्—सुखम् समुद्रः सूर्य. इत्यादयः । ६ ५–३–१३४ । ७ ३–३–३ । ८ २–२–७७ । ९ ३–१–१५२ । १० २–४–४६ । ११ १–४–३३ । १२ २–४–३३ । १३ ६–१–२८ । १४ ७–४–८० । १५ २–१–११३ । १६–१–२–६ । १७ १–२–२१ । १८ ५–३–१८ । १९ ७–४–१०२ ।

दिसूत्रे सन्ध्यक्षरग्रहणात्तत्र हि सूत्रे "सम्मर्त्यसूयाकोप०" इत्यादिसूत्रादधिकारागतस्य स्वरेष्विति पदस्यार्थवशाद्विभक्तिपरिणामेन स्वरस्येति परिणामात् स्वररूपः सन्ध्यक्षरः प्लुतो भवतीति सूत्रार्थः । अतद्गुणसंविज्ञाने तु औकारस्य स्वरसंज्ञत्वाभावे संध्येयैदै-दोदित्येवं क्रियते न तु सन्ध्यक्षरस्येति । ज्ञापकं चाऽत्र, "अष्ट और्जसूशसोः," "आतोणव औः," "उत औविति व्यञ्जनेऽद्वेः" इत्यादि । औकारस्य हि स्वरत्वा- 5
भावे अष्ट औः इत्यादिसूत्रेषु "स्वरे वा" इत्यनेन यलोपो न स्यात् । तकार इति उच्चार्यते स्वरूपेण स्वीक्रियतेऽनेनेत्युच्चारणं स्वरूपपरिग्रह इति भावः । तपरत्वान्नि-र्देशस्य औदित्युक्ते औकारस्य स्वरूपं प्रतीयते, तकाराभावे तु आवन्ता इति कृते कष्टा-प्रतीतिः स्यात् । ननु औदित्युक्तेऽपि "विशेषणमन्तः" इति सूत्रवशात् औदन्ता वर्णा इति लप्स्यते, किमन्तग्रहणेनेति ? नैवं, उदात्तादिभेदेनाऽपि 10
बहुवचनस्य चरितार्थत्वेन औदन्ता अकाराद्या वर्णा इति न लभ्येत, ततो दधि नौः इत्यत्र नौशब्दस्य स्वरत्व इकारस्य यत्वे च दध्यनौः इत्यनिष्टं रूपं स्यात्; एवं "लृदन्ताः समानाः" इत्यत्राऽप्यन्तग्रहणफलं ज्ञेयं । न तु लृकारः क्लृपिस्थ एव प्रयुज्यते, न च लृकारस्य स्वरसंज्ञाफलमस्ति, लृकारस्य तु प्रयोगोऽपि न क्वाऽपि दृश्यत इति ? नैवम्, क्लृप्तः इत्यत्र "अदीर्घाद्विरामैक०" इति द्वित्वस्य, क्लृ३प्तशिख 15
इत्यादौ प्लुतस्य चाऽधिकारागतस्वराश्रितस्य दर्शनात्,*.... काराविल्यत्र इकारस्य च लृकारे स्वरे यत्वविधानात्, प्रदेशा इति प्रदिश्यन्ते-कथ्यन्ते संज्ञाप्रयोजनानि एष्विति "व्यञ्जनाद्घञ्" इति घञि प्रदेशाः प्रयोजनस्थानानि ।

'एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः' । १-१-५ ॥ इति एकेति "सर्वादयोऽ-स्यादौ" इति पुंवद्भावः । मात्रेति निमेषोन्मेषक्रियापरिच्छिन्न उच्चारणकालो मात्रा, 20
ऐदौतौ चतुर्मात्रावपीत्यन्ये, इति शेषा हि पादाः । अर्धमात्रिकयोरिति, अर्धं मात्राया अर्धमात्रा साऽस्त्यनयोरिति, "व्रीह्यादिभ्यस्तौ" इतीके अर्धमात्रिके तयोः । तितउ-च्छत्रमित्यत्र तु विधानबलादोत्वं न भवति । अन्यैः कालापकाद्यैर्दीर्घसंज्ञाऽपि कृता नास्ति, ततोऽत्र संज्ञाद्वयेऽपि सन्देहः । यद्वा अ आ इत्यादौ क्रमेण ह्रस्वदीर्घसंज्ञा दृष्टा, ए ऐ इत्यादावपि किं तथैवेत्याशङ्कायामाह-सन्ध्यक्षराणां त्वित्यादि । 25

'अनवर्णा नामी' १-१-६ ॥ न विद्यतेऽवर्णो येष्वौदन्तेषु तेऽनवर्णाः, ननु संज्ञिसमानाधिकरणत्वेनौदन्ताः स्वरा इतिवन्नामिन इत्येवं बहुवचननिर्देशो युज्यते ?,

१ ७-४-८९ । २ १-४-५३ । ३ ४-२-१२० । ४ ४-३-५९ । ५ १-३-२४ । ६ ७-४-११३ । ७ १-१-७ । ८ १-३-३२ । ९ ७-४-९९ । १० ५-३-१३२ । ११ ३-२-६१ । १२ ७-२-५ ।

उच्यते, वचनभेदेन संज्ञां कुर्वन्नेवं ज्ञापयति यत्र नामिनः कार्यं विधीयते तत्र यदि कार्यात्कार्यी स्वरो न्यूनो भवति तदैव नामिसंज्ञा प्रवर्तते नाऽन्यथा, तेन ग्लायति-म्लायतीत्यादौ न गुणोऽत एव तत्राऽऽह । ऐकारोपदेशबलान्नामित्वाभावाद्गुणाभाव इति । विशेषणविशेष्यभावस्तु सामान्यविशेषभावेन यथा पञ्चादौ घुट्, वेदाः प्रमाण-
5 मिति एवं " अं अः ✕ क ✕ पशषसाः शिट् " इत्यादावपि द्रष्टव्यं । अत्रोत्तरयोश्च सूत्रयोर्बहुवचनं प्लुतसंग्रहार्थं, नामित्वे च निरुष्कुल इत्यादौ षत्वं सिद्धं ।

'लृदन्ताः समानाः' । १-१-७ ॥ उदात्तानुदात्तस्वरितसानुनासिकनिरनुनासिकभेदादष्टादशधा भिद्यन्तेऽवर्णादयः, तेन सम्यगनिति प्राणितितुल्यत्वप्रतीतिरनेनेति । समानं तुल्यं मानं परिमाणं परिच्छेदो येषां " समानस्य धर्मादिषु " इति सादेशे
10 समानाः परस्परविलक्षणमाकारं बिभ्राणा अपीति । अत्राऽनवर्णा इति नाऽनुवर्तते, कादिरित्यादाववर्णस्य समानसंज्ञाफलभूतदीर्घत्वदर्शनात्, तथा क्लृ ऋकारः क्लृऋकारश्चेति द्विधाऽपि क्लृकार इत्यत्र ऋवर्णस्य समानसंज्ञत्वे दीर्घत्वं सिद्धम् ।

'एऐओऔ सन्ध्यक्षरम्' । १-१-८ ॥ न क्षरतीति वा " ज्वलि० " इति णप्रत्ययस्य विकल्पेन विधानादचि अक्षरं सन्धौ सत्यक्षरं सन्ध्यक्षरं, तथाहि-अवर्णस्येवर्णेन सन्धौ एकारः [ एकारैकाराभ्यामैकारः ] अवर्णस्योवर्णेन ओकारः ओकारौकाराभ्यां च औकार इति ।
15

'अं अः अनुस्वार विसर्गौ' । १-१-९ ॥ विसृज्यते-विरम्यत इति घञि विसर्गः, कर्मप्रत्ययोपलक्षणं चेदं, तेन विसृष्टो विसर्जनीय इत्यपि संज्ञाद्वयं द्रष्टव्यं ।

'कादिर्व्यञ्जनम्' । १-१-१० ॥ आदीयते-गृह्यतेऽर्थोऽस्मादित्यादिः, स च
20 सामीप्य(१)व्यवस्था(२)प्रकार(३)अवयवेषु(४) वर्तते, तत्र गङ्गादौ घोष इति सामीप्ये[१], ब्राह्मणादयो वर्णा इति व्यवस्थायां[२], आद्या देवदत्तादय इति प्रकारे[३], स्तम्भादयो गृहा इत्यवयवे[४], सामीप्यवाचकस्याऽऽदिशब्दस्य ग्रहणे ककारस्य व्यञ्जनसंज्ञा न स्यात्, उपलक्षणस्य कार्येऽनुपयोगात्, यथा-चित्रगुरानीयतामित्युक्ते चित्रगवोपलक्षितः पुमानेवाऽऽनीयते, न तु चित्रा गौरिति; व्यवस्थार्थोऽपि न घटते वर्णसमाम्नायस्य व्यवस्थित-
25 त्वेन व्यभिचारासम्भवः, व्यभिचारे च विशेषणमर्थवदिति हि न्यायः । कादीनां परस्परमत्यन्तवैसदृश्यात् प्रकारार्थोऽपि न घटते । अवयवार्थवृत्तिस्तु संगच्छते-ककार आदिरवयवो यस्य वर्णसमुदायस्य स कादिः, अत एवाऽत्र तद्गुणसंविज्ञानो बहुव्रीहिः,

---

१ १-१-१६ । २ ३-२-१४९ । ३ ४-२-३२ । ४ प्रकारो हि भेदसादृश्ये ।

समुदायस्याऽवयवित्वे समवेतत्वान्न्यग्भूतावयवत्वेन समुदायप्राधान्यादेकवचनं, संज्ञि-
सामानाधिकरण्येऽपि स्मृतयः प्रमाणमितिवदाविष्टलिङ्गत्वाद् व्यञ्जनमिति नपुंसकत्वं,
व्यज्यते-प्रकटीक्रियतेऽर्थोऽनेनेति व्यञ्जनं, स्वराणामर्थप्रकाशने उपकारकं यथा सूपा-
दीन्योदनस्येति व्यञ्जनसादृश्यादन्वर्थं चेदं नामेति। कस्याऽऽदिः कादिरिति व्यव-
स्थावाच्यप्यादिशब्दस्तेन स्वराणां न व्यञ्जनसंज्ञा, अनुस्वारविसर्गयोस्तु भवति। 5
ततोऽनुस्वारस्य व्यञ्जनसंज्ञायां संस्कर्ता इत्यादावनुस्वाररूपव्यञ्जनात्परस्य सस्य
"धुँटो धुटि स्वे वा" इत्यनेन लुक् सिद्धो, विसर्गस्य तु व्यञ्जनत्वे सुपूर्वस्य दुःख-
यतेः क्विपि णिलुकि सेश्च लुकि "पदस्य" इति विसर्गरूपसंयोगान्तस्य खस्य लुक्
सिद्धस्ततो विसर्गस्य कस्याऽऽदिरितिव्युत्पत्त्या धुट्त्वे "घुटस्तृतीय" इति स्थान्या-
सन्ने गत्वे सति सुदुग् इति सिद्धम्। 10

'अपञ्चमान्तःस्थो धुट्'। १-१-११ ॥ धुट्छब्दो विषयनामत्वात्पुंलिङ्गः,
एवमुत्तरत्र घुट्छब्दोऽपि द्रष्टव्यः।

'पञ्चको वर्गः'। १-१-१२ ॥ सजातीयसमुदायो वर्गः, स चाऽवर्गकवर्गादि-
भेदेनाऽष्टधा, वर्णसमाम्नाये केवलिकादिशास्त्रेषु च प्रसिद्धः। तत्र च यः पञ्चसंख्य-
त्वेन व्यवस्थितस्तस्येह वर्गसंज्ञेति, अत आह कादिष्विति। यो य इति संज्ञिनां बहु- 15
त्वादगृहीतवीप्सोऽपि पञ्चकशब्दो वीप्सां गमयतीति। वृणोत्यात्मीयमेकत्वेन व्यव-
स्थापयति, "गम्यमि०" इति गे, वर्गः जात्यपेक्षमेकवचनम्।

'आद्यद्वितीय शषसा अघोषाः'। १-१-१३ ॥ इति घुष् इत्यस्य "भावा-
कर्त्रोः" इति घञि, घुषृण् "युवर्णे" इत्यलि वा घोषः, अविद्यमानो घोषो येषां
यथाऽनुदरा कन्येति। ननु लाघवार्थं समाहार एव युक्तो यतो मात्रालाघवमप्युत्स- 20
वाय मन्यन्ते वैयाकरणा इत्याह बहुवचनमिति।

'अन्यो घोषवान्'। १-१-१४ ॥ घोषो ध्वनिर्विद्यते यस्य स तथा, अन्वर्थता
च तुल्यस्थानास्येत्यत्र दर्शयिष्यते, घोषवानिति जातिनिर्देशः, अघोषापेक्षया चाऽ-
न्यत्वं तेन येषामतिशायी घोषस्तेऽन्यत्वजात्यध्यासिता घोषवन्त इत्यर्थः।

'यरलवा अन्तःस्थाः'। १-१-१५ ॥ लिङ्गमशिष्यं लोकाश्रयत्वादिति, वर्ण- 25
विशेषणमप्यन्तस्थाशब्दः स्त्रीलिङ्गो बाहुलकात् शब्दशक्तिस्वाभाव्याद्बहुत्ववृत्तिश्च
प्राय इति। यरलव इतीति–अर्थवत्त्वाभावे नामत्वाभावान्न स्यादिः।

---

१ १-३-४८। २ २-१-८९। ३ २-१-७६। ४ उ ९२। ५ ५-३-१८। ६ ५-२-२८।

'अं अः ᳵ क ᳶ पशषसाः शिट्' १-१-१६ ॥ देशकाललिपिभेदेऽपि रूपाभेदाद्दृष्टान्तमाह–वज्राकृतिरिति । वज्रस्येवाऽऽकृतिर्यस्येति स तथा, गजकुम्भयोरिवाऽऽकृतिर्यस्य सोऽपि तथा, ककारपकारौ चाऽनयोः परदेशस्थावुच्चार्येते, सर्वत्र परसम्बद्धावेवैतौ भवतो न स्वतन्त्रौ, नाऽपि पूर्वसम्बद्धावनुस्वारवदिति । रेफदेशत्वात्कखपफसंनिधावेव तयोः प्रयोगादल्पविषयत्वम्, अत एव सत्यपि संज्ञिसामानाधिकरण्येऽल्पीयस्त्वज्ञापनाय शिडित्येकवचनेन निर्देशः कृतः । अथ कथमनयोर्वर्णत्वम्? वर्णसमाम्नाये पाठाभावात्, सत्यं; रेफस्य वर्णत्वात्तयोश्च रेफादेशत्वाद्वर्णत्वसिद्धिः । न च वर्णादेशत्वेन लोपस्याऽपि वर्णत्वमाशङ्कनीयम्, तस्याऽभावरूपत्वात्; न चाऽभावोभावस्याऽऽश्रयो भवितुमर्हति अतिप्रसङ्गात् । अयमेवाऽर्थो बहुवचनेन सूच्यते, अनुवाकत्वेन तस्य साधकत्वाभावात् इत्याह–बहुवचनमिति । ननु कथं ᳵ क ᳶ पयोर्व्यञ्जनसंज्ञाऽपि–पूर्वेषामस्ति तत्कथं तैः सह न विरोधः? उच्यते, व्यञ्जनसंज्ञानन्तरमेषां संज्ञाविधानाद् व्यञ्जनसंज्ञाऽपि, यदि वा कादिर्व्यञ्जनमित्यत्राऽऽवृत्त्या कस्याऽऽदिर्योऽनुस्वारो विसृष्टो वा सोऽपि व्यञ्जनमित्यविरोध इति ।

'तुल्यस्थानास्य प्रयत्नः स्वः'। १-१-१७ ॥ प्रायो णिजन्ता चुरादावतुलेः [ चुरादौ तुलेः ] तोल्यतेऽनयेति "भिदाद्यङ्[1]" [ इत्यनेन ] तुला, अस्यति–क्षिपति वर्णाननेनेत्यास्यम्; प्रयत्नः उत्साहः । नासिकोष्ठौ चेति व्यस्तावेतौ, समासे तु "प्राणितूर्य०[2]" इति समाहारः स्यात् । तरतीति तालुः "कॄतॄशॄभृभादिभ्यो रोलश्च[3]" इत्यनेन णिदु प्रत्यये रेफस्य च लत्वे तालु । कलयतीषदास्यभावमित्यच्, अल्पाद्यर्थे कपि णके वा कुईपत्कलके "अल्पे[5]" इति कादेशः, काकलक इति संज्ञा यस्य स तथा, ग्रीवायामुन्नतप्रदेशः आन्तर इत्यन्तरा भवो "भवे[6]" अण इति अन्तर्जातो वा, भवे तु अर्थे "दिगादित्वाद्यः[7]" स्यात् । स्पृश्यन्ते स्म स्पृष्टा वर्णास्तेषां भावः स्पृष्टता, वर्णानां प्रवृत्तिनिमित्तं स्पृष्टताहेतुत्वात्प्रयत्नोऽपि स्पृष्टता; "अभ्रादिभ्य[9]" इति अ प्रत्यये वा प्रयत्नानां संज्ञा इमा यथाकथञ्चिद् व्युत्पाद्यन्ते एवं सर्वत्र । एवमीषत्स्पृष्टतादि । विव्रियन्तेस्म विवृता वर्णास्तेषां भावः, ईषद्विव्रियन्ते स्म । करणमिति वर्णोत्पत्तिकाले स्थानानां प्रयत्नानां च सहकारि कारणं । सर्वं मुखं स्थानमस्य, मुखस्थितानि सर्वाण्यपि स्थानान्यवर्णस्येत्यर्थः । कण्ठताल्व्याविति कण्ठतालुनि भवौ दे...स[देहांशाद्यः] समुदायादपि यः । सृक्क स्थानः इति सृक्वन्शब्द ओष्ठपर्यन्ते वर्तते । स्पृष्टं करणमिति स्पृश्यन्ते वर्णा अस्मिन्नित्यौणादिके

---

१ ३-४-१७ । २ ५-३-१०८ । ३ ३-१-१२७ । ४ तृप्लवनतरणयोः । ५ उ-७२७ । ६-३-२-१३६ । ७ ६-३-१२३ । ८ ६-३-१२४ । ९ ७-२-४६ ।

" शीरी[1] " इत्यादिबहुवचनसामर्थ्यात् किति ते स्पृष्टं स्पृष्टता गुणः, स्पृष्टतानुगतं करणं कृतिरुच्चारणप्रकारः; एवमीषत्स्पृष्टं करणम् इत्यादावप्युत्तरत्र द्रष्टव्यम् । **स्वरेषु ए ओ विवृततराविति** इत्यत्र विवृततरताऽतिविवृततरताऽतिविवृततमतारूपाणां प्रयत्नान्तराणां सद्भावात् सप्तधा प्रयत्न इति वक्तुमुचितं कथं चतुर्धेत्युक्तं ? सत्यं, विवृततरतादीन्यपि विवृततया परिगृह्योक्तं चतुर्धेति, विशेषस्य सामान्येऽन्तर्भावात् । 5
**अकारः संवृत इत्यन्ये**, अतिसंवृताख्यं[2] पञ्चमं प्रयत्नमन्ये मन्यन्ते, इत्युत्पत्त्यर्थः [इत्यर्थः] । अकारं संवृतं शिक्षायामेके[3] पठन्ति, तेनाऽकाराऽऽकारयोर्भिन्नप्रयत्नत्वात् स्वसंज्ञा न प्राप्नोति । अतिविवृत एवाऽत्र प्रतिज्ञायते, प्रयोगे तु संवृत एवाऽसौ स्वरूपेणेत्यन्य इत्युक्तं । **सानुनासिकेति** नासिकानुगतो यो वर्णधर्मः, सह तेन वर्तते यो वर्णः स तथा । निर्गतोऽनुनासिकाद्यः स तथा । स्वरः संजातो येषां ते स्वरिताः । 10
यथाकथञ्चिद् व्युत्पत्तिः । अनुनासिक इति, अनुनासिको धर्मोऽस्याऽस्तीति " अभ्रादित्वादः,[4] " तद्धर्मरहितोऽननुनासिक इति, **रेफोष्मणां त्विति**, अन्यवर्णापेक्षया तेषां स्वत्वाभावो रेफस्य रेफः स्वो भवत्येव । एवमूष्मणामपि स्वा न भवन्तीति । ननु वर्णानां तुल्यास्यप्रयत्नत्वे कथं श्रुतिभेदः ? उच्यते—कालपरिमाणकृतगुणभेदाच्छ्रुतिभेदः तथाहि—यावता कालेनाऽक्ष्ण उन्मेषो निमेषो वा भवति तावत्कालो मात्रा, 15
मात्राकालो वर्णो मात्रिको, द्विस्तावान् द्विमात्रः, त्रिस्तावान् त्रिमात्रः अर्धमात्राकालं व्यञ्जनं, तदिदं वर्णेषु चतुर्विधं कालपरिमाणं भेदकृद् भवति । **ते ह्यासन्न इत्यत्रै**-**वेति** । आसन्न इत्यत्राऽपि महाप्राणस्यैवाऽवकाशः, अन्येषां च वेदे प्रयोजनम् । **श्वासनादावित्यादि**, श्वासादय एव ध्वनिविशेषण नादादय उत्पद्यन्ते, इति युगलकेनोक्ताः । **वायुना कोष्ठ इति**, कोष्ठे—उदरे, **शिक्षामिति** शिक्ष्यतेऽस्या इति 20
" क्तेटोगुरोर्व्यञ्जनाद् [5] " इति अप्रत्यये शिक्षा । **संवृतेत्विति** संकुचिते कण्ठबिले **नादध्वनिसंसर्गादिति** नादः प्रयत्नो ध्वनिः शब्दस्तयोः संसर्गात् । **निग्रह इति** निश्चितो ग्रहः, श्रसनं—शैथिल्यम् । **वर्ण[ निष्पत्ति ]कालभावेति**—अल्पस्वरत्वेन[6] भावशब्दस्य पूर्वनिपातः । **विवृतकण्ठा इति**—विवृतो विवाराख्यप्रयत्नेन संस्कार्यः कण्ठो येषां ते तथा । **अघोषा इति**—अघोषताख्यप्रयत्नेन संस्कार्याः । **घोषवन्त** 25
**इति**—घोषवत्ताप्रयत्नेन संस्कार्याः । अरुक् श्योततीति रुजे रुचेर्वा कर्त्रभावे वा क्विप् ।

**'स्यौजसमौ०'** । १-१-१८ ॥ त्रयी त्रयीति—भवनक्रियायां वीप्सा, विशेषणार्था इति विशेषणं विशेषो—व्यवच्छेद इति यावत् तत्प्रयोजना इत्यर्थः, बहुवचनमिति—

---

१ उ २०१ । २ संवृततराख्यं पञ्चमं इति लघुन्यासे । ३ पाणिनीयशिक्षायाम् । ४ ७-२-४६ । ५ ५-३-१०६ । ६ ३-१-१६० इत्यनेन ।

तदादेशास्तद्वद्भवन्तीति न्यायात् साध्यसिद्धिर्भविष्यति किं बहुवचनेन ? सत्यं, न्यायं विनाऽपीत्थं साधितं, इयं हि महती शक्तिर्यत्परिभाषां न्यायांश्च विना साध्यत इति।

'स्त्यादिर्विभक्तिः'। १-१-१९ ॥ विभज्यन्ते विभागशः प्रकाश्यन्ते कर्तृकर्मादयोऽर्था अनयेति "[1]श्वादिभ्यः" इति क्तिः। अनुबध्यते कार्यार्थमुपदिश्यत इत्यनुबन्ध। इत उत्सृष्टः-त्यक्तोऽनुबन्धो येन यस्य वा स तथा तस्य। व्यवस्थावाचीति तेन ये यदनुबन्धा यावन्तो विभक्तिसंज्ञायां पूर्वाचार्यैर्व्यवस्थापितास्त एव तदनुबन्धा एव तावन्त एवाऽनुगृह्यन्त इति।

'तदन्तं पदम्'। १-१-२० ॥ पद्यते-गम्यते कारकसंसृष्टोऽर्थोऽनेनेति पदं "[2]वर्षादयः" इत्यल्। नन्वन्तग्रहणं किमर्थं ? सत्यं, न चाऽसत्यन्तग्रहणे सा पदमिति कृते स्यादेरेव पदसंज्ञा स्यात्ततश्चाऽग्निष्वित्यादौ पदमध्ये विधीयमानं षत्वं पदादौ न स्यादिति वाच्यम्, "प्रत्ययः [3]प्रकृत्यादेः" इति परिभाषया तदन्तविधेर्लब्धत्वादिति ? सत्यं, पदसंज्ञायामन्तग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणेन तदन्तप्रतिषेधार्थं, अन्यथा "प्रत्य[3]यः प्रकृत्यादेः" इति परिभाषया स्याद्यन्तस्य विभक्तिसंज्ञा स्यात्, तस्यां च सत्यां काष्ठगृहं युष्मत्पुत्राणामित्यादौ काष्ठशब्दस्य गृहमिति विभक्त्या पदत्वे ततः परस्य युष्मदः स्थाने पुत्राणामिति विभक्त्या सह वसादेशः स्यादित्यतिव्याप्तिः, ददाति नः शास्त्रमित्यादौ च ददातीत्यादेर्विभक्तिसंज्ञकत्वेन पदाभावान्नस् न स्यादित्यव्याप्तिरिति ते मा भूतामित्यन्तग्रहणम्।

'नामसिदय्व्यञ्जने'। १-१-२१ ॥ नमति धातवे इति, नमति प्रह्वीभावं गच्छत्यर्थं प्रति इति, "सात्[4]मन्नात्मन्" इति निपातनान्नामशब्दः साधुः। वेति विशिष्टार्थप्रतीतिं जनयतीति विः, "नीवी[5]प्रह्भ्यो" डिदिति डिद् इः। ऊर्णायुरिति-अत्र पदत्वात् "अवर्णे[6]वर्णस्य" इत्यनेन आलोपो न भवति, तत्र "नोऽप[7]दस्य" इत्यतोऽपदस्येत्यधिकारागमनात्। दृक्त्वमिति-पश्यतीति दर्शनमिति-दृश्यतेऽनयेति वा क्विपि दृश्। यज्वेति-इष्टवान् यज्वा "सुयजो [8]ङ्वनिप्"। ननु नामसिदय्व्यञ्जन इत्येव क्रियतां किं य वर्जनेन ? न च वाच्यतीत्यादावपि पदसंज्ञाप्राप्तिरिति वाच्यं, यतो व्यञ्जनद्वाराऽनेनैव राजीयतीत्यादौ पदत्वे सिद्धे "नं [9]क्ये" इति सूत्रं नियमसूत्रतया व्याख्यास्यते, नकारान्तमेव क्यप्रत्यये पदसंज्ञं भवति नाऽन्यदिति, नान्तं क्यप्रत्यय एव पदं न प्रत्ययान्तर इति विपरीतनियमोऽपि कथं न भवति ? तथा च राजा सीमेत्यादा-

१ ५-३-९२। २ ५-३-२९। ३ ७-४-११५। ४ उ-९१६। ५ उ ६१६। ६ ७-४-६८। ७ ७-४-६१। ८ ५-१-१७२। ९ १-१-२२।

वपि पदत्वं न स्यादिति चेत् तन्न " युवाखलति " इत्यादिनिर्देशात्, सत्यं, यवर्जनाभावे सत्सु साधु सत्यमित्यादिषु नामसिदिति पदसंज्ञा स्यादित्येतदर्थं यवर्जनमिति। राजतेत्यादि, सौश्रुतमित्यादौ नियमस्य चरितार्थत्वात् पयोभ्यामित्यादौ चाऽयूव्यञ्जनमित्यस्य राजताद्यक्त्वमित्यत्रोभयप्राप्तौ " स्पर्धे परम् " इति न्यायाद् व्यञ्जनाश्रितं पदत्वं भवति। 5

'नं क्ये'। १-१-२२॥ चर्मायतीति चर्मणः प्रागतत्त्वासम्भवाद् च्व्यर्थाभावे क्यङ्ष् न प्राप्नोतीति तद्वद्वृत्तेश्चर्मन्शब्दात्प्रत्ययः। अचर्मवान् चर्मवान् भवतीति, यथा निद्रायतीत्यादि। अयितीति-अन्तर्वर्तिन्या विभक्त्या " तदन्तं पदम् " इति पदत्वं प्राप्तं तत्सित्येवेति नियमेनाऽपोदितमपि व्यञ्जन इत्यंशेन पुनः प्रसृतम्, ततोऽयिति प्रतिषेधेन प्रतिषिद्धमनेन प्रतिप्रसूयते। 10

'नस्तं मत्वर्थे'। १-१-२३॥ मतुर्मत्वर्थोऽर्थो यस्येति समानाधिकरणो बहुव्रीहिः। यथोष्ट्रो मुखमस्येत्युष्ट्रमुख इत्यत्र, नहि प्राणी प्राण्यन्तरस्य साक्षान्मुखं भवतीति सामर्थ्यात्सादृश्यप्रतीतिः, समग्रेण चोष्ट्रेण सह सादृश्याभावादुष्ट्रशब्दोऽवयवे वर्तते, मुखेनैव मुखसादृश्यं प्रसिद्धमिति सामर्थ्यान्मुखमिव मुखमस्येत्यर्थोऽवतिष्ठते, एवमिहाऽर्थेन मतुशब्दस्याऽर्थेन सामानाधिकरण्यमनुपपद्यमानं मतुशब्दं मत्वर्थवृत्तिं गमयतीत्युक्ते मतोरपि। मतुशब्दस्याऽपि मत्वर्थाव्यभिचारान्मत्वर्थेन ग्रहणमिति। 15 पेचुष्मानिति-" स्थानीवाऽवर्णविधौ " इति न्यायेनाऽपदसंज्ञस्याऽऽदेशोऽप्यपदमित्युषादेशे कृते सन्तत्वाभावेऽपदत्वाद् " धुटस्तृतीयः " इति षस्य डत्वं न भवति।

'मनुर्नभोऽङ्गिरोवति'। १-१-२४॥ इति शब्दः सान्त उकारान्तमनुशब्दवत्प्रजापतौ वर्तते, न भातीति असित्यसि " नखादयः " इति नखादित्वाद्, भसभर्जनदीप्त्योरित्यस्य भसेर्नबभस्तीति क्विपि नभ्यतीत्यसि वा नभाः-श्रावणः, नभ 20 आकाशं तद्वन्नभस्वत् अयं शब्दः पाणिनीये शाकटायने च छान्दसो निर्णीतः, परं लोकप्रसिद्ध्या शाकटायन एतदर्थं सूत्रं चकार, ततो लौकिकप्रयोगो नभोवदिति द्रष्टव्यः।

'वृत्त्यन्तोऽसषे'। १-१-२५॥ वर्तनं-वृत्तिः क्तिःवर्तनव्यापारवतीत्यर्थः, वर्तनं स्ववयवार्थापेक्षया परस्य समुदायार्थस्य प्रतिपादनं, यद्वा वर्तिषीष्ट परार्थमभि- 25 धेयादित्याशास्यमाना वृत्तिः कर्तरि तिक्, यद्वा वर्तन्ते स्वार्थपरित्यागेन पदान्यत्रेत्याधारे क्तौ वृत्तिः पदसमुदायादिरूपा, सा त्रेधा-समासवृत्तिः, तद्धितान्तवृत्तिः,

---

१ ३-१-११३। २ ७-४-११९। ३ १-१-२०। ४ ७-४-१०९। ५ २-१-७६। ६ ३-२-१२८।

नामधातुवृत्तिश्चेति; राजपुरुष[1], औपगवं[2], पुत्रकाम्यतीत्यादि[3]। **परार्थाभिधानमिति**–अवयवार्थापेक्षया परोऽर्थः, समुदायार्थो यद्वाऽवयवपदापेक्षया समुदायः परमदिवलक्षणः परः तस्याऽर्थस्तस्याऽभिधानम्। अनेकार्थत्वात्परार्थाभिधानेऽपि वृत्तिशब्दः। **अवसानमिति** अवसीयतेऽस्मिन्नित्यवसानम्। लीढ इति लिहौ क्विप्, शुनो लिहौ
5 श्वलिहौ, "षष्ठ्ययत्नाच्छेषे" इति समास इति कर्तव्यं, न तु श्वानं लीढ इति; यतस्तस्मिन् कृते "गतिकारकः" इति क्विबन्तेन लिह् इत्यनेन समासे सति लिह् इत्यस्याऽविभक्त्यन्तत्वेन पदत्वप्राप्तिरेव नाऽस्तीति। **राजवागिति**–अत्राऽन्तग्रहणात्पूर्वस्य पदत्वे सति न लोपः, तथाऽवयवाश्रितपदत्वप्रतिषेधेऽपि समुदायविभक्त्याश्रितं पदत्वमस्तीति कत्वं बभूवेति। **वाक्त्वक्स्रुच इति**–अत्र वाक्छब्दापेक्षया
10 त्वक्छब्दो वृत्त्यन्त इति परस्याऽऽश्रय इति। **वाक्त्वचमिति**–अत्र समासान्ते कृते वृत्तिरकारान्ता भवति, न तत्र त्वगिति वृत्त्यन्तः ततो "वृत्त्यन्तोऽसषे"[3] इति पदत्वप्रतिषेधस्त्वचो न प्राप्नोति, समाधत्त–उच्यत इत्यादिना अयमर्थः समासात्समासान्तो विधीयमानस्तस्यैवाऽन्तत्वं व्याहन्ति, न तु तदवयवस्य त्वचः तस्य समासावयवत्वात्। **नहि समुदायस्याऽवयवोऽवयवस्याऽवयवो भवति**। यद्वेत्थं
15 व्याख्या–समासशब्देन समासावयवोऽभिधीयते, ततः समासात्समासावयवात्त्वचः समासान्तो विधीयत इति, भवत्वबृत्त्यन्तत्वं त्वचस्तथापि सित्येवेति नियमेन पदत्वं निवर्तत इति भावः। अथवा समासात्परः समासान्तो विधीयते ततः स्यादेः पूर्वस्त्वच एव परो भवतीत्यस्तु अवृत्त्यन्तत्वं त्वचः तत्र च पदत्वप्राप्तिरेव नाऽस्तीति कत्वाभाव इति। समास शब्दस्तु लक्ष्यवशात् क्वचित्समासावयवं
20 क्वचित्समासं चाऽऽहेति। **दधिसेगिति**–सिञ्चतीति विच् ततो दध्नः सेक् इत्येव कार्यं, दधि सिञ्चतीति तु न, यतः 'सोपपदात्सिचेर्विच नेष्यत' इति न्यासः। ननु बहुसर्पिषा दीर्घायुषेत्यादौ असष इति वचनात्पदमध्यत्वाभावे सस्य षत्वं न प्राप्नोतीति? उच्यते, "व्याप्तौ स्सात्" इत्यत्र द्विसकारपाठो वृत्त्यन्तोऽसषे न पदमित्येवं, नञ्द्वयस्य प्रकृतार्थगमकत्वेन, न न सषे पदमपि तु पदमेवेत्यप्राप्तताऽपि
25 पदसंज्ञा सस्य षत्वे भवतीति। अग्निसादित्यादौ पदादित्वादेव सस्य षत्वाभावान्निरर्थकः सन् ज्ञापयति नञा निर्दिष्टं पदत्वं सस्य षत्वेऽनित्यं, ततो बहुसर्पिषेत्यादावन्ते स्थितस्य सस्य षत्वे न पदसंज्ञा, आदिस्थस्य तु सस्य षत्वे दधिसेगित्यादौ पदसंज्ञेति।

**'सविशेषणमाख्यातं वाक्यम्'। १-१-२६ ॥** आख्यायतेस्म क्रिया प्रधानत्वेन साध्यार्थाभिधायितया चेत्याख्यातम्। यत्र क्रियापदं कर्तरि तत्र कर्ता

---

१ ३-१-७६। २ ३-२-८५। ३ १-१-२५। ४ ७-२-१३०।

क्रियापदस्य समानाधिकरणं विशेषणमन्यानि व्यधिकरणानि । कर्मणि तु क्रियापदे कर्म समानाधिकरणं, साधुर्वो रक्षतु इत्यादौ साधुरिति रक्षणादिक्रियायाः कर्ता समानाधिकरणं च, रक्षतु इत्यादिक्रियापदस्य तु च इति व्यधिकरणमिति । उच्चैर्वो वदतीति–उदश्चतीत्युच्चैः "न्युद्भ्यामञ्चेः ककाकैसष्टावच्च" इति टावत्कार्यं, उदच् उदीचितिरूपं बाहुलकत्वान्न भवति । भोक्तुमिति–सामानाधिकरण्याभावात् क्रिया- 5
विशेषणत्वेऽपि न द्वितीया, किन्तु तुमोऽपि तुमर्थाऽव्यभिचारविवक्षायां "तुमोऽर्थे भाववचनात्" इति चतुर्थी, हेतुहेतुमद्भावविवक्षायां "हेतुकर्तृ०" इति तृतीया, सम्बन्ध-विवक्षायां तु "शेषे" इति षष्ठी, "क्त्वातुमम्" इत्यव्ययत्वेन विभक्तिलोपः । लुनीहि ३, पुनीहि ३ इत्यत्र "क्षियाशीःप्रैषे" इत्यनेन प्लुतः । शीलं ते स्वमिति–शेरते सर्वगुणा अस्मिन्निति "शुकशी०" इत्यले शीलं, अत्राऽस्तीत्यादि क्रियापदं न प्रयुज्यते परं तस्या- 10
ऽप्रयुज्यमानस्याऽति स्वमिति समानाधिकरणं । ननु शब्दप्रयोगोऽर्थप्रतिपत्त्युपायस्तस्य चाऽप्रयुज्यमानस्याऽपि विशेषणविशेष्यभावेऽतिप्रसङ्गः, अप्रयुज्यमानत्वाविशेषात्सर्वं सर्वस्य विशेषणं विशेष्यं च स्यात्, किञ्च यद्यप्रयुज्यमानमपि शब्दरूपं विशेष्यं विशेषणं वा गमयेत्तदाऽनर्थकः सर्वत्र तत्प्रयोग इत्याह–अर्थादित्यादि । लोकादे-
वेति–लोको हि साकाङ्क्षत्वे सति क्रियाभेदेऽप्येकवाक्यत्वं प्रतिपद्यते, साकाङ्क्षत्वेऽपि 15
क्रियाभेदे वाक्यभेदार्थं वचनमिति भावः । कुरु कुरु न इति–अत्र युगपद्वाक्यद्वय-प्रयोग इत्येकवाक्यत्वाभावान्नसादेशस्य न प्राप्तिरिति पराभिप्रायः ।

'अधातुविभक्तिवाक्यमर्थवन्नाम' । १-१-२७ ॥ उच्यते विशिष्टोऽर्थोऽने-नेति बाहुलकात्करणेऽपि घ्यणि वाक्यं, कर्मणि तु प्रतीतमेव । अर्थो द्वेधा, अभिधेयः स्वार्थादिभेदात्पञ्चधा, द्योत्यश्च समुच्चयादिरिति–यद्वा चकारादिना द्योत्यस्य 20
समुच्चयादेः समासादिनाऽभिधीयमानत्वादभिधेयत्वमप्यस्तीत्याह–द्योत्यश्चेत्यादि, अभिधेय इति शेषः । न केवलं स्वार्थादिरभिधेयो द्योत्यश्च, समुच्चयादिरभिधेय इति चार्थः । समुच्चयादिरित्यादिपदाद्वा विकल्पादौ एवोऽवधारणे बोध्यम् । तथा द्योत-कानां विशेषणं न भवति, यथा घटश्च भव्यमिति, तथा चादीनां स्वार्थोऽपि द्योत्यतया न वाचकतयेत्येकोऽप्यभिधेयो नाऽस्ति, स्वरादीनां तु लिङ्गसंख्ये न स्तः । ननु अह- 25
न्नित्यत्र विभक्त्यन्तद्वारेणैव नामत्वं न भविष्यति, किं धातुवर्जनेन ? सत्यं, तथापि हन्तीत्यत्र धातुवर्जनाभावे विभक्तेः प्राक्तनस्य हन्नित्यस्य नामत्वे "नाम्सिद०" इति व्यञ्जनद्वारा पदत्वे च न लोपः स्यादिति धातोर्वर्जनमिति । अथ वृक्षान् इत्यत्र नकार-

१ उ. १००३ । २ २-२-६१ । ३ २-२-४४ । ४ २-२-८१ । ५ १-१-३५ । ६ ७-४-९२ । ७ उ. ४६१ । ८ १-१-२१ ।

विधानसामर्थ्यादेव न लुग् न भविष्यति, किं विभक्तिवर्जनेनेति ? सत्यं, काँस्कान् इत्यादौ "शसोऽता०" इति न विधानं चरितार्थमित्यन्यत्र नलोपः स्यादिति । ननु साधुर्धर्मं ब्रूत इत्यत्र विभक्त्यन्तत्वादेव नामत्वं न भविष्यति, किं वाक्यवर्जनेन ? सत्यं, "प्रत्ययः[1] प्रकृत्यादेः[2]" इति परिभाषया ब्रूधातोरेव विभक्त्यन्तत्वं, न तु समग्रवाक्य-
5 स्य, ततो वाक्यस्य नामत्वे साधुर्धर्मं ब्रूत इत्येवंरूपाद्वाक्याद्विभक्तावनिष्टरूपप्रसङ्ग इति। **समासादेर्भवत्येवेति**–अन्यथा हि अर्थवच्छब्दस्य नामत्वे विधीयमानेऽर्थव-त्समुदायरूपस्य वाक्यस्य प्रसङ्ग एव नाऽस्ति, किं वाक्यवर्जनेन ? ततश्चैतदेव वाक्यवर्जनं बोधयति, समासादेः समुदायस्य भवत्येवेति । नन्वधातुविभक्तीत्यत्र पर्युदासाश्रयणादर्थवत एव नामत्वं भविष्यति, नाऽर्थोऽर्थवदित्यनेन, सत्यं; अर्थवदिति
10 संज्ञिनिर्देशार्थं पर्युदासाश्रयणे हि केन धर्मेण सादृश्यमाश्रीयत इत्यप्रतिपत्तिः स्यात्, ततश्चाऽनर्थकानामपि धर्मान्तरेण सदृशत्वे नामसंज्ञाप्रसङ्ग इत्याह–**अर्थवदिति**। अव्युत्पत्तिपक्षाश्रयणे वन इत्यादेः अखण्डस्यैवाऽर्थवत्त्वं, न तु तदवयवार्थस्य वन इत्यादेर्नान्तस्येति, व्युत्पत्तिपक्षे तु धात्वर्थेनाऽर्थवत्तायामपि धातुद्वारेणैव वर्जनसि-द्धिरिति । ननु गौरिति वक्तव्ये शक्तिवैकल्याद्गो इति केनचिदुक्तं तत्समीपवर्ती च
15 तदुक्तमपरेण पृष्टः सन् अनुकरोति तदा तदनुकरणस्य नामसंज्ञा स्याद्वा नवेत्याह–**यदेत्यादि**–**अनुकाऽर्येणेति**–वर्णावलीरूपेणेत्यर्थः ।

**'पुंस्त्रियोः स्यमौजस्'**। १–१–२९ ॥ अलौकिकोऽयं निर्देशः, अन्यथा पुमांश्च स्त्री चेति कृतेऽर्च्यत्वात् स्त्रीशब्दस्य प्राङ्निपाते "स्त्रियाः[3] पुंसो द्वन्द्वाच्च" इति समासान्ते च स्त्रीपुंसयोरिति स्यात्, अनेन चैतद् ज्ञाप्यते क्वचिदलौकिकोऽपि निर्देशो भवतीति ।
20 **स्यमौजसिति**–अत्र व्यतिक्रमनिर्देश एवाऽऽवृत्त्या औकारद्वयग्रहणं साधयति, तथाहि–अम् च औश्च अमौ, ततः सिश्च अमौ च जस् चेति कृतेऽमुसहचरितस्य द्वितीया-द्विवचनस्य ग्रहः, आवृत्त्या तु व्याख्याने औश्च जस् च औजस्, सिश्च अम् च औजस् चेति कृते जस् साहचर्यात्प्रथमाद्विवचनस्य ग्रहः, एकशेषो वा क्रियते, औश्च औश्च आवौ, ततः सिश्च अम् च आवौ च जस् च तत्तथेति, इत्याह–**औरिति** ।

25 **'स्वरादयोऽव्ययम्'**। १–१–३० ॥ "छायेव या स्वर्जलधेर्जलेषु" इत्यस्य पश्चात्

"स्रष्टुः सदाऽभ्यासगृहीतशील–विज्ञानसम्पत्प्रसरस्य सीमा,

अदृश्यताऽऽदर्शतलामलेषु ॥" इति पादत्रयं द्रष्टव्यम् ।

---

१ १–४–४९ । २ ७–४–११५ । ३ ७–३–९६ ।

अत्युच्चैऽसाविति—ननु पूर्वपदमप्यत्राऽव्ययं ततस्तत्सम्बन्धित्वाल्लुप् प्राप्नोतीति ? सत्यं, अतिक्रान्तेऽर्थे लिङ्गसंख्यायोगादतिशब्दः सत्त्वे वर्तते इति नाऽव्ययम् । "अतिरतिक्रमे च" इत्यत्र बाहुलकात्समासाभावेऽतिस्तुत्वेत्यादौ क्रिया [ संबद्धस्य ] शब्दस्याऽतिशब्दस्य द्योतकत्वमेवेति । परमनीचैः इत्यादौ, अत्र तुशब्दो विशेषणार्थः, पूर्वस्माद्विशेषं द्योतयति तेन किं सिद्धम् ? यत्राऽनुपसर्जनस्वराद्यन्तो भवति 5 तत्राऽवयवः समुदायश्चोभयमप्यव्ययं भवत्येव, समासस्योत्तरपदार्थप्रधानत्वात् । अन्वर्थसंज्ञेति-अनुगतोऽर्थेन, अर्थमनुगता वा, अनुगतोऽर्थो यस्या इति वाऽन्वर्था, सा चाऽसौ संज्ञेति । कारकविभक्तीति-विभक्तयो वचनानि । विभक्तिष्विति-विभक्त्यर्थेषु कारकेष्विति-यावत् । ननु भवत्वेवं तथापि संज्ञाविधौ तदन्तप्रतिषेधस्य ज्ञापितत्वात्, "ग्रहणवता नाम्ना न तदन्तविधिः" इति प्रतिषेधाच्च कथं परमोच्चै- 10 रित्यादौ तदन्तस्याऽव्ययसंज्ञेत्याह-अन्वर्थाश्रयणे चेत्यादि । न व्येति न नानात्वं गच्छति सत्त्वधर्मान्न गृह्णातीत्यन्वर्थसिद्धिः । अयमर्थो यदन्वर्थसंज्ञाकरणाद्वितीयमव्ययमित्युपस्थापितं तद् विशेष्यत्वेन विज्ञायते तस्य स्वरादीतिविशेषणत्वेन, ततश्च "विशेषणमन्तः" इति न्यायात्तदन्तविज्ञानात्केवलस्य तु व्यपदेशिवद्भावात्परमोच्चै- रित्यादावप्यव्ययसंज्ञा विज्ञायत इत्यर्थः । यदव्ययमक्षयं शब्दरूपं, किं विशिष्टम् ? 15 स्वरादि स्वराद्यं तदव्ययसंज्ञं भवतीति च सूत्रार्थः समजनि । सनुतर्-मेध्यकाले [अधोभागे], अस्तम्-नाशे यथाऽस्तं गतः-सवितेति, दिवा-दिने, दोषा-रात्रौ पर्युषिते च, योस्-वैषयिकं सुखम्, मयस्-सुखम्, विहायसा-खम्, रुदेः "तॄस्तॄ तन्द्रितन्त्र्यविभ्यः" इति बहुवचनादीप्रत्ययेऽसागमे च रोदसी-द्यावाभूमी, ॐ-प्रणवाभ्युपगमादौ, भूस्-भूमिः, भुवस्-अन्तरिक्षम्, समया निकषा च सामीप्ये, अन्तं 20 रातीति आप्रत्ययेऽन्तरा-विमर्शे मध्ये चाऽऽधेयप्रधाने, बहिः-बहिर्भूते बहिष्ठे च, असाम्प्रतं-अयुक्तम्, विस्मितार्थाददः पराद्धातेर्विदित्याप्रत्यये अद्धा-अशंसये, अर्त्तेः "शीरी०" इति किति ते गणपाठान्मान्तत्वे, ऋतं-शुद्धौ, अस्तेः "शिक्यास्याढ्य०" इति निपातनात् ये शतादेशे गणपाठान्मागमे, सत्यं-प्रश्नप्रतिषेधयोः, इत्पूर्वाद्धातेर्वित्याकारे इद्धा-प्राकाश्ये, मुधा-निर्निमित्तप्रीतिकरणयोः, मिथो-रहःसहार्थयोः, 25 मिथ-स्वाङ्गे, मिथः-विजनवियोगेतरे नराद्यैः, मिथुस्-सङ्गमे, मिथुनं-युग्मम् निपातनान्मान्तत्वं, अनिशं-अनवच्छेदः, मङ्क्षु-शीघ्रं, झटि-संघाते इत्यतः "प्लुञ्ज्ञायजि" इत्यादिबहुवचनात्तिप्रत्यये बाहुलकादिटि च, झटिति-शीघ्रार्थे, सामि-अर्धे, साचि-

---

१ ३-१-४५ । २ ७-४-११३ । ३ उ. ७११ । ४ उ. २०१ । ५ उ. ३६४ । ६ उ. ६४६ ।

वक्रत्वे, विष्वक्-समन्तात्, अन्वक्-पश्चात्, ताजग्द्राक्स्राक् इति त्रयः शब्दा
त्यजिद्रवतिस्रवतीनां "द्रागादयः" इति निपातनात्सिद्धाः शीघ्रार्थे, ऋधक्-
शीघ्रानृतसामीप्यलाभेषु, धिकादयश्चत्वारो द्रागादित्वात्, हिरुग्-वियोगे, द्योक्-
शीघ्रसम्प्रत्यर्थयोः, मनाग्-ईषदप्राप्तयोः, अरं-शीघ्रमत्यर्थं वा, वरं-मनागिष्टे, परं
5 किन्तु, तिरस्-अन्तर्द्धेवज्ञा तिर्यग्भावेषु, मनस्-चित्तं, नमस्-प्रणामे, भूयस्-वारं
वारम्, प्रायस्-बाहुल्येन, प्रबाहु-अव्ययौ अस्यैव गणपाठान्मान्तत्वे प्रबाहुक्-
अत्यर्थं, प्रबाहुकं-अत्यर्थं समकालं च, आर्य-प्रीतिसम्बोधने पापाद्विरते च,
हलं-सीरं, आर्यहलं-विशिष्टं सीरं बलात्कारश्च, बलवत्-अत्यर्थं, ऋते-वियोगे
विना च, समूपूर्वात्पदेः पदिपठीति इ प्रत्यये गणपाठात्समो मलोपे सपदि,
10 साक्षात्-प्रत्यक्षतुल्ययोः, सत्-परित्राणे, प्रशाम्-प्रशामके, सनात्-चिरन्तने,
सनत्-हिंसायां, नाना-पृथग्भावे, विना-योगप्रतिषेधे, सहसा-अतर्किते, युगपत्-
क्रियासमभिहारे सहार्थे च, उपांशु-रहस्यशनकैर्वचने च, पुरतसादयः[२] प्रथमे
पुरोऽर्थे च, शश्वत्-नित्ये, पुनः-पुनरर्थे च, यः शश्वद्वक्तिकुशिक्षित इति कुपूर्वाद्विदेः
क्विपि कुवित्-योगप्रशंसास्तिभावेषु; इति स्वरादयः। इतिशब्द-एवं प्रकारार्थः, एवं
15 प्रकाराः स्वरादयो गृह्यन्ते न त्वेतावन्त इत्यर्थः, यतः—

"इत्यन्त इति संख्यानं,निपातानां न विद्यते। प्रयोजनवशादेते,निपात्यन्ते पदे पदे॥१॥"

आकृतिगणार्थमिति—आक्रियतेऽनयेत्याकृतिर्वर्णिकतस्या गणस्तदर्थमिति।
अव्ययीभावस्य चाऽव्ययत्वं नाऽङ्गीकर्तव्यं, तदङ्गीकरणे ह्युच्चकैर्नीचकैरित्यादिवदु-
पाग्निप्रत्यग्नीत्यत्राऽपि "अव्ययस्य कोद् च"[३] इत्यक् प्रसज्येत। तथोपकुम्भमन्यमि-
20 त्यादौ दोषामन्यमहरित्यादिवन्मागमप्रतिषेधः-स्यात्। अथाऽव्ययीभावस्य "तृप्तार्थ-
पूरणाव्यय०"[४] इति षष्ठीसमासप्रतिषेधेऽव्ययसंज्ञाफलमिति चेन्न, तत्र समासकाण्डे बहु-
लाधिकारादेव सेत्स्यतीति, किञ्चाऽव्ययीभाव इति महतीं संज्ञां यच्च कृतवानाचार्य-
स्तज्ज्ञापयति क्वचिदव्ययत्वमपीति, तेन चैत्रस्योपकुम्भमित्यत्र न समासः।

'चादयोऽसत्त्वे'। १-१-३१॥ अनुकार्यादाविति-आदिशब्दादत्युच्चैसावि-
25 त्यत्र वाचकस्याऽतिशब्दस्य चिनोतीति च इत्येवं क्रियाप्रधानस्य च चशब्दस्य नाऽ-
व्ययसंज्ञेति, अह-निर्देशविनियोगकिलार्थेषु, एवशब्दस्यैव निपातनान्मान्तत्वे एवम्-
उपमानोपदेशप्रश्नावितर्कप्रशंसासु, नेत् चेत् नयतेश्चिनोतेश्च विचि निपातनात्तागमे
द्वावपि प्रतिषेधविचारसमुच्चयेषु, नचेत् नयदि-निषेधयोः, चण चशब्द एवाऽयं णित्

१ उ. ८७०। २ पुरतस् पुरस् पुरस्तात् इति पुरतसादयः। ३ ७-३-३१। ४ ३-१-८५।

चेदर्थे पठ्यते, अयं च दास्यति, अयं चेद्दास्यतीत्यर्थः, केचित्तु चण शब्द इत्यस्य विजन्तस्य रूपमिच्छन्ति तत्तु न बुध्यामहे, कच्चित्–प्रश्नकालयोः, यत्र–यस्मिन् स्थाने तदा वाचकः, नह–प्रत्यारम्भविषादप्रतिबोधेषु, नहि–अभावे, हन्तप्रीतिविषादसम्प्रदानेषु, माकिस् नकिस्–माङ्पूर्वान्नङ्पूर्वाच्च कायतेर्विति इसि आलोपे नञादित्यत्त्वाभावे च एतौ द्वावपि निषेधे वर्जने च, वाव त्वाव–सम्बोधने, न्वाव 5 वावत् त्वावत् न्वावत् एते सर्वेऽप्यनुमानप्रतिज्ञाप्रैषसमाप्तिषु, त्वै तुवै न्वै नुवै एते वितर्के पादपूरणे च, रै–दाने दीप्तौ च, वै–स्फुटार्थे, शृणोति वातिवषिभ्यो बाहुलकादटि प्रत्यये यथाक्रमं श्रौषवौषवषादेशे च श्रौषट् वौषट् वषट् एते त्रयोऽपि देवहविर्दानादौ, वट् वाट् वेट् एते त्रयः प्रशंसायां, पाट् प्याट् एतौ सम्बोधने, फट् हुम्फट् छंवट्–भर्त्सनसम्बोधने, अध–अधोऽर्थे, आत्–कोपपीडयोः, स्वधा–पितृबलौ, स्वाहा– 10 हविर्दाने, चन–अप्यर्थे पादपूरणे च, हि–हेतावधारणे च, अथ–मङ्गलाऽनन्तराऽऽरम्भप्रश्नकात्स्न्र्येषु, अथो–अन्वादेशादौ, नो नोहि–एतौ निषेधे, भोस् इत्यादयो नव[१] सम्बोधने, ही–विस्मये, हे इत्यादयो दश अनुशयसम्बोधनयोः । ननु–विरोधोक्तौ, अनन्वयादौ च; शुकमादयः पञ्च प्रत्याख्याने, ऊम्–प्रश्ने, हुम्–भर्त्सने, कुम्–प्रश्ने, उञ् सुञ् एतौ रुपोक्तौ, हम्–रोषानुकम्पादौ, हिम्–सम्भ्रम–भर्त्सनयोः, 15 अद्–विस्मये, कद्–कुत्सायां, यद् तद्–हेत्वर्थवाक्योपन्यासयोः, इद्–एवार्थे ईषदर्थे च, चिद्–प्रश्नावधारणयोः, किद्–भर्त्सनपादपूरणयोः, स्विद् विमर्श–प्रश्नयोः, उत–विकल्पे, बत–खेदानुकम्पासन्तोषविस्मयामन्त्रणेषु, इव उपमावधारणयोः, तु विशेषणपादपुरणयोः, नु(शब्दो)वितर्कोपमानयोः, यच्च वाक्यान्तरोपक्रमे, कच्चन–कच्चिदर्थे, किमुत–वितर्के, किल–सम्प्रश्नवार्तयोः, किं किल–विषादशोकार्त्तिषु किलार्थे 20 च, किंस्विद् उदस्विद् आहोस्विद् इति त्रयोऽपि प्रश्नवितर्कविकल्पेषु, अहह अद्भुतखेदयोः, नहवै नवै इत्येतौ प्रत्याख्याने, नवा–विभाषायां, अन्यत्–अन्यार्थे निपातनाच्च तकारः, अन्यत्र अन्यपूर्वात्रायतेरातो रोऽह्वावाम इति रे, अन्या विकरणकाले, शपतेः क्विपि "जपादीनां पोवः"[२] इति पस्यैकत्र वत्वे, शव् शप् एतौ प्रतिग्रहे, अथकिम्–अङ्गीकारे, विषु–नानात्वे, पट्–पटुत्वे, पशु–दृश्यर्थे, खलु–निषेधवाक्यालङ्कारजिज्ञासाऽनुनयनिश्चयेषु, यदिनाम–पक्षान्तरे, यदुत–पराशयप्रकाशनादौ, प्रत्युत–पूर्वोक्तवैपरीत्ये, यद्पूर्वादतेरिदिति डाप्रत्यये यदा देशाद्यधिकरणे, यथा कथा चेति अनादरेणेत्यर्थः यमेः "पथयूथेति"[३] थे आत्वे च यथा–योग्यतावीप्सा–

१ भोस्, भगोस्, अघोस्, अङ्गो, हंहो, हो, अहो, आहो, उताहो इत्यादयः । २ २–३–१०५ । ३ उ. २३१ ।

र्थाऽनतिवृत्तिसादृश्यार्थेषु, पुदु–कुत्सायां, द्य–हिंसाप्रातिलोम्ययोः, यावत्तावत् एतौ मर्यादावधारणेषु, दिष्ट्या–प्रीतिसेवनयोः सभाजनप्रातिलोम्ययोर्वा, मर्या–सीमबन्धे, आम–पीडायां, नाम–प्रकाश्यसम्भाव्यक्रोधापगमकुत्सनेषु, स्म–अतीते पादपूरणे च, इतिह पुराश्रुतौ, सहादयः पञ्च–सहार्थनिर्देशनिवेदनवाक्यपादपूरणेषु, ईम्–संशय
5 प्रश्नानुमानेषु, सीम्–अभिनवव्यावहरणामर्षपादपूरणेष्वित्येके, कीम्–अव्यक्ते, आम्–प्रतिवचनावधारयोः, आस्–स्मृतिखेदयोः, इति–एवमर्थे १, आद्येऽर्थे २, हेत्वर्थे ३, प्रकारार्थे ४, शब्दप्रादुर्भावे ५, ग्रन्थसमाप्तौ ६, पदार्थविपर्यासादौ ७ च, अव अड अट एते त्रयोऽपि भर्त्सने, बाह्वा–निष्पत्तौ, अनुषक्–अनुमाने, केचित्तान्तमन्ये, दान्तमपरे दीर्घादिं च मन्यन्ते; खोस्–कुत्सायां, अआप्रभृतयश्चतुर्दशाऽपि पूरणभर्त्सनाऽऽ-
10 मन्त्रणनिषेधेषु ।

'अधण्तस्वाद्याशसः' ।–१––१–३२ ॥ तस्वादयः प्रत्ययास्ते च प्रकृत्यविनाभाविन इति तैः प्रकृतिरनुमीयते, तस्याश्चैते विशेषणत्वेनाऽऽश्रीयन्ते, ततो "विशेषण[1]मन्तः" इति तदन्तविज्ञानं भवतीत्याह तदन्तमिति, किञ्च प्रत्ययस्यैवाऽव्ययत्वेनाऽर्जुनत इत्यादौ प्रत्ययमात्रावयवादर्थवत्त्वेन नामत्वे स्याद्युत्पत्तौ
15 "प्रत्यय[2]:प्रकृत्यादेः" इति वचनात्प्रत्ययमात्रस्यैव प्रकृतित्वेन तदन्तत्वे पूर्वस्य च "नाम[3]सिद०" इति पदत्वे "सपूर्वा[4]त्प्रथमान्ताद्वा०" इति विकल्पप्रसङ्गः तस्मात्तदन्तः समुदाय एवाऽव्ययं न प्रत्ययमात्रमिति, अर्जुनत इति । अत्र सप्तम्येकवचनस्य लुप्, बहुधा "बहोर्धा[5]ऽऽसन्ने" इत्यनेन । धा, प्राक् प्राच्या दिशः प्राच्यां वा दिशीति, "दिक्छब्दाद्दिग्देश[6]कालेषु" इति धा तस्य "लुब[7]ञ्चेः" इति लुब्, यथासम्भवं च
20 "ङ्यादेर्गौण[8]स्य०" इति ङीलुक्, ततः सिङ्सिडीनां "अव्यय[9]स्य०" इति लुक्, एतद्विशेषणस्य च क्रियाव्ययविशेषण इत्यनेनाऽव्ययविशेषणत्वान्नपुंसकत्वं भवति, एवं दक्षिणादिशब्देभ्यो दिग्देशकालवृत्तिभ्यः सिङसिङ्यन्तेभ्योऽतसादयो ज्ञेयाः, यथासम्भवं च "सर्वादयोऽस्या[10]दौ" इति पुंवद्भावः, नवरं उपरि उपरिष्टादित्यत्र नामग्रहणे लिङ्ग विशिष्टस्याऽपीति न्यायादूर्ध्वशब्दस्याऽप्युपादेशः । बहुशः इति
25 बहवो ददति प्राशित्रादौ "बह्वल्पा[11]र्थात्०" इति शस्, बहवो ददतीति "संख्यैका[12]र्थात्०" इति शस् । पथि द्वैधानीत्यत्र वनानीति शेषः, संशयत्रैधानीत्यत्र च वचनानीति शेषः ।

'वत्तस्याम्' । १–१–३४ ॥ आमिति षष्ठीबहुवचनस्य, तद्धितस्य, परोक्षास्थान–

---

१ ७–४–११३ । २ ७–४–११५ । ३ १–१–२१ । ४ २–१–३२ । ५ ७–२–११२ । ६ ७–२–११३ । ७ ७–२–१२३ । ८ २–४–९५ । ९ ३–२–७ । १० ३–२–६१ । ११ ७–२–१५० । १२ ७–२–१५१ ।

निष्पन्नस्य चाऽविशेषेण त्रयाणामपि ग्रहणं प्राप्नोति, द्वयोरेव चेष्यतेऽतोऽतिव्याप्त्य-
पहतत्वादलक्षणमेतदित्याह-वत्तसीति, तद्धितस्येत्युपलक्षणं ततो "धातोरनेकस्व[1]-
रादा०" इत्यादिना विहितस्याऽप्यामो ग्रहणं तेन पाचयाञ्चकुषेत्यादौ टालोपे पद-
त्वादनुस्वारः सिद्धिः, न चोपलक्षणात् षष्ठीबहुवचनस्याऽपीति ग्रहणं किं न स्यादिति
वाच्यम् ? यतो य आम् आमेव भवति स एव गृह्यतेऽयं तु नाम् साम् वा भवतीति, 5
यद्वा वत्तसी अविभक्ती तत्साहचर्यादामोऽप्यविभक्तेरेव ग्रहणं ततो दरिद्राञ्चकृवद्भि-
रित्यत्र क्वस् स्थाननिष्पन्नस्य पचतितरामित्यत्र "किं त्याद्येऽ[2]व्यय०" इति विहितस्य
च ग्रहणं भवति, यत एतावेव तयोर्वत्तस्योरविभक्तित्वेन हिताविति व्युत्पत्त्या तद्धि-
तावित्यभिधीयेते अस्मिंश्च व्याख्याने "किं त्याद्येऽव्यय०" इत्यनेनेदमेव सूत्रं सम्पूर्णं
गृह्यते, आदि शब्देन तु धातोरनेकस्वरेति विहितस्य क्वस् कानस्थानस्येति । तथा 10
दरिद्राञ्चकृवद्भिरित्यत्राऽऽमन्तस्याऽव्ययत्वेऽपि कुत्सिताद्यर्थे "अव्यय[3]स्यकोद् च"
इत्यक् न भवति, अपरिसमाप्तार्थत्वेनाऽऽमन्तस्य कुत्सिताद्यर्थासम्भवादिति । उच्चै-
स्तरामिति-क्वचित्स्वार्थेऽतिप्रकृष्टे वाऽर्थे तरप् ।

'क्त्वातुमम्' । १-१-३५ ॥ क्त्वेति ककारोऽसन्देहार्थः, अन्यथा त्वा इति
निर्देशे सन्देहः स्यात्, किमयं क्त्वा प्रत्ययस्य निर्देशः किंवा विदित्वं गोत्वं 15
यकाभिस्ता विदितगोत्वा इति त्वप्रत्ययस्याऽबन्तस्येति । न द्वितीयैकवच-
नस्येति—द्वितीयैकवचनान्तस्याऽव्ययत्वे-"अव्यय[3]स्यकोद् च" इत्यक् स्यात्, तथा
देवस्य दर्शनं कुर्वित्यादौ "तृन्[4]नुदन्त०" इत्यनेन षष्ठी न स्यात् । नन्वेवं ह्यस्त-
न्यद्यतन्यमन्तस्याऽव्ययत्वं कथं निषिध्यते ? सत्यं, द्वितीयं च तदेकवचनं चेति
विग्रहे तस्याऽपि संग्रहः, द्वितीयापेक्षया द्वितीयं चैकवचनं ह्यस्तन्यद्यतन्योरमिति । 20
स्वादुंकारमिति-स्वादुनः करणं पूर्वमिति "स्वाद्व[5]र्थाददीर्घाद्" इति ख्णम् । यावज्जीव-
मदादिति यावज्जीव्यत इति णम्, अदादित्यत्राऽनद्यतने ह्यस्तनीति ह्यस्तनी न भवति,
नाऽनद्यतनप्रबन्धासत्त्योरिति निषेधात्, किंतु भूतमात्रेऽद्यतनीत्यनेनाऽद्यतनी ।

'गतिः' । १-१-३६ ॥ अदः कृत्येति-अग्रहानुपदेशेऽन्तरद इत्यनेनाऽदः-
शब्दस्य गतिसंज्ञा । 25

'अप्रयोगीत्' । १-१-३७ ॥ प्रयोगः-शब्दस्योच्चारणं सोऽस्याऽस्ति प्रयोगी, न
प्रयोग्यप्रयोगीति संज्ञिनिर्देशः, इदिति संज्ञेति । लौकिक इति-लोकस्य ज्ञातो "लोक[6]-
सर्वलोकाज्ज्ञाते" इत्यनेन इतीकण् लौकिकः ।

---

१ ३-४-४६ । २ ७-३-८ । ३ ७-३-३१ । ४ २-२-९० । ५ ५-४-५३ । ६ ६-४-१५७

'अनन्तः पञ्चम्याः प्रत्ययः'। १-१-३८ ॥ न विद्यतेऽन्तशब्दो वाचको यस्य स तथा, पञ्चमीति प्रत्ययोऽभिधीयते स च प्रकृत्याविनाभावीति तेन प्रकृतिराक्षिप्यते तया चाऽर्थ इत्याह पञ्चम्यर्थादित्यादि, शब्द इति स च शब्दो वर्णस्तत्समुदायो वा भवति, शब्द्यत इति कृत्वा शब्द शब्देनोच्यत इति। ननु
5 नागमस्य प्रत्ययत्वे को दोष इति ? सत्यं, अनन्ददित्यादौ नागमेन धातोः खण्डितत्वान्नन्दधातो प्राक् "अड्धातोः०" इत्यडागमो न स्यात्, अथ तन्मध्यपतित-स्तद्ग्रहणेन गृह्यत इति भविष्यति तर्ह्यस्य न्यायस्याऽनित्यत्वज्ञापनार्थमन्तग्रहणं, तथाऽ-न्तग्रहणाभावे लाङ्कायनिः इत्यत्र "चर्मिवर्मि०" इत्यायनिजिकागमे तस्य प्रत्ययत्वे "ड्यादीदूतः" के इत्येनन ह्रस्वः स्यादिति तथाऽन्तग्रहणाभावे पञ्चम्यर्थाद्विधीयमा-
10 नत्वेनाऽऽगमस्याऽपि प्रत्ययत्वे प्रत्ययाप्रत्यययोः प्रत्ययस्यैवेति न्यायात् प्रेण्वनमि-त्यादावेव "वोत्तरपदान्त०" इत्यनेन णत्वं स्यान्न तु मद्रबाहुणा कुलेनेत्यादौ, "अ-नाम्स्वरे०" इति पष्ठ्यान्ताद्विधीयमानस्य प्रत्ययत्वाभाव इति। अपरं च "ऋतृषमृष०" इत्यत्र श्रथुङ्शैथिल्य इत्यस्य प्रत्ययाप्रत्यययोः इति न्यायेन नागमस्य प्रत्ययत्वे सत्यस्यैव ग्रहणं स्यान्न तु श्रन्थश्मोचनप्रतिहर्षयोरित्यस्य, तस्मादन्तग्रहणमवश्यं
15 विधेयमिति। उभयथाऽपि पञ्चम्यां सम्भवन्त्यां "परः" इति परिभाषया प्रत्ययो नियन्त्र्यते प्रकृतेः पर एवेति, तर्हि स्वरात्पूर्वो नोऽन्त इत्यपि कथं न लभ्यत इति चेत् ? सत्यं, "नो व्यञ्जनस्य" इत्यत्राऽनुदित इति भणनात्, अन्यथोपान्त्यत्वाभा-वात् प्राप्तिरेव लोपस्य नाऽस्तीति।

'डत्यतु संख्यावत्'। १-१-३९ ॥ वत्करणाभावे कृत्रिमाकृत्रिमयोरिति
20 न्यायाद् एक द्व्यादीनामकृत्रिमाणां न स्यादिति।

'बहुगणं भेदे'। १-१-४० ॥ वैपुल्य इति-यथा बहौ सूपे, बहु घृतं श्रेय इति, अथ बहुगणशब्दयोर्भेदवचनात् संख्यात्वमस्त्येव यतो भेदः परिगणनं संख्येति, ततश्चैकद्व्यादीनामिव बहुगणशब्दयोरपि लोकादेव संख्यात्वसिद्धौ किमने-नाऽतिदेशवचनेन ? अतिदेशो हि अन्यत्र प्रसिद्धस्याऽन्यत्र प्रसिद्धिप्रापणार्थ इत्याह-
25 बहुगणावित्यादि, लोके ह्येकद्व्यादीनां नियतावधिभेदाभिधायित्वे संख्याप्रसिद्धिरन-योश्च न तथेति संख्याप्रसिद्धेरभाव इति।

## अवचूर्णिकायां समाप्तोऽयं प्रथमः पादः ॥

---

१ ४-४-२९। २ ६-१-११२। ३ २-४-१०४। ४ २-३-७५। ५ १-४-६४। ६ ४-३-२४। ७ ७-४-११८। ८ ४-२-४५।

'समानानां तेन दीर्घः' । १-२-१ ॥ सम्यगनिति प्राणिसादृश्यप्रतीतिरनेनेति व्यञ्जनाद् घञिति घञि समानं, तुल्यं मानं परिमाणं येषां "समानस्य धर्मा०"[1] इति सभावे समानाः, अत्राऽनन्तरानन्तरिभावलक्षणे सम्बन्धे षष्ठी । तेनेति तृतीयानिर्देशः स्थानित्वप्रतिपत्त्यर्थः । दण्डाग्रमित्यत्र "वृत्त्यन्तः"[2] इत्यग्रशब्दस्य पदत्वाभावे दण्डशब्दाकारस्य "लुगस्य"[3] इति कथं लुग् न भवतीति ? उच्यते, सर्वं वाक्यं सावधारणं भवतीति न्यायाद् अपद इति सावधारणं व्याख्येयम्, अपद एव यद्यकारो भवतीति, अयं तु वाक्यावस्थायां पदेऽपीति, तर्हि "गतिर्कारक"[4] इति न्यायात् प्रायणमित्यादौ विभक्त्युत्पत्तेः प्रागेव समासे कथं न भवतीति ? सत्यं, अपद इत्युत्तरपदमपि गृह्यते उत्तरं च तत्पदं चेति कृते "ते लुग्वा"[5] इत्युत्तरशब्दलोपादिति । तवाऽऽयुरिति-इणक्गतौ "कृवापाजि०"[6] इति उणि आयुः, पुरुषः, शकटम्, औषधम्, जीवनम्, पुरूरवः पुत्रो वा; इणोऽणि दित्युसि वा, आयुःजीवितम् कऌ ऋषभ इति । "दूरादामन्त्र्यस्य गुरुर्वैकोऽनन्त्योऽपिलनृद्"[7] इत्यत्र ऋद्वर्जनाऌकारस्याऽपि ऋकारापदिष्टकार्यविज्ञानात् कऌऋषभ इति विग्रहे कऌऋषभः कऌचिह्न ऋषभ इत्यर्थः ।

'ऋऌति ह्रस्वो वा' । १-२-२ ॥ बाल ऋश्य इति ति बल् प्राणनेति बलतेर्वा "ज्वर्ला०"[8] इत्यनेनणे वा रुड् आप्लाव्ये वा रुडो वाऽचि रस्य लत्वे च बालः । ऋशिर्गतौ प्लुतौ वा सौत्रो धातुस्तस्मात् "ऋषिर्जनि"[9] इति किति ये ऋश्यः मृगजातिः, "अर्जेर्ऋज् च"[10] इति अर्जेः उप्रत्यये ऋजादेशे च ऋजु ।

'ऌत ॡऌ ऋऌभ्यां वा' १-२-३ ॥ ॠ इति दीर्घश्चेदुत्तरेण सिद्धत्वादत्र विधानमनर्थकमिति सविशेषमादेशमाह-ऋ इति स्वरसमुदायो वेति वर्णान्तरत्वे मतभेदानाह तदपीति । द्विरेफतुरीयमिति रेफस्य तुरीयौ रेफतुरीयौ एकस्य रेफस्य चतुर्भागीकृतस्य द्वौ चतुर्थभागावित्यर्थः, द्वौ रेफतुरीयावस्मिन्निति, अधिकमर्धं यस्याः अध्यारूढा अर्धेन वा अध्यर्धा, स्वरस्य मात्रा स्वरमात्रा अध्यर्धा स्वरमात्राऽस्मिन्नित्यध्यर्धं स्वरमात्रम् । सकलरेफकारमिति, सकलः परिपूर्णो रेफ ऋकारश्चाऽत्र तत्तथा । अर्धं मात्रा यस्याः साऽर्धमात्रा, स्वरस्य भक्तिर्भागः स्वरभक्तिः. अर्धमात्रा स्वरभक्तिर्यस्य तत्तथा ।

'ऋतो वा तौ च' । १-२-४ ॥ होतृकार इति, होतुर्ऋकार इति षष्ठीसमासः, होतृसम्बन्धी होत्रा लिखित उच्चारितो वा ऋकार इत्यर्थः ।

---

१ ३-२-१४९ । २ १-१-२५ । ३ २-१-११३ । ४ ३-२-८५ । ५ ३-२-१०८ । ६ उ. १ । ७ ७-४-९९ । ८ ४-२-३२ । ९ उ. ३६१ । १० उ. ७२२ ।

'ऋस्तयोः' १–२–६ ॥ अथ ऋकारऌकारयोः सजातीयस्य पूर्वं प्रतिपादितत्वात्समानानां तेनेत्यनेनैव द्विमात्रॠकारः सेत्स्यति किमनेन ? न च वाच्यम् कॢ ऋषभ इत्यत्र ऌकारस्य स्थानित्वाद्दीर्घत्वे प्रत्यासन्नत्वात् ॡकारः स्यादिति । यतो द्वयोः स्थानित्वमुक्तं तत्र ॠकारमेव स्थानिनमाश्रित्य दीर्घे क्रियमाणे प्रत्यासत्या ॠकार एव भविष्यति । सत्यं स्यादेवम् यदि ऋकारस्यैव स्थानित्वे किञ्चिन्नियामकः स्यात् । यावता द्वयोः षष्ठीतृतीयानिर्दिष्टयोः स्थानित्वमिति पूर्वं परं वा ऌकाररूपं स्थानिनमाश्रित्य दीर्घे क्रियमाणे ॡकारोऽपि स्यात्, ॠकार एव चेष्यत इत्यतदर्थमस्याऽऽरम्भ इति ।

अत्र च प्रकरणे[1] ऋकारस्य ऋकारे दीर्घत्वात् पितॄषभः, ह्रस्वत्वात् पितृ ऋषभः, 'ऋतो वा[2] तौ च'। इत्यनेन रु ऋ इत्यादेशद्वयात् पितृुषभः पितृषभः इति रूपचतुष्टयं सिद्धम् । ॡकारस्य ऌकारे दीर्घत्वात् कॣकारः ह्रस्वत्वात् कॢॡकारः, लसद्भावात् कॢकार इति रूपत्रयं सिद्धम् । ॠकारस्य ॠकारे ॡकारस्य ॡकारे दीर्घत्वह्रस्वत्वमतान्तरप्रकृतिवद्भावस्त्रीणि त्रीणि रूपाणि । तथा ऋकारस्य ऌकारे "ऋॢती[4]" ति ह्रस्वत्वात् विकल्पपक्षे मतान्तरेण प्रकृतिवद्भावात् "ऋतो वा[2] तौ च" इत्यत्र मतान्तरेण रुवर्णस्थानित्वात् ॢऋ इत्यादेशद्वयात् "ऋस्तयोः[3]" इति ॠविधानाच्च रूपपञ्चकं । एवं ॡकारस्य ऋकारे "ऋॣती[4]" ति ह्रस्वत्वात् विकल्पपक्षे मतान्तरेण प्रकृतिवद्भावात् ऌत ॢ इति ॢभावात् "ऋस्तयोः[3]" ॠभावाच्च रूपचतुष्टयं तथा ऋकारस्य ऌकारे "ऋॢती[4]" ति ह्रस्वत्वात् "ऋतो वा[2] तौ च" इत्यनेन ॢ ऋ इत्यादेशद्वयात् "ॠस्तयोः[3]" इति ॠ इति विधानाच्च रूपचतुष्टयम् । तथा ऌकारस्य ऋकारे "ऋॢती[4]" ति ह्रस्वत्वात् ऌत ॢ विधानात् "ॠस्तयोः[3]" इति ॠविधानाच्च रूपत्रयम् ।

**'ऋणे प्रदशार्णवसनकम्बलवत्सरवत्सतरस्यार्'** । १–२–७ ॥ ऋणूयी गताविति अर्णोतीति के ॠक् गतौ ऋ प्रापणे चेत्याभ्यां कर्तरि कर्मणि वा क्ते "ऋह्री०[5]" ति तस्य नत्वे, आभ्यामेव "घृवीह्वी[6]" इति किति णप्रत्यये ऋणम् प्रगतमित्युपलक्षणं तेन प्रकृष्टं प्रवृद्धं वा ऋणमित्यपि । दश ऋणान्यस्येति वर्णानुपूर्वीविज्ञानार्थं व्युत्पत्तिमात्रमेतद्यावत् संज्ञाशब्दोऽयम् । यद्यपि परत्वात्सर्वत्राऽऽर् प्राप्नोति तथाप्य रएव बाधक आरादेशो न ह्रस्वस्येत्याह–**समानानामितीति** ।

**'ऋते तृतीया समासे'** । १–२–८ ॥ अर्त्तेः क्ते "ऋह्री०[5]" इति नत्वविकल्पे

---

१ एवं संपिंडितेनैवमेकोनत्रिंशद्रूपाणि भवन्तीति पञ्चसूत्रविवेकः । २ १–३–४ । ३ १–२–५ । ४ १–२–२ । ५ ४–२–७६ । ६ उ–१८३ ।

ऋतघृणेति ऋतधातोः कर्तरि के वा ऋतः, तत्पुरुषानन्तरं कर्मधारये निमित्तनिमि-त्तिनोरेकः समासोऽस्त्येवेति कुतो नाऽऽरादेशः ? उच्यते, ऋतकृतशब्दावयवस्य ऋतशब्दस्याऽनर्थकत्वेनाऽनर्थकत्वान्नाऽऽरादेश इत्याह–परमतंकृत इत्यत्रत्वित्यादि। क्षुधार्त्त इत्यत्र तृतीयान्तस्य क्षुच्छब्दस्य "ओमाङि[1]" इत्याकारलोपे प्रत्ययाश्रित-त्वेनोभयपदाश्रितत्वेन वा बहिरङ्गः, प्रकृत्याश्रितत्वेनैकपदाश्रितत्वेन वाऽन्तरङ्गे कर्त- 5 व्येऽसिद्ध इत्याकारलोपे सति धस्य पदान्तत्वाभावान्न दत्वम्।

'ऋत्यारुपसर्गस्य'। १–२–९॥ उपसृत्य धातुमर्थविशेषं सृजतीति लिहा-द्यचि न्यङ्क्वादित्वाद्गत्वे उपसर्गः। सर्वापवाद इति–पूर्वसूत्रविहित आरा-देशः "अवर्णस्य०[2]" इत्यर एव बाधको न ह्रस्वस्य, अयं त्वरो ह्रस्वस्य च सर्वस्य प्राप्नुवतो बाधक इत्यर्थः। प्रार्छतीति–ऋच्छेः अर्त्तेर्वा "श्रौति०[3]" इति 10 ऋच्छादेशे येन धातुनेति यद्येवं प्रणसं मुखमित्यादौ प्रशब्दस्योपसर्गत्वाभाव "उपसर्गा०[4]" इत्यनेन नासिकाशब्दस्य नसादेशो न प्राप्नोति ? उच्यते, यत्रोपस-र्गत्वं न सम्भवति, तत्रोपसर्गत्वेन प्रादयो लक्ष्यन्ते, न तु सम्भवत्युपसर्गत्व इति। अत्र च नसशब्दनकारस्य "नसस्य[5]" इति णत्वं, नन्वेवं प्रगता ऋच्छका यस्मात्स प्रर्च्छक इत्यादौ प्रादित्वेन प्रशब्दस्योपसर्गत्वादार् प्राप्नोति ? नैवम्, प्रशब्दोऽत्र गतार्थम- 15 न्तर्भाव्यप्रवर्तमानो णकप्रत्ययस्यार्थं कर्तारं विशिनष्टि, न ऋच्छेर्धातोरर्थमित्येतद्धातु-सम्बन्धाभावात् एनं प्रत्यनुपसर्गत्वमस्योच्यत इति।

'नाम्नि वा'। १। २। १०॥ नामावयवयोगाद्धातुरपि नाम तस्मिन् एवमग्रे-ऽपि, वा नाम्नीत्यत्र द्रष्टव्यं नाम्नीत्यनेन ऋकारादिर्धातुःसामानाधिकरण्येन विशेष-यितुं न शक्यत इत्यवयवद्वारेण ऋकारादिसमुदायो धातुर्नाम्नीत्यनेन विशेष्यत 20 इत्याह–नामावयव इति।

'ऐदौत्सन्ध्यक्षरैः'। १। २। १२॥ नन्वत्र त्रिमात्रचतुर्मात्रयोरादेशिनोः स्थाने कथं द्विमात्रावेवाऽऽदेशौ भवतः, यावता स्थानी "आसन्नः[6]" इति न्याया-त्रिमात्रौ चतुर्मात्रौ च प्राप्नुत इति ? सत्यम्, सन्ध्यक्षरैरिति बहुवचनं द्विमात्रादेश-प्रतिपत्त्यर्थं, अन्यथैकवचनेन निर्देशेत्; एतदर्थं च सदुपसर्गनिवृत्तिमपि करोतीत्याह 25 सन्ध्यक्षरैरिति।

'ऊटा'। १। २। १३॥ पदादिसमुदायानुवृत्तावपि "आसन्नः" इति न्याया-दौदेव भवतीत्याह–औकारदेश इति। लौः पौरिति–अकारस्याप्युदाहरणमिदमेव,

---

१ १–२–१८। २ १–२–६। ३ ४–२–१०८। ४ ७–३–१६२। ५ २–३–६५। ६ ७–४–१२०।

ऌपृभ्यामजनन्ताभ्यामलन्ताभ्यां वा । लवमाचष्टे पवमाचष्टे "णिज्बहुलम्" इति णिचि क्विबादिः पूर्ववत् ।

'प्रस्यैषैष्योढोढ्यूहे स्वरेण' । १ । २ । १४ ॥ अवर्णस्य कार्यिणोऽनुवृत्तेस्तस्य च प्रशब्देन सामानाधिकरण्यायोगादवयवावयविसम्बन्धे षष्ठीत्याह—प्रशब्दसम्बन्धि-
5 नोऽवर्णस्येति, प्रैष इति न्यक्कारपूर्वको व्यापार एवं प्रेषोऽपि, प्रैष्यः प्रेष्यश्च दास उच्यते, प्रौहो हस्तिनः पश्चाज्जानुप्रदेशः प्रकृष्टतर्कश्च, अपोढः अपोह्यतेस्मेति क्ते रूपं निराकृतेऽर्थे । प्रेत इति–इं इतिधातोः प्रायतिस्मेति, इंण्क इतिधातोः प्रैति स्मेति, ईङ्क गतावित्यस्य प्रेयते स्मेति वा गत्यर्थेति क्ते रूपं मृतार्थे प्रकर्षं गतार्थे च, प्रोत इति वेंग्[1]धातोः प्रोयते स्मेति कर्मणि क्ते य्वृति च, ऊयैङ्[2] तन्तुसन्ताने इत्यस्य
10 प्रोय्यते स्मेति के यलोपे च, उंङ्कुंङ् इत्युंङः प्रोयते स्मेति क्ते च सिध्यति, यदा आ ईष्य इति क्रियते तदापि "ओमाङि[3]" इत्यस्य विषयेऽपि "उपसर्गस्यानिणे०" इत्यस्य प्राप्तिरेव, उभयोः स्थाने इति न्यायेन आङ्ई इत्येतयोरुभयोः स्थाने निष्पन्नस्य एतो यदा आङा व्यपदेशस्तदा "ओमाङि" इत्यस्य, अन्यथा "उपसर्गस्य[4]०" इत्यस्येत्यत उक्तं यस्मिन् प्राप्त इति, प्राप्त एवेत्यवधारणव्याख्यानात् ।

15 'स्वैर स्वैर्यक्षौहिण्याम्' । १–२–१५ ॥ स्वैर यथा सममात्रौषधनिष्पन्नश्चू-र्णोऽपि सम इत्यवयवधर्मेण समुदायस्य व्यपदेश एवमिहापि स्वैरावयवयोगात्समु-दायोऽपि त्र्यात्मकः स्वैरः, स्वैर्यवयवयोगात् स्वैरी, अक्षौहिण्यवयवयोगादक्षौहिणी, ततः स्वैरश्चाऽसौ स्वैरी च, स चाऽसावक्षौहिणी चेति कर्मधारयः, यथा मर्यादाभिविधौ च यः इत्यत्र समुदायोऽवयवशब्देन मर्यादावयवत्वान्मर्यादा, अभिविध्यवयवत्वाद-
20 भिविधिरिति व्यपदिश्यते, ततो विशेषणसमासो भवति, समुदाये च स्वैरस्वैर्यक्षौहिणी-रूपे कार्यासम्भवादवयव एव स्वैर इत्यादिः कार्यभागिति सौत्रो वा निर्देशः तेनेतरे-तरयोगे बहुवचनं समाहारे ह्रस्वत्वं च न भवति, अथवा स्वैरस्वैरिभ्यां सहिताऽक्षौहिणी स्वैरस्वैर्यक्षौहिणीति "मयूरव्यंसकेत्यादयः[5]" इति सूत्रत्वान्मध्यपदलोपी समासः, एवमन्यत्राऽपि । तथाऽत्र सूत्रे विषयसप्तमी, तेन स्वैरादिषु निष्पत्स्यमानेषु योऽकार
25 इत्यर्थः, स्वेनाऽऽत्मना ईरः स्वैरः "कारकं कृता" इति समासः, ईर इति सामान्येन घञन्तस्य कान्तस्य च परिग्रह इत्युभयत्राऽपि कार्यं, स्वैरशब्दस्य घञन्तस्याऽप्य-भ्रादिदर्शनान्मत्वर्थीयेनाप्रत्ययेन कर्त्रभिधानं भवति, स्वयमीरतीति युजादित्वात्पा-क्षिकणिजन्ततया प्रयोगोऽयम् । ऐत्वार्थमिति–अन्यथा णिनि स्वैरीत्यनिष्टं रूपमाप-

१ ३–४–४२ । २ तन्तुसन्ताने । ३ १–२–१८ । ४ १–२–१९ । ५ ३–१–११६
६ ३–१–६८ ।

द्येत । अक्षाणामूहोऽस्यामस्तीति, इदमर्थकथनमात्रं, अक्षाणामूहिनीति तु विग्रहः कार्यः, अक्षौहिणीपूर्वपदस्थादिति णत्वम् ।

**'अनियोगेलुगेवे'** । १–२–१६ ॥ अनियोगे[1]–अवधारणमवश्यम्भाव इत्यर्थः । इहैवेत्यत्र एवशब्दो वाक्यालङ्कारे, ये त्वनियोगेऽव्यापारणे इच्छन्तीति–ये शिवमुख्याः, कटं कुर्वन्त्यादिव्यापारणं तदभावे । "अमैवाऽव्ययेन[2]" इत्यादि एतेषु सर्वेषु स्वरूपाख्यानमेवाऽस्ति, न तु व्यापरणमिति, यदाऽव्ययेन सह समासस्तदाऽमाऽमन्तेनैवेत्यर्थः–निमूलकाषं कषतीत्यादाविति । "धातोस्तन्निमित्तकस्यैव[3]" इति, क्यनिमित्तस्यैव औदौत इत्यर्थः । "ङः शाकटायनस्यैव[4]" इति ह्यस्तन्याःवाक्यमित्युक्तिः । वृत्तिरपीति–मुमूर्ष इत्येव वा सन्प्रत्ययस्य वा वृत्तिः प्रवृत्तिरित्यर्थः । इहैव स्यादित्यादीनि पाणिनीयसूत्राणि । 'यदैव[5] पूर्वे जनने शरीरम्' इति कुमारसम्भवः । 'दशैव[6]कोप०' इत्यादि कादम्बर्याम्, अत्र रिपोर्हिरण्यकश्यपोः; 'अद्यैवाऽवां[7] रण०' इति वेणीसंहारे, 'तरसैव[8]०' इत्यादि किराते, कुलटाऽसती, पतञ्जलिः–सांख्यमताध्यात्मशास्त्रकर्त्ता पुरुषविशेषः, सीम्नोऽन्तः–एकदेशः, प्रध्ययनमिति प्रशब्दस्याऽव्ययस्य हितादित्वात्समासः, मनीषा बुद्धिः, त्वै इति तुशब्दस्योकारलोपे त्वै इति रूपं मन्यते परः, ततः केन सूत्रेणोकारलोप इति परस्याऽऽशयः; तुवै, त्वै, नुवै, न्वै, इति तु ४ अवधारणार्थाः ।

**'वौष्ठौ तौ समासे'** । १–२–१७ ॥ अत्र सूत्रत्वात्समाहारोऽन्यथा "प्राणितुर्य[9]०" इति स्वैरिति व्यावृत्त्या निषेधः स्यात्, यद्वा पुटापुटिकेतिवत् ओष्ठावयवयोगात्समुदायोऽप्योष्ठ इति प्रक्रियया कर्मधारयः । तौ चेन्निमित्तेति–एकत्रैवेति, परममोष्ठसौन्दर्यं यस्या इति परमौष्ठसौन्दर्या इत्यत्राऽकारलुग्भवति । बिम्ब्याः फलं विकारोऽवयवो वा "हेमादिभ्योऽञ्[10]," अधरोत्तरयोरोष्ठे नित्यमिति नन्दिस्वामी । "ओमाङि[11]" आ ऊढा ओढेति "गतिर्केन्यः[12]" इति समासः, खट्वश्यर्तिनिक्षेपणीयेत्यादिक्रिया योज्या, तथा दध्यत्तोरिति भक्षणीयं वर्जनीयं वेति योगः ।

**'उपसर्गस्यानिणेधेदोति'** । १–२–१९ ॥ न इणेत् अनिणेत्, अनिणेच्च

---

१ अनियोगे–नियोगशब्दस्य० । २ पा० २–२–२० । ३ पा० ६–१–८० । ४ पा० ३–४–१११ । ५ यदैव पूर्वजनने शरीरम्, सा दक्षरोषाद् सुदती ससर्ज । तदा प्रभृत्येव विमुक्त संगः, पतिः पशूनामपरिग्रहोऽभूत् ॥ इति कुमार संभवे. प्र० स० ५३ श्लो० ॥ ६ जयत्युपेन्द्रः स चकार दूरतोबिभित्सया यः क्षणलब्धलक्षया । दशैवकोपारुणया रिपोरः स्वयंभयाद् भिन्नमिवास्रपाटलम् ॥ कादम्बर्या मंगल श्लो० ३ ॥ ७ अंक ४ श्लो० १५ । ८ सर्ग १२ श्लो० २६ । ९ ३–१–१३७ । १० ६–२–४५ । ११ १–२–१८ । १२ ३–१–४२ ।

तदेच्च अनिणेधेत्, अनिणेधेच्च ओचेत्यादिविग्रहः, न विद्येते इणेधौ यत्र सोऽनिणेध् स चाऽसौ एचेति द्वन्द्व इति वा ।

'**वा नाम्नि**' । १–२–२० ॥ उपेकीयतीति इत्यत्र धुटस्तृतीय इति न पस्य बत्वं, 'असिद्धं बहिरङ्गमन्तरङ्ग' इति न्यायात्, न च वाच्यं "स्वरस्य[1] परे०" इति, "न[2] सन्धी०" त्यादिना बाधितत्वात्, यतस्तत्र परिभाषाऽपि 'असिद्धं बहिरङ्गमन्तरङ्ग' मित्यनेन न्यायेनाऽबाधि, एवमन्यत्राऽपि " ओमाङि[3] " इति पूर्वसूत्रेणाऽनेन च सूत्रेण अवर्णे लोपे व्यञ्जनान्तत्वे संयोगान्तत्वे " पदस्य[4] " इति लोपोऽसंयोगान्तत्वे " धुटस्तृतीय[5] " इति तृतीयत्वं च प्राप्नोति, तदसिद्धं बहिरङ्गमिति न्यायान्न भवतीति ज्ञेयम् ।

'**इवर्णादेरस्वेस्वरे यवरलम्**' । १–२–२१ ॥ अस्वे स्वरे इत्यसमस्तनिर्देशः स्वरसम्बन्धनिवृत्त्यर्थः, तेन " एदैतोऽयाय्[6] " इत्यादौ स्वरस्यैवाऽनुवृत्तिः, न त्वस्वस्येति तेन रायैन्द्रीत्यादौ स्वेऽपि भवति । पित्रर्थं इति पित्रेऽयमर्थशब्देन विग्रहः, " तदर्थार्थेन[7] " इति अर्थशब्देनैव चतुर्थ्या अभिहितत्वाद्वाक्याभावे अर्थशब्देन नित्यसमासः ।

'**ह्रस्वोऽपदेवा**' । १–२–२२ ॥ अति एतीति, ह्रस्वोऽपि सन्धिकार्यमिति[8], " नित्यर्था धातूपसर्गयोः " इति वर्तत एवेति । ह्रस्वस्याऽपीति–अयमर्थः, व्यक्तिः पदार्थः तत्र च प्रतिव्यक्तिलक्षणेन प्रवर्तितव्यं, अप्रवृत्तौ च तस्याऽऽनर्थक्यं स्यादिति पर्जन्यवत्सर्वत्र फलाभावेऽपि तेन प्रवर्तितव्यं, पर्जन्यो हि यावदूनं पूर्णं च सर्वमभिवर्षति । वध्वाविति–ननु ऊकारस्यौकारस्य च ओष्ठ्यत्वादस्वस्वराभावेनाऽपद इति व्यावृत्तेर्द्व्यङ्गविकलतेति ? सत्यम्, मतान्तरेणौकारः कण्ठोष्ठ्य इत्यूकारमोष्ठ्यं प्रति अस्व इति न द्व्यङ्गविकलतेति । नद्युदकमित्यादौ षष्ठीसमासे सत्यप्यन्तर्वर्त्तिविभक्त्यपेक्षया पदत्वमपीति, युगपत्पदत्वापदत्वे, अत्र च सूत्रेऽपद इति सूत्रांशे नञः प्रसज्याश्रयणात्तत्र च विधिः सामर्थ्यप्राप्ततया गौणत्वात्प्रतिषेधस्य च विधीयमानतया प्राधान्यात्तदाश्रयमेव कार्यं भवतीति भावः । एवमिति–" नाम नाम्न्यैकार्थ्ये[9]० " इत्यनेन प्रथमं वेः पश्चादनोः समासे सतीत्यर्थः, ततोऽनुव्यचलदित्यतः समासात्सेर्लुग्, " दीर्घङ्याब[10]० " इत्ययेन अथवेति–स्वरादेराकृतिगणत्वाद्विभक्त्यन्ताभत्वाद्वाऽव्ययत्वमित्यर्थः, अव्ययत्वात्स्याद्युत्पत्तिरर्थश्च स एवेति । इवर्णादेरिति[11]–ह्रस्वोऽपदे चेति च सूत्रद्वयेन दध्यत्रेति ?, यत्वे मतान्तरेणोवर्णात्[12] य् दधि यत्रेति यत्वबाधनार्थम्, ह्रस्वत्वे

१ ७–४–११० । २ ७–४–१११ । ३ १–२–१८ । ४ २–१–८९ । ५ २–१–७६ । ६ १–२–२३ । ७ ३–१–७२ । ८ संहिता इति शेषः । ९ ३–१–१८ । १० १–४–४५ । ११ सूत्रद्वयसंगतोदाहरण श्रेणिमाह । १२ इवर्णादेः इति पञ्चमी व्याख्यानरूपेण ।

दधि अत्रेति ३, तत्र दध्यत्रेति स्वरूपेणैकं रूपं, "अदीर्घाद्वि०" इत्यादिसूत्रेण त्रतकारस्य द्वित्वे द्वितीयं, धस्य द्वित्वे तृतीयं, धस्य त्रतकारस्य च द्वित्वे चतुर्थं, तथा "ततोऽस्या" इति यस्य द्वित्वे पञ्चमं, यस्य त्रतकारस्य च द्वित्वे षष्ठमेवं दधि यत्रेति दधि अत्रेति च रूपे त्रतकारस्य विकल्पेन द्वित्वे रूपचतुष्टयमित्येवं दश रूपाणि ज्ञेयानि। तथा नदी एषेति शब्दयोर्यत्वे नद्येषा १ अत्राऽदीर्घा० इति विकल्पेन दस्य द्वित्वे नद्द्येषा २ "ततोऽस्या" 5 इति यस्य द्वित्वे नद्य्येषा ३ ह्रस्वत्वे नदि एषा ४ इवर्णात्परतो यकारे नदी येषा ५ मतान्तरेण प्रकृतिवद्भावे नदी एषा ६ इति षड् रूपाणि। इवर्णोवर्णाभ्यामेव च परतो यकारवकारौ दृश्येते नतु ऋवर्णऌवर्णाभ्यां परतो रलाविति।

'एदैतोऽयाय्'। १-२-२३॥ रायैन्द्रीति, इन्द्रो "देवता"ऽस्या इत्यणि ऐन्द्री पूर्वदिक्, धृङ्तत्स्थाने ध्रियते स्वेन रूपेणाऽऽत्माऽनयेति "श्वादिभ्यः" इतिक्तौ 10 धृतिः सन्तोषस्तया धृतिरिति "कारकं कृता" इति समासः, रायो धृतिर्धरणमिति कृतीति षष्ठीसमासो वा।

'य्यक्ये'। १-२-२५॥ गव्यमिति गोशब्दस्य युगादिपाठो हितादावर्थे तदन्तावपि तस्माद्यप्रत्ययार्थः, तेन सुगव्यम् अतिगव्यम् इत्यादावपि "उवर्ण-युगादेर्यः" इति यः सिद्धः। उपोयते, औयत इति रूपे, वेंग्-तन्तुसन्ताने इत्यस्य 15 वेंगः, उंङ् कुंङ् इत्यस्य च कर्मणि, शरशब्दाद्यप्रत्यये ओकाराभावादवादेशाभावे कथं शरव्यमित्याशङ्क्याऽऽह शरव्यमितीति।

'ऋतोरस्तद्धिते'। १-२-२६॥ ननु कार्यमित्यत्र परत्वाद् घ्यणित्यत्र णोपदेशाद्वा वृद्धिरेव भविष्यति किं तद्धितग्रहणेन? सत्यं, अत्र तद्धितग्रहणं विना जागृयात् इयृयात् इत्यनयो रत्वं स्यात्, ननु परिसर्येत्यत्राऽपि प्राप्नोति। न तत्रा- 20 ऽन्यदपि वक्तुं शक्यं क्यपोऽधिकारे यग्रहणं गुणार्थमिति।

'एदोतः पदान्तेऽस्य लुक्'। १-२-२७॥ यद्यपि पदान्त इति व्यधिकरणमकारस्य एदोतश्च सम्भवति तथाप्येदोतोरेव कर्तव्यम्।

'गोर्नाम्न्यवोऽक्षे'। १-२-२८॥ इत्यत्राऽकारलोपबाधनार्थमवादेशविधानात् अकारस्य च पदान्त इति च विशेषणे गवाक्ष इत्यत्राऽपदान्तत्वादकारस्य लोप- 25 प्राप्तिरेव नाऽस्ति, कुतस्तदपवादोऽवादेशः सम्भवति? किञ्च, "एदोतः" इत्यत्रैव सूत्रेऽ-

---

१ ६-२-१०१। २ ५-३-९२। ३ ७-१-३०। ४ विशेषणम् इति शेषः। ५ १-२-२३।

स्यैत्यस्मिन्नेव सूत्रांशेऽकारस्य "नामसिद्०" इति पदत्वे, "एदोतः पदान्त" इत्यनेन लोपप्राप्तिर्नाऽन्यत्रेत्येदोतोरेव पदान्त इति विशेषणमिति ।

'गोर्नाम्न्यवोऽक्षे' । १–२–२८ ॥ गोर्नाम्नि संज्ञायामिति, सा च समुदायेनैव गम्यते नाऽवयवैरित्याह गम्यमानायामिति ।

5 'स्वरे वाऽनक्षे' । १–२–२९ ॥ न अक्षोऽनक्ष इति प्रसज्यवृत्तिर्नञ्, पर्युदासे हि विधिः प्राधान्यात् प्रतिषेधस्य तु सामर्थ्यप्रापितत्वाद् गोऽक्षसङ्घात इत्यादावनक्षविधिरेव स्यान्नत्वक्षाश्रितः प्रतिषेधः, प्रसज्ये तु प्रतिषेधस्य प्रधानत्वादक्षादिसमुदायस्थेऽप्यक्षशब्देऽक्षाश्रितः प्रतिषेधः सिध्यतीत्याह–सचेत्स्वर इत्यादि, ओत इत्येवेति, चित्रा गावो यस्य स चित्रगुः पुंवद्भावो ह्रस्वत्वं च, ततश्चित्रगवेऽयं चित्रग्वर्थ इति, 10 अत्र ओत इत्यनुवृत्तिमन्तरेण ह्रस्वत्वे कृत एकदेशविकृतोऽप्ययं गोशब्द एवेत्यत्राऽपि स्यादित्यर्थः ।

'इन्द्रे' । १–२–३० ॥ स्वर इत्यस्याऽधिकरणं, इन्द्रे इति, ततस्तदादाविति वक्तव्यं, गवेन्द्रयज्ञ इत्याद्यर्थे केवले च व्यपदेशिवद्भावाद्भवति ।

'प्लुतोऽनितौ' । १–२–३२ ॥ अतीति नाऽनुवर्तते, इति शब्दवर्जनवैयर्थ्या-
15 दित्याह–इति शब्देत्यादि । असन्धिरिति–न विद्यते सन्धिर्यस्येति बहुव्रीहिणा व्याख्येयं, एव उत्तरत्र, देवदत्त ३ अत्र न्वसि, "दूरादामन्त्र्यस्येति" प्लुतः, आगच्छ भो देवदत्तेति कस्यचिद्वाक्यस्याऽन्त इदमामन्त्र्यपदं द्रष्टव्यं, वाक्यान्ते प्लुतस्य विधानादिति ।

'ई३वा' । १–२–३३ ॥ लुनीहि३ इति, "क्षियाशीः प्रैषे" इति प्लुतः, केन-
20 चित् कश्चित्पृष्टश्चिनोमीदं ? स पृच्छकं प्रत्याह चिनुहि३ इदमिति, अत्र हेः प्रश्नाख्यान इति प्लुतः । वशा३ इति, वशक् कान्तौ वष्टीत्यचि वशाऽत्र प्लुतोऽपि छान्दसः ।

'ईदूदेद् द्विवचनम्' । १–२–३४ ॥ अग्नी इति इत्यादौ "दूरादामन्त्र्यस्य०" इति प्लुतः । तवे इति, ननु यथा स्वरे परे सन्धिकार्यनिषेधस्तथा पूर्वदेशस्थितेऽपि किं नेति ? सत्यं, "सप्तम्या निर्दिष्टेपूर्वस्य" इति न्यायात्स्वरापेक्षया पूर्वदेशव्यव-
25 स्थितस्यैव ईदादेः सन्धिनिषेधो नतु पूर्वस्थिते स्वरे, यद्येवं यत्र परत्र स्वरो भवति तवे आसाते इति तत्र पूर्वेणाऽपि सह सन्धिप्रतिषेधः प्राप्नोतीत्यत आह–प्रत्यासत्तेरित्यादि, अयमर्थो यस्मिन् सति यद्भवति तत्तस्य निमित्तमिति परस्वराश्रितत्वात्प्रथमं यत्वस्य

१ ७–१–२१ । २ ७–४–९२ । ३ ७–४–९९ । ४ ७–४–१०५ ।

तदनु अयादेशस्य च निषेधस्ते एव च परस्वरस्य प्रत्यासन्ने एत्वं तु परस्वरमन्तरेणाऽपि भवतीति न तत्स्वरनिमित्तं नतु प्रत्यासन्नं चेति प्रत्यासत्तिन्यायात्तन्निमित्तकस्यैव कार्यस्य निषेधो नाऽतन्निमित्तकस्येति । केचित्तु इति–जयादित्यप्रभृतयः । वाशब्देनेत्यादि–भाष्यकारवार्तिककारयोरसंमतत्वाच्चेति । अन्ये त्विति–उत्पलादयः । द्यौश्च पृथिवी चेति पृषोदरादित्वात् रोदसि इदन्त आदेशस्ततो द्विवचनम् । 5

'अदो मुमी'। १–२–३५ ॥ अदसो मुमी इति विग्रहो नत्वमुष्य मुमी इति विग्रहः प्राप्नोति, कथमदस इति ? सत्यं, अविवक्षितार्थस्य प्रायोगिकस्याऽदस् शब्दस्याऽत्र प्रयोगः, तत्र तु सार्थको गृह्यते, इत्यदः शब्दसम्बन्धिकार्याभावेऽदस इति भवति । ह्रस्वत्वाभावे तु स्वैरादिसूत्रवत्सर्वं द्रष्टव्यं, सूत्रत्वाद्वा समाहारेऽपि न ह्रस्वः । अम्यत्रेति–अम् गतावित्यतो भावे घञि अमः सोऽस्याऽस्ति इन् । 10

'चादिः स्वरोऽनाङ्'। १–२–३६ ॥ अनाङित्यत्र पर्युदासाश्रयणेन सदृशग्रहणाच्चादिना स्वरस्य विशेषणात्तदन्तत्वासम्भवात्सामानाधिकरण्यालाभात् केवलस्य ग्रहणमित्याह–आङ्वर्जितश्चादिरव्ययसंज्ञः स्वर इति। वृत्तौ तु द्वितीयमुत्तरम् । अ अपेहि इत्यादौ अ इ ए ओ शब्दा अहोशब्दार्थे, ई–खेदे, उ–अक्षमायां, ऊ इति अन्यायद्योतने, आ एवं किल मन्यसे इति आकारो वाक्यालङ्कारं वाक्यार्थविपर्ययं वा द्योतयति, 15 ऊष्यते–पीड्यते बीजादिवस्त्वनेनेति "व्यञ्जनाद्घञि" ऊषः, सोऽस्मिन्नस्ति "मध्वादिभ्यो र" इति रे ऊषरः, शृणोतेर्णिग्यलि श्राव ओः श्राव ओश्रावस्तं करोति णिचि पूर्ववत्, हौ ओश्रावयेति क्रियापदमखण्डं, जानु उ इति जायतेऽनेनाऽऽकुञ्चनादीति "कृवापाजि०" इत्यादिना उणि जानु, अत्र जानीत्युकारनिर्देशान्न "नजनवध" इति प्रतिषिद्धाऽपि वृद्धिर्भवति । आ उदकान्तादिति–अत्राऽऽङ्मर्यादायां तेन प्रियप्रोथानुव्रजन- 20 स्योदकमर्यादाभाव आङा द्योत्यते । आ आर्येभ्य इति–अत्र आङभिविधौ तेन यशो गतिं प्रत्यार्याणामभिविधित्वं द्योत्यते । मर्यादाभिविधौ चेति–अवधिमता सम्बद्धोऽवधिरभिविधिरभिव्याप्तिः, अवधिमपि यो व्याप्नोतीत्यर्थः, अवधिमता सम्बद्धो योऽवधि स मर्यादा तं परित्यज्य यो वर्तत इत्यर्थः । वाक्यस्मरणयोरिति–वाक्यशब्देन वाक्यार्थ उच्यते, चादीनां द्योतकत्वात्, अर्थस्यैव च द्योत्यत्वात्, न तु शब्दस्येति । 25 आ एवं किल मन्यसे–पूर्वप्रक्रान्तवाक्यार्थस्याऽन्यथात्वद्योतनायायमत्राऽऽकारः, अन्ये तु वाक्यशब्देन वाक्यमेवाऽऽहुस्तत आ एवं किल मन्यसे नैवं पूर्वममंस्थाः सम्प्रति

---

१ ७–२–२६ । २ उ० १ ।

मन्यस इति वाक्यसूचनायाऽऽकारः ¹प्रसज्यते तथा स्मृतेः सूचक आकारः प्रसज्यते ततः स्मृत्यर्थो निर्दिश्यते आ एवं नु तदिति ।

'ओदन्तः'। १-२-३७ ॥ नो इन्द्रियमिति, इन्द्र-आत्मा तेन मृष्टं दृष्टं जुष्टं वा तस्य चिह्नं वा इन्द्रियमिति, सूत्रनिपातनादिन्द्रियं, नो सदृशमिन्द्रियं नोइन्द्रियं मन
5 उच्यते । समपद्यतेति-वृत्तावर्थकथनं, नतु च्वेरारम्भकमिदं वाक्यं, कृभ्वस्तियोग एव च्वेर्विधानात्, गोऽभवदित्यत्र "अधण्तस्वा०" इत्यव्ययत्वे सेर्लुप्येदोतः पदान्त इत्यलोपः । इत्याद्यपीति-तिरस्नमस्अदस् इत्याद्यपि स्वरादिर्नतु चादिरित्यर्थः । अहो इत्यादय इति-अ ह उ अहो इति, उत अहउ उताहो इति, आ ह उ आहो इत्यादावर्थाभेदाच्चादिसमुदायस्याऽपि चादित्वात्पूर्वेणैव सिद्धत्वात्, अनर्थकमिति
10 परस्याऽऽशयो, नैवं, एकनिपातत्वाच्चादिषु तथैव पाठात्पूर्वेण न प्राप्नोतीति पृथग्योगारम्भ इत्याह-अहो इत्यादय इति ।

'सौ नवेतौ'। १-२-३८ ॥ आमन्त्र्यविहितः सिरत्र ग्राह्यः, अन्येन स्वरस्य व्यवधानादोकारासम्भवाच्च प्राप्तेरभावात्प्रतिषेधोऽनर्थकः, वेत्युक्तेऽपि विकल्पे सिद्धे नवेत्यधिकारार्थं कृतं तेन सर्वत्र यत्र नवेति तत्राऽधिकारो यत्र तु वेति तत्र
15 नाऽधिकार इति ।

'ऊँ चोञ्'। १-२-३९ ॥ ऊँ चेति सूत्रत्वाल्लुप्तविभक्तिकं पदं प्रक्रियालाघवार्थं, कार्यी निमित्तं कार्यमित्येष निर्देशक्रम इति कार्यिणः पूर्वोपादाने प्राप्ते ऊँ चेति कार्योपादानमसन्धिलक्षणकार्यप्रत्यासत्त्यर्थं, तेन तस्यैवाऽसौ भवति तस्य चाऽभावरूपत्वात्तद्विषयस्यैव ऊञोऽभवत् चकाराद्विकल्पेन भवतीत्याह-असन्धीति, उ इति अहो इती-
20 त्यर्थः । तेन विकृतस्येति-विकृतस्याऽञितो विकृतौ सत्यां स्वरूपहानेरित्यर्थः, अयमभिप्रायो द्वाविमावुकारौ, एको निरनुबन्धोऽपरः सानुबन्ध इति, तत्र यो निरनुबन्धस्तस्याऽहो इत्यत्र ओकारादेश इष्यते नाऽपरस्य, अत एव जान्वस्य रुजतीत्यत्र वत्वं सिद्धं, अथवाऽत्र सूत्रे उकारप्रश्लेषात् उ उञ् ऊञ् इत्युकारेण उञो विशेषणादुकाररूपस्योञो ग्रहणादहो इत्यादौ न भवति, उत्तरत्र तु जात्याश्रयणाद्दीर्घीभूतस्याऽपि जान्व-
25 स्य रुजतीत्यादौ वत्वं भवति ।

'अञ्वर्गात्स्वरे वोसऽन्'। १-२-४० ॥ ननु तत्पुरुषगर्भकर्मधारयात्पञ्चमी, अत्राऽऽसन्नित्युक्ते यदि वकाररूपादेशस्य स्वरूपेणाऽभावो विधीयते तदाऽऽदेशविधानमनर्थकं स्यात्, अथ उञ्रूपस्य स्थानिनो निवृत्त्यर्थं तदिति चेत् ? सत्यं, एवं सत्युञ

---

१ प्रयुज्यते ल० न्या० । २ १-१-३२ ।

एव निवृत्तिं कुर्यात्, तस्मादसन्निति मुख्यार्थबाधायां गुणकल्पनाऽप्रधानकल्पनाऽऽश्रीयत इत्याह–असन्नभूतवदिति–असिद्धवदकृतवदित्यर्थः। ततश्च स्थान्याश्रयं कार्यं सिद्धं भवति, ननु असन्निति विनाऽपि प्रथममेव द्वित्वे कुङ्ङ्वास्त इति सेत्स्यति तत्किमनेनाऽत्र दर्शितेन ? सत्यं, अत्र परत्वात् "ह्रस्वाद् ङणनो द्वे" इत्यनेन जायमानं द्वित्वं बाधित्वा नित्यत्वादनेन वकारस्तस्य चाऽसत्त्वाद्द्वित्वं। किमुत आवपनमिति– 5 आसमन्तद्धातूनामनेकार्थत्वेनोप्यते क्षिप्यति वस्त्वस्मिन्निति आवपनं–सर्वं भाजनं। तद्वद्वस्य मतमिति–यत्र "ततोऽस्याः" इत्यस्याऽप्राप्तिस्तत्र "अदीर्घाद्०" इति प्राप्तमपि द्वित्वं न प्रवर्तते नित्यत्वादिकारणेभ्यः, असत्त्वाद्द्वित्वमिति, "अदीर्घाद्०" इति "ततोऽस्याः" इति द्वित्वादौ कर्तव्येऽसन्नेव यतोऽसन्नित्यत्राऽपि वा योजनीयः, वकारादेशोऽपि वाऽसन् भवतीत्यर्थः। ततः पक्षेऽसत्त्वविधानात् कार्यविशेषं प्रति सत्त्वमेव। 10

**अइउवर्णस्यान्तेऽनुनासिकोऽनीनादेः १–२–४१** ॥ विरामत्वाच्चेति, चकारस्यैवकारार्थत्वेन विरामत्वादेव न सन्धिः सन्धिरभाव इत्यर्थः ॥ वृक्ष इति, "कादिर्व्यञ्जनम्" इति सूत्रे कस्याऽऽदिरिति तत्पुरुषसमासे विसर्गस्यापि व्यञ्जनत्वे "नामसिद्०" इति वृक्षाकारस्य पदत्वादन्त इति व्यावृत्तेर्न द्व्यङ्गविकलतेति "पूर्वभवदार०" इत्यादिना विष्णुः पृथिवीपतिरभिप्रायेण। 15

॥ इति अवचूर्णिकायां समाप्तोऽयं द्वितीयः पादः ॥

**'तृतीयस्य पञ्चमे'**। १–३–१ ॥ "सौ नवेतौ" इत्यतो नवेति, "एदोतः" इत्यतः पदान्त इति, "अइउवर्णस्य०" इत्यतोऽनुनासिक इत्यधिकारत्रयं पादान्तरागतमप्यनुवर्तते, 'अपेक्षातोऽधिकार' इति न्यायात्, प्रथमद्वितीयतृतीयादित्वं वर्गस्यैव धर्म इत्याह–वर्गतृतीयस्येति, स्थान्यासन्न इति यद्वर्गसत्कस्तृतीयस्तद्वर्गसत्क 20 एवाऽनुनासिक इत्यर्थः। वाङ्मधुरा वक्तीत्येवंशीलेति, उच्यत इति बाहुलकत्वाद्वा "दिद्युद्०" इत्यादिनिपातनाद्वाक्, मधु माधुर्यमत्राऽस्तीति "मध्वादिभ्यो रः" इति रे मधुरा। षण् नया इति, नीयते परस्य बुद्धिमर्थं एभिरिति "पुंनाम्नि घ" इति घे नयाः, षडिति जसन्तः, षण्णां नया इति षष्ठीसमासो वा षट्संख्या नयाः षण्णया इति मयूरव्यंसकादित्वात्समासः, कर्मधारयस्तु संख्यासमाहारे चेत्यत्र नियमसद्भावान्न 25 भवति, एवमन्यत्राऽपि संख्यायाः समासो द्रष्टव्यः, तन्नयनमिति–नयतेर्भावे करणाधिकरणयोर्वाऽनटि नयनं, षष्ठी वा समासो व्यस्तं वा पदद्वयं भावानटि तृतीयासमासो वा, अत्र दस्याऽसत्त्वे तत्स्थानस्य नस्याऽप्यसत्त्वान्नलोपो न भवति। ककुम्मण्डल-

१ १–३–२७। २ १–३–३४। ३ १–३–३२। ४ १–१–१०। ५ १–१–२१। ६ १–२–३८। ७ १–२–२७। ८ १–२–४१। ९ ५–२–८३। १० ७–२–२६। ११ ५–३–१३०।

मिति–कं वायुं स्कुभ्नातीति 'ककुब्०' इत्यादिनिपातनात्ककुभो मण्ड्यते 'मृदि०' इत्यले मण्डलशब्दस्त्रिलिङ्गो मण्डलं समूहः ककुम्मण्डलं, अत्र "तौ सुमो" इत्यनेन नाऽनुस्वारः, "अज्वर्गादि" त्यतोऽसदधिकारस्य प्रयोजनवशादिष्टत्वात्, अनुनासिक इति लक्षणेन चिह्नेन निष्पन्नस्य मस्य लाक्षणिकत्वात्, असिद्धं बहिरङ्गमित्यसिद्धत्वाद्वेति । व्यञ्जन-
5 स्येति १, अनुनासिक इति २, अनुनासिकमिति ३, स्थानत्रयेऽपि सामान्येनेति द्रष्टव्यं, अनुनासिकं स्थान्यासन्नं मात्रमवधारणे हल् च तन्मात्रं च हल्मात्राऽस्येति वा हल्मात्रमिति, अत्र लकारस्य सानुनासिको लकारः । ननु पण्णया इति परत्वा-त्तृतीयस्याऽनुनासिकं बाधित्वा "अदीर्घाद्०" इत्यनेन द्वित्वप्राप्तिस्ततः पड्ण्णया इति प्राप्नोतीत्याह–अनुनासिके कृते पश्चाद्द्वित्वस्य भावादिति, "अदीर्घादि"–
10 त्यनेन द्वित्वं न प्रवर्तते तत्राऽन्वित्यधिकारात् । कृते त्वनुनासिके प्रवर्तत इत्यर्थः ।

'प्रत्यये च' १ । ३ । २ । वाङ्मयमिति वाचां विकार इति "एकस्वराद्" इत्यनेन, वाक् प्रकृताऽस्मिन्निति, "अस्मिन्" इत्यनेन वाच आगतमिति "नृहेतुभ्य०" इत्यनेन वा मयट् । गुडलिण्मानिति गुड्त् रक्षायामित्यस्य कर्तरि के गुड्धातोर्वा कर्मणि 'कुगुहुनी०' डे गुडः, गुडाः शिखण्डः इति पुलिङ्गः, अत्र
15 "मोवर्ण०" इति वत्वे कर्तव्ये हस्य ढत्वमसिद्धं द्रष्टव्यमिति । चकार इति–अयमर्थश्चकारः पूर्वसूत्रशेषतामस्य सूत्रस्य सूचयन्नात्मनि वेत्यस्य सम्बन्धाभावं वाऽ-नुवृत्तेश्चोत्तरत्राऽव्यवधानं सूचयतीति ।

'ततो हश्चतुर्थम्' १ । ३ । ३ । नन्वत्र तत इति किमर्थं यतो 'ऽअर्थवशा-द्विभक्तिपरिणाम' इति न्यायात्तृतीयस्येति पञ्चम्यन्तत्वेन व्याख्यायमाने स्थि-
20 तोऽर्थः सम्पद्यते ? सत्यं, ततो ग्रहणं पञ्चम इत्यस्याऽननुवृत्त्यर्थं, अन्यथा तद्भ्नुते तद्भ्मलयतीत्यादावेव चतुर्थः स्यात्, न वाग्धीनः ककुब्भास इत्यादिषु, वाग्धीन इति, "कारकं कृता" इति समासः, ननु हस्य कण्ठ्यत्वात्तदासन्नेन हस्य घेनैव भाव्यं न झधभैरित्यतः पूर्वचतुर्थ इति कर्तव्यमिति नैवम् चतुर्थ इति गुरुकरणात्पूर्वप्रत्यास-त्तिर्लभ्यतेऽन्यथा घ इत्येव कुर्यादित्याह–प्रत्यासत्त्या पूर्वसवर्ग इति । अज्झलाविति–
25 अत्र संज्ञाशब्दत्वात्कत्वाभावः, यतोऽर्थप्रत्यायनाय शब्दप्रयोगः, अच् इति हि स्वर-प्रत्यायनमिष्टं, कत्वे तु कृते अक् इत्युक्ते समानप्रतीतिः स्यादिति, अत एव च "सिजद्यस्तन्याम्" इत्यादौ विवक्षितार्थप्रतीत्यभावात् सिचश्चकारस्य कत्वं न कृतमिति ।

---

१ उणा० ९३२ । २ उणा० ४६५ । ३ १–३–३२ । ४ ६–२–४८ । ५ ७–३–२ । ६ ६–३–१५६ । ७ उणा० १७० । ८ लिङ्गा० पु. प्रकरणे श्लो. ९ । ९ २–१–४५ । १० ३–१–६८ । ११ ३–४–५३ ।

**'प्रथमादधुटि शश्छः'** १ । ३ । ४ । वाक्छूर इत्यादि, शूर वीरणि इति शूरयत इत्यचि इं दुं ढुं श्रुं स्नुं इति शवतीति "चिजिशु[1]समि०" इति रे दीर्घत्वे च शूरः, श्लिष्यतीति "भ्रूणतृणगुण[2]०" इति निपातनात् श्लक्ष्णः, श्विताऽवर्णे श्वेतत इति लिहाद्यचि श्वेतं, श्मनि मुखैकदेशे शेते "श्मनः[3] शीङोडित्" इति डिते श्मश्रु कूर्चं, श्यैङो "विलिंभिली[4]०"ति मे श्यामा अप्रसूताः स्त्रियः श्यामवर्णा वा । वाक्छूर इत्यादिप्रयोगेषु तृतीयस्य प्रथमे कृते तादृक्षात्प्रथमात् शकारस्याऽनेन छः प्रवर्तते, ततस्तृतीयाधिकारेणैव सिध्यति न च परत्वाद् "अघोषे प्रथमो[5]ऽशिटः" इति प्रागेव प्रथमो भविष्यति ततस्तृतीयाभावात्कथं शस्य छादेशो भविष्यतीति वाच्यं, यतस्तत्राऽन्वित्यधिकारान्न प्रागेव प्रथमत्वमिति, सत्यं, तृतीयाद्विधीयमाने छे तृतीयस्य प्रथमत्वं पश्चान्न प्राप्नोति विधानसामर्थ्यात्, यथा "ड्नः[6] सः त्सोऽश्वः" इत्यत्र सूत्रे डकारात्परे त्से कृते टत्वं न भवति षड्त्सीदन्तीत्यत्र । किञ्च प्राङ्क् छेते सुगण्ट्‌ छेते इत्यादौ तृतीयाभावाच्छत्वं न स्यादिति विध्यर्थमिति । अधुटीति पर्युदासात्स्वरान्तस्थानुनासिकपरस्य शस्य छो भवतीति । वाक्छूर इत्यादौ "ऊनार्थपूर्वाद्यैः[7]" इति सः ।

**'रः कखपफयोः[8] ≍क≍पौ'** १ । ३ । ५ । ननु 'निरनुबन्धग्रहणे न सानुबन्धस्ये'ति न्यायात् करोतीत्यादौ सानुबन्धस्य रेफस्याऽऽदेशो न प्राप्नोति । सत्यं, "अरोः[9] सुपि०" इत्यत्र रुवर्जनाद्रोरप्यादेशः । तद्धि "रः पदान्त[10]०" इति सूत्रान्निरनुबन्धे रेफेऽनुवर्तमाने स्वयमेव सिद्धं सत् ज्ञापयति '<u>निरनुबन्धग्रहणे सामान्यग्रहण</u>'मित्यपि न्यायोऽस्तीति ।

**'शषसे शषसे वा'** १ । ३ । ६ । कः षण्ड इति वन षण संभक्ताविति षणधातोः सन्यत इति वाक्ये "पञ्चमाड्डः[10]" इति डे बाहुलकत्वाच्च सत्वाभावे षण्डो वृक्षसमूहः । ननु शषसे सो वेत्येवं सकार एव विधीयतां तस्य च "सस्यै[11] शषौ" इति कृते कश्शेते कष्षण्ड इत्यादौ शकारषकारौ सेत्स्यतः । एवमुत्तरत्राऽपि कश्चरति कष्टीकते भवांश्चरति भवांष्टीकते इत्यादौ शषौ सेत्स्यत इत्युत्तरार्थमित्यपि न वक्तव्यं, तथा कः शेत इत्यादौ "धुटस्[12]तृतीय" इत्यस्मिन् कर्तव्ये रुत्वस्य, अन्तः शेत इत्यादौ त्वसिद्धं बहिरङ्गमिति न्यायेन शत्वस्याऽसिद्धत्वे तृतीयत्वमपि न प्रवर्त्स्यति तत्किं शषयोः पृथग्विधानेनेति ? सत्यं, असिद्धं बहिरङ्गमिति न्यायस्याऽनित्यत्वज्ञा-

---

१ उणा० ३९२ । २ उणा० १८६ । ३ उणा० ८१० । ४ उणा० ३४० । ५ १-३-५० । ६ १-३-१८ । ७ ३-१-६७ । ८-१-३-५७ । ९ १-३-५३ । १० उणा० १६८ । ११ १-३-६१ । १२ २-१-७६ ।

पनार्थं, तेन बभूवुषेत्यादौ स्वरनिमित्तमुवादि सिद्धम् । किञ्च शषसग्रहणं व्यक्त्यर्थं तेनैतेषु कृतेष्वेतद्विलक्षणं कार्यान्तरं न भवति, ततश्चाऽन्तः शेते, मातः ! षण्ड इत्यादौ धुटस्तृतीय इति जत्वडत्वादिकं न भवति, कश्शेत इत्यादौ तु तृतीयाभावे रोः परेऽसत्त्वादपि सिध्यतीति न्यासः । कथं तर्हि सर्पिष्ष्विवत्यादौ षत्वमिति ? अत्र हि सो 5 रुत्वं तस्य सत्वं सुपः षत्वं ततः "सस्य[1] शषौ" इत्यनेन पूर्वसस्य षत्वं भवतीति । सत्यं, शषसविलक्षणमिति जत्वादिकं न भवति शषसरूपं तु भवत्येवेति ।

'**चटते सद्वितीये**' १-३-७ ॥ नन्वत्राऽसन्देहार्थं चछटठतथ इत्येवं किं न क्रियते सद्वितीयग्रहणमपनीयेति ? सत्यं, निमित्तबहुत्वे यथासंख्यं न स्यादित्यत आह-यथासंख्यमिति, न च सद्वितीयग्रहणे सत्यपि चकाराक्रान्तश्छकारोऽत्र, एवं 10 तकाराक्रान्तः थष्टकाराक्रान्तष्ठकारश्च यत्र भवेत्तत्रैव कार्यं प्राप्नोतीत्याशङ्कनीयं । "उदे[2]श्वरः साप्यात्", "चै[3]रेष्टः", "व्रीह्या[4]दिभ्य" इत्यादि ज्ञापकात्केवलेष्वेव भवतीति, इह च "तृतीय[5]स्ये"ति सूत्र उदाहरणेषु ह्रस्वात्परस्य तृतीयस्य पञ्चमस्य च पञ्चमेऽसंयुक्ते "अ[6]दीर्घाद्०" इति वा द्वित्वाच्चत्वाच्चत्वारिरूपाणि भवन्ति । "प्रत्यये[7] चे"ति ह्रस्वात्पञ्चमस्यैकव्यञ्जने "अदीर्घादि"ति वा द्वित्वाद्द्वे रूपे, "त[8]तो ह०" इति ह्रस्वात्तृती15 यस्याऽसंयुक्ते हेतुर्ये च वा द्वित्वाच्चत्वारि रूपाणि । "प्र[9]थमादधुटि"ति छत्वविकल्पपक्षे शस्य "त[10]तः शिट" इत्यनेन वा द्वित्वात्त्रीणि रूपाणि । "रः क[11]खपफे"ति-"शि[12]टः प्रथम०" इति वा द्वित्वाच्चत्वारि रूपाणि । प्रथमद्वितीयद्वित्वविकल्पपक्षे च अः ${\times}$क ${\asymp}$पानां वा द्वित्वाद्द्वे रूपे इति सर्वाणि षड् रूपाणि भवन्ति । "श[13]षसे"ति ह्रस्वात् शषसस्याऽसंयुक्ते शषसेऽदीर्घादिति वा द्वित्वात्त्रीणि रूपाणि, "चटत०" इति सूत्रे उत्तरेषु सूत्रेषु 20 च शषस ${\asymp}$पअं परेषां प्रथमद्वितीयानां "शिटः प्रथमद्वितीयस्ये"ति वा द्वित्वाद्द्वे रूपे ।

'**नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे**' । १-३-८ ॥ अधुट्पर इति-अधुट् परो यस्मादिति कार्यं । न तु धुट् परोऽस्मादिति कृत्वा नञा योगः कार्यः । यतः प्रसज्ययोगशङ्कया वर्णाभावेऽपि स्यात्, भवान् त् इत्यत्रेति । ननु परग्रहणं किमर्थं यावताऽधुटीत्युक्तेऽप्यधुटि परतो यच्चटतं तस्मिन्नस्य शादयो विज्ञातुं 25 शक्यन्त एवेति । नैवम् चटते परतो योऽधुट् तस्मिन्नकारस्यैते भवन्तीति कस्मान्न विज्ञायते ततश्च भवानावहति भवानाच्छादयतीत्यादावेव स्यान्न तु भवांश्चरतीत्यादौ । परग्रहणेऽनुवर्तिपदार्थापेक्षयाऽन्तरङ्गमपि तत्पुरुषं बाधित्वा बहुव्रीहेराश्रयणात्पूर्वोक्त-

---

१ १-३-६१ । २ ३-३-३१ । ३ ५-१-१३८ । ४ ७-२-५ । ५ १-३-१ । ६ १-३-२२ । ७ १-३-२ । ८ १-३-३ । ९ १-३-४ । १० १-३-३६ । ११ १-३-५ । १२ १-३-३५ । १३ १-३-६ ।

दोषाभाव इति। अनुस्वारापेक्षयाऽवयवावयविभावेऽनुनासिकापेक्षया स्थान्यादेशभावे पूर्वस्येति षष्ठी। प्रशान्तरति× प्रशाम्यतीति क्विपि, "अर्हन्पञ्चमस्य[1]" इति दीर्घत्वे "मो नो म्वोश्च[2]" इति मस्य नत्वे प्रशान्, अत्र नस्याऽसत्त्वे "नाम्नो नोऽनह्नः[3]" इति नलोपो न भवति। त्सरुक इति त्सरेरुप्रत्यये त्सरुः खड्गमुष्टिः, त्सरौ कुशल इति "कोऽण्मादेः[4]" इति के त्सरुकः। 5

'पुमोऽशिट्यघोषेऽख्यागि रः'। १-३-९॥ अत्र रमपनीय स इति कृते विधानसामर्थ्याद्रुत्वाभावे पुंश्चलीत्यादि न सिध्यति। पुंस्कामेति-पुमांसं कामयते "शीलिकामि०[5]" इति णो यद्वा कमेर्णिङन्तात्कामना कामो "युवर्णे०[6]" इत्यल् णिङभावे कमनं वा घञि वृद्धौ कामः, पुंसः कामोऽस्या आपि "पुंसः[7]" इति सः। पुंकोकिल इति पुमानिव कोकिलः पुंस्कोकिल इति मयूरव्यंसकादित्वान्मध्यपदलोपी 10 समासः। पुमांसं चलयति "कर्मणोऽण्[8]" शीर्यते परपक्षोऽनेन "पुन्नाम्नि०[9]" घे शरः। क्षुर इति "नाम्युपान्त०[10]" इति कः। क्षार इति ज्वलादित्वाण्णः, पुम् ख्यातः-अत्र ख्याग एव वर्जनात् ख्यांक् प्रकथने इत्यस्मिन् पुंस्ख्यात इति भवत्येव।

'नॄनः पेषु वा'। १-३-१०॥ अधुट्परे धुट्परे च पकारमात्रे निमित्तेऽस्य सूत्रस्य प्रवृत्तिर्व्याप्तिस्तदर्थत्वादित्यर्थः। तेन नॄंः प्सातीत्यादि सिद्धम्। 15

'द्विः कानः कानि सः'। १-३-११॥ अनुकार्यानुकरणयोर्भेदस्य विवक्षितत्वाच्छसन्तानुकरणादपि षष्ठी तथा सप्तम्यपि। द्विरिति कान्सत्कभवनक्रियापेक्षया क्रियाविशेषणमिदम्। अथाऽत्र सकारे कृते "सोरुः[11]" इति रुत्वं कथं न भवतीत्याह रस्येत्यादि-अयमर्थो यदि सस्य रुत्वं स्यात्तदा रेफाधिकारेणैव सिद्धं किं सविधानेन प्रक्रियागौरवं च परिहृतं भवति। तथाऽत्राऽनुस्वारस्य व्यञ्जनत्वात् "पदस्य[12]" 20 इति संयोगान्तलोपः कथं न भवति? नैवं, तत्र मुख्यव्यञ्जनसंयोगस्यैवाऽऽश्रितत्वादस्य तु सामर्थ्यप्रापितत्वेनाऽमुख्यव्यञ्जनत्वात्।

'स्सटि समः'। १-३-१२॥ सम इति प्रादिपठितस्यैव समो ग्रहणं, न षम ष्टम वैक्लव्ये इत्यस्य विजन्तस्य, "संस्कृते भक्ष्ये[13]" इत्यादिज्ञापकात्, अनुस्वारस्य व्यञ्जनत्वाद् "धुटो धुटि स्वे वा[14]" इति पक्षे सकारलोपे द्विसकारमेकसकारं च संस्कर्तेति 25 रूपद्वयं द्रष्टव्यं। संकृतिरित्यत्र गर्गादिपाठात् सट् न। अन्यमते तु संपरेः कृगः सट्

× अत्रप्रयोगे—१ ४-१-१०७। २ २-१-६७। ३ २-१-९१। ४ ६-३-९७। ५ ५-१-७३। ६ ५-३-२८। ७ २-३-३। ८ ५-१-७२। ९ ५-३-१३०। १० ५-१-५४। ११ २-१-७२। १२ २-१-८९। १३ ६-३-१४०। १४ १-३-४८।

भूषायामिति सूत्रकरणेन भूषायामिति किं ? इति व्यावृत्तिः । संचस्कारेति न चाऽत्र समुस्कृ इति कृते प्रत्ययोत्पत्तेः प्रागेवाऽऽदेशप्रसङ्ग इति वाच्यं, यतः परत्वान्नित्यत्वाद्धातुमात्राश्रयणेऽन्तरङ्गत्वाच्च प्रथममेव प्रत्ययस्ततस्तदाश्रितं कार्यं द्वित्वं तेन च सटो व्यवधानमिति ननु "[1]अघोषे शिटः" इति लुप्तस्य सस्य "[2]स्थानी वा०" इति स्थानित्वे सति कथं न भवति ? न च वाच्यमवर्णविधौ स्थानित्वमिति । स्सटीति वर्णसमुदायाश्रयणेन वर्णविधित्वाभावात् । न स्सडिति, सकारादिः सट् स्सडिति कृते वर्णविधित्वमिति । ननु 'निमित्ताभाव' इति न्यायेन द्वित्वे न समो व्यवधानात् कृगः स्सडागमो न प्राप्नोति ? नैवं, 'स्वाङ्गमव्यवधानक'मिति न्यायाद् द्वित्वरूपस्य स्वाङ्गस्य कृगं प्रति व्यवधायकत्वायोगादिति ।

'लुक्' । १-३-१३ ॥ अनेन समः परस्य कृगः स्सटि समो मकारलोपे रूपमेकं, केचिन्मतेन मकारलोपेऽनुनासिकेऽप्येकं पूर्वेण समो मस्य सत्वे सत्यनुस्वारानुनासिकयोर्द्वे रूपे, तथा सत्वेऽनुस्वारे च कृते सति कस्याऽऽदिरित्याश्रयणेनाऽनुस्वारस्य व्यञ्जनत्वे तस्मात्परस्य सस्य लोपे सानुस्वारमेकसकारं चैकं रूपमिति पञ्च रूपाणि ।

'तौ मुमो व्यञ्जने स्वौ' । १-३-१४ ॥ ननु तौग्रहणं किमर्थं स्वाविति विशेषणस्य विशेष्यसापेक्षत्वात्समानाधिकरणावधिकारानुविद्धावनुस्वारानुनासिकावेवाऽनुवर्त्स्येतः ? सत्यं, तौग्रहणमवधारणार्थं, अन्यथाऽनन्तरोक्ता लुगनुवर्तेत, पूर्वस्येति च ततश्च मुमोर्लुग्भवति पूर्वस्य चाऽनुस्वारः । चङ्क्रम्यत इत्यादौ निमित्तभूतवर्णापेक्षया पूर्वस्याऽकारादेः स्थानेऽनुनासिकश्चेति सूत्रार्थेऽनिष्टं रूपं चङ्क्म्यते इत्यापद्यते, तौग्रहणात्तु तावेवेति नियमितावनुस्वारानुनासिकावनुवर्तेते, तच्छब्दस्य पूर्ववस्तुपरामर्शित्वेऽपि सकारलुकोः सत्वासम्भवादनुनासिकस्य च सम्भवात् तस्यैव परामर्शः, द्विवचनोपादानात्तत्प्रतिबद्धानुस्वारस्य चेत्याह–तावनुस्वारेति । लाक्षणिकत्वादिति लक्षणं लिङ्गं तत आगतं अध्यात्मादित्वादिकणि लाक्षणिकोऽनुमेय उच्यते, लाक्षणिकत्वादेव "[3]नाम्नोनोऽन०" इति नलोपोऽपि न । त्वं षण्ढ इति वन षण इति षणः सनतीति वाक्ये "[4]शमिषणिभ्यां ढः" इति ढे बाहुलकत्वात् षे षण्ढः ।

'मनयवलपरे हे' । १-३-१५ ॥ मनयवलाः परे यस्मादिति बहुव्रीहिः, न तु तत्पुरुषः परग्रहणात् । यद्येवं मनयवल इति कस्मान्नोक्तं ? सप्तम्येव हि परशब्दार्थं प्रतिपादयिष्यति मकारादौ परे यो हकारस्तस्मिन्निति । नैवम् विपर्ययोऽपि विज्ञायेत हकारपरे मकारादाविति, ततश्च किं मह्यति, किं नह्यति, किं याहि, किं वहसि, किं

१ ४-१-४५ । २ ७-४-१०९ । ३ २-१-९१ । ४ उणा० १७९ ।

लिह्यत, इत्यत्रैव स्यात् । अकारादिना व्यवधानान्न भविष्यतीति चेत् न, 'येन नाऽव्यवधानं तेन व्यवहितेऽपि स्याद्' इति न्यायादेकेन वर्णेन व्यवधानमाश्रीयते । अथ प्रथमपक्षे किं ह्मलयतीत्यादौ सूत्रं चरितार्थमिति किमिति व्यवधानमाश्रीयत इति चेत्, न येन प्रतिपादकेन हकारे परे मकरादावेव सूत्रार्थः स्वीकृतः, तं प्रति पक्षान्तरस्याऽसम्भवाद्विपरीतप्रतीतिः स्यादिति तन्निरासाय परग्रहणं कर्तव्यमेवेति । 5
तथापि न कर्तव्यं विपर्ययप्रतीतौ हि अस्य वैयर्थ्यं स्यात् "तौ मुमो०" इत्यनेनैव रूपद्वयस्य सिद्धत्वात्, सत्यम् तर्हि नियमार्थमिदं स्यात्ततो मकरादौ हकार एव स्यान्नाऽन्यत्र । ततश्च त्वं मन्यस इत्यादौ पूर्वेणाऽपि न स्यादिति परग्रहणम् । तथा हकारस्य स्वो नाऽस्तीति व्यवहितमकाराद्यपेक्षया स्वोऽनुनासिको भवन्मकारादिरूप एव भवतीति । 10

'सम्राट्' । १-३-१६ ॥ रेफस्य स्वत्वाभावादनुनासिकप्राप्तिरेव नाऽस्तीत्याह—अनुस्वाराभाव इति । एकवचनस्याऽतन्त्रत्वाद्विवचनादावपि भवति ।

'ङ्णोः कटावन्तौ शिटि नवा' । १-३-१७ ॥ अस्योदाहरणेषु शषसानां "ततः शिटः" इति वा द्वित्वे दीर्घाग्रस्थयोः ङ्णोः सत्त्वे चत्वारि रूपाणि, ह्रस्वाग्रस्थयोस्तु ङ्णोरेव "अदीर्घाद्विति" वा द्वित्वे च पञ्च रूपाणि, भवाञ्शेत इति 15
"तवर्गस्य०" इति नस्य ञत्वं, बम्भण्षीति "सस्यं सषौ" इति षत्वम् । नन्वत्राऽन्तग्रहणं किमर्थं ? ङ्णोः कटावित्येवोच्यतां, नैवं, एवं कृते ङ्णोः षष्ठ्यन्तत्वे कटयोरादेशत्वं स्यात्तन्निरासायान्तग्रहणं, तर्हि ङ्णः कटमिति समाहारं कृत्वा ङ्ण इति पञ्चम्यन्तत्वमादेशत्वनिरासाय व्याख्यायतां ? न, अन्तग्रहणे सति प्राङ्क् साये इत्यत्र ककारस्य पदान्तत्वात् "नाम्यन्तस्था०" इत्यनेन पदमध्ये विधीयमानं षत्वं 20
न भवति, अन्यथा परादित्वेन ककारेण सकारस्य पदादित्वविघातात् षत्वं स्यादिति । तथा सुगण्ट्सु इत्यत्र "नामसिदय्०" इति टकारस्य पूर्वभक्तत्वेन पदान्तत्वे "पदान्ताट्टवर्गाद्०" इति प्रतिषेधात् "सस्य शषौ" इति सकारस्य षत्वं न भवति, परावयवत्वे तु अपदान्तत्वेन प्रतिषेधाभावात्स्यादेवेति । वण् शब्दे इत्यतो विचि वण्, क्विपि तु दीर्घत्वे वाण्, तथा सुगण् इत्यत्राऽकारणिगोर्लोपस्य "अहन्पञ्चमस्य" इति दीर्घत्वे 25
कर्तव्ये "न संन्धि०" इति स्थानित्वाभावात्कथं न दीर्घ इति चेत् ? सत्यं, तत्र हन्वर्जनस्योपदेशावस्थायां पञ्चमान्तग्रहणार्थत्वेन व्याख्यास्यमानत्वात् ।

---

१ १-३-१४ । २ १-३-३६ । ३ १-३-३२ । ४ १-३-६१ । ५ २-३-१५ । ६ १-१-२१ । ७ १-३-६३ । ८ ४-१-१०७ । ९ ४-४-१११ ।

'ङ्नः सः त्सोऽश्चः'। १-३-१८ ॥ षट् सीदन्ति, मतान्तरेण षड् सीदन्ति, इत्यत्र "[1] ततः शिट" इत्यनेन वा द्वित्वे चातूरूप्यं, षट्ट् सीदन्ति, "[2] अदीर्घाद्०" इति टस्य "ततः शिट" इति सस्य च वा द्वित्वे त्रैरूप्यमिति सप्त रूपाणि भवन्ति। षट्त् सीदन्तीति "[3] पदान्ताट्टवर्गाद्०" इति निषेधात्तवर्गस्य न टत्वं, षडिति प्रयोगस्थो डकारः सूत्रेऽनुक्तस्तत एव "[4] अघोषे प्रथमोऽशिट" इति टत्वं न भवति, इत्याह डकारनिर्देशादिति। भवान्त्साधुरिति–अथाऽत्र नकारस्य "[5] नोऽप्रशान०" इत्यनुस्वारानुनासिकपूर्वः सकारः कस्मान्न भवतीति ? उच्यते, अधुट्पर इति वचनात्, अत्र हि धुट्परस्तकार इति। षट् श्च्योतन्तीत्यत्र "[6] सस्य शषौ" इत्यत्राऽन्वित्यधिकारे वर्तमाने श्ववर्जनाभावे दन्त्यसकारस्य त्सः स्यादिति, ननु तर्ह्युपदेशावस्थायामपि तालव्यः पठनीयः किं दन्त्यपाठेनेति ? सत्यं, दन्त्यं पठन्नेवं ज्ञापयति 'दन्त्यापदिष्टं कार्यं तालव्यस्याऽपि भवति' परं दन्त्यस्थाननिष्पन्नस्य न सर्वस्य, तेन भवान् शेते इत्यादौ त्सो न भवति, ननु मधुगित्यत्र "[7] स्वरस्य परे०" इति णिलोपरूपस्य स्वरादेशस्य स्थानित्वात् शलोपो न प्राप्नोति, न च वाच्यं "[8] न सन्धि०" इत्युपतिष्ठत इति, अस्क्लुकीति वचनात् न, अस्क्लुकीत्यत्र नञ्निर्देशेन 'नञा निर्दिष्टमनित्यमिति' न्यायात्स्थानित्वाभाव इति।

'न शिश्च'। १-३-१९ ॥ भवाञ्छ्र इत्यादौ भवाञ्श् शूर इत्यत्र "ततः शिट" इति वा द्वित्वे चातूरूप्यं, कुर्वञ्छ् छेते इत्यादौ कुर्वञ् शेते इत्यत्र। "अदीर्घाद्०" इति ञस्य वा द्वित्वे कुर्वञ्ञ् शेत इत्यत्र च "ततः शिट" इति द्वित्वे पञ्च रूपाणि।

'अतोऽति रोरुः'। १-३-२० ॥ वेति निवृत्तं, कार्यी निमित्तं कार्यमित्येष हि निर्देशक्रमः। अत्र तु कार्यिणः पूर्वनिमित्तोपादानेन निर्देशक्रमातिक्रमं कुर्वन्नधिकारातिक्रमं सूचयति। तथाऽतोऽतीति निर्देशात्सन्निपातलक्षणन्यायो नोपतिष्ठते। ननु तरावयनं तर्वयनमित्यत्र रुशब्दस्यैव ग्रहणं कस्मान्न विज्ञायते किमित्युदित एवेति ? सत्यं, "[9] अतोऽति रोरु" रित्यत एव ज्ञापकात्, किञ्चैतत्सूत्रोपात्तस्यैव रोरुत्तरत्राऽनुवृत्तिस्तत्र च भोभगोऽघोभ्यः परस्य पदान्तस्थस्य रोरन्यस्याऽसम्भवात्सानुबन्धस्यैव ग्रहणं भवतीति। सुश्रोत ३ यत्र न्वसीति। अत इति तपरनिर्देशेन स्वरूपग्रहणात्प्लुते सति न भवति, परत्वादन्तरङ्गाच्चोकारात्पूर्वमेव प्लुतः।

'अवर्णभोभगोऽघोऽर्लुगसन्धिः'। १-३-२२ ॥ ननु सन्धिरूपतायां

---

१ १-३-३६। २ १-३-३२। ३ १-३-६३। ४ १-३-५०। ५ १-३-८। ६ १-३-६१। ७ ७-४-११०। ८ ७-४-१११। ९ १-३-२०।

सत्यामसन्धिरिति प्रतिषेधो युक्तो लुक् तु अभावरूपत्वात्सन्धिरूप एव न भवतीति कथं निषिध्यते स चाऽसन्धिरित्याह–सन्धिरित्यादि, अत्र सन्धिशब्देन सन्धिनिमित्तस्योपचारादभिधानं । धर्मं चरतीति "[१]धर्माधर्माच्चरति" इत्यनेनेकणि धार्मिकाः । भगवदघवतामिति–भज्यन्ते सेव्यन्ते स्वेन रूपेण स्थाप्यन्ते पदार्था अनेनेति "[२]गोचरसंचर०" इति घे भगं, तदस्याऽस्ति मतौ भगवत् इतिरूपं, अघण् पापकरणेऽतोऽलि मतौ अघवत्, अनवहितस्याऽन्यत्र व्यासक्तस्याऽभिमुखीकरणं सम्बोधनमामन्त्रणमित्यर्थः । असन्धिरित्युत्तरार्थमिति । ननु "[३]स्वरे वा" इत्यत्रैवाऽसन्धिस्वरे वेत्येवमसन्धिग्रहणं क्रियतां, नैवं, लुक्संनियोगशिष्टत्वज्ञापनार्थत्वादत्रोपादानस्य, तेन यत्राऽनेनाऽधिकारेण लुक् तत्रैवाऽसन्धिः, ततश्चाऽत्राऽऽगच्छतीत्यादौ सन्धिप्रतिषेधो न भवति । किञ्चैवं कृते सन्देहः स्यात्, स्वरे निमित्तेऽसन्धिर्वा भवतीति, ततो दण्ड अग्रमित्यनिष्टं रूपं स्यादिति, तथाऽसन्धिरित्यस्य संनियोगशिष्टत्वे यत्र लुग्निवृत्तिस्तत्र तत्सम्बद्धोऽसन्धिरित्यपि निवर्तत इति ।

'य्वोः' । १–३–२३ ॥ वृक्षवित्यत्र क्विपि सत्यूट् स्यादिति विचि सिद्धमित्युक्तं न च "[४]स्वरस्य०" इति णि लुकः स्थानित्वं "[५]न सन्धि०" इत्युपस्थानात्, तर्हि "[६]य्वोः०" इति कथं वस्य न लुक्? सत्यं, तदा स्थानित्वात्, अव्ययतीति विच् क्विब्वा, विचि तावद्यस्य न लुक् "[४]स्वरस्य०" इति णिजः स्थानित्वात्, क्विपि तु यद्यपि "[५]न सन्धि०" इति णिजः स्थानित्वं न भवति तथापि न यस्य लुक्, "[७]इसासः" इत्यनेन व्यञ्जनद्वारा सिद्धे क्वाविति सूत्रं क्विपि क्वचिद् व्यञ्जनकार्यमनित्यमिति ज्ञापनार्थम् । ततो यलुग् न भवतीति, यद्वा लुगिति संज्ञापूर्वको विधिरनित्य इति, ननु वृक्षव् करोतीत्यत्र पदान्तत्वं नाऽस्ति णिलोपस्य स्थानित्वात् ततो द्व्यङ्गविकलत्वं व्यावृत्तेरिति इति ।

'स्वरे वा' । १–३–२४ ॥ कयास्ते तयाहुरित्यादिषु स्यादिविधौ "[८]सोरुः" इति रोरसत्वाद् 'असिद्धं बहिरङ्गमन्तरङ्गे' इति न्यायाच्च, "[९]अत आः स्यादौ०" इति न दीर्घः ।

'अस्पष्टाववर्णात्त्वनुञि वा' । १–३–२५ ॥ स्पशेर्णिजन्तात् क्ते "[१०]णौ दान्त०" इति निपातनात्स्पष्टः ।

---

१ ६–४–४९ । २ ५–३–१३१ । ३ १–३–२४ । ४ ७–४–११० । ५ ७–४–१११ ।
६ ४–४–१२१ । ७ ४–४–११८ । ८ २–१–७२ । ९ १–४–१ । १० ४–४–७४ ।

'**रोर्यः**' । १-३-२६ ॥ अत्राऽनन्तरोऽप्यवर्णादित्येव नाऽनुवर्तते । भोः प्रभृतिभ्यो यकारस्याऽस्पष्टविधानादिति, व्यवहितोऽप्यवर्णादिसमुदाय एवाऽनुवर्तत इत्याह– अवर्णभो० इत्यादि, तरोरयनं तर्वयनमित्यत्रैव "[1]रोर्यः" इति प्राप्नोत्युकारसद्भावात् नैवं, एवं कृते यकारासम्भवात्, "[2]स्वरे वा" इत्यादीनि सूत्राणि निरर्थकानि स्युः ।

5 '**ह्रस्वान्ङ्णनो द्वे**' । १-३-२७ ॥ कुर्वन्नास्त इत्यादि, नन्वत्र द्वित्वे कृते पूर्वस्यनस्याऽनन्त्यत्वात् णत्वं प्राप्नोतीत्याह बहिरङ्गस्येति, उभयपदापेक्षत्वेनेति–चणतीति क्विप्, "[3]अर्हन्एञ्चम०" इति वाण्, राजरेन्निहेति परत्वात्प्रथमं प्लुतः, नाऽऽमन्त्र्य इति नलोपाभावः, प्रत्यङ्ङ्शेत इत्यत्र मा भूदनेन द्वित्वं "[4]अदीर्घाद्विरामै०" इत्यनेन भविष्यति, तत्किमर्थमेतन्निवृत्तये स्वर इत्युच्यत इति ? उच्यते, यद्यनेन
10 स्यान्नित्यं स्यात्तेन तु विकल्पेनेति तदर्थं स्वर इत्युच्यते । वृत्रहणावित्यत्र संज्ञायां "[5]पूर्वपदस्थाद्०" इति असंज्ञायां तु "[6]कवर्गैक०" इति णत्वम् ।

'**अनाङ्माङो दीर्घाद्वा छः**' । १-३-२८ ॥ इति दीर्घस्य विशेषणं न छस्याऽसम्भवात्, पदान्ते हि तस्य विकारेण भाव्यं, शब्दप्राडिति आङ्माङ्वर्जनादेव दीर्घादिति पदे लब्धे किमर्थं दीर्घादित्यूचे ? आङ्माङावव्ययौ
15 तत्पर्युदासादन्यस्मादप्यव्ययाद्दीर्घादित्यपि प्रसङ्गः स्यादिति । मुनि छायेति स्थिते "[7]स्वरेभ्य" इति द्वित्वं प्राप्नोति "[8]आमन्त्र्ये" इति सिश्च, तत्राऽन्तरङ्गत्वाच्चाऽऽमन्त्र्य इति पूर्वं सिस्ततो "[9]ह्रस्वस्य गुणः" इति सिना सह गुणे अनेन विकल्पेन छस्य द्वित्वमिति, "[10]स्वरेभ्य" इति नित्यं द्वित्वे प्राप्ते विकल्पार्थोऽयमारम्भ इति, आङो ङित ईषदर्थादिषु चतुर्ष्वर्थेषु वर्तमानस्य प्रतिषेधः । माङस्तु प्रतिषेधवचनस्य क्रमेणो-
20 दाहरति, आच्छायेतीषदर्थे, आच्छिनत्तीति क्रियायोगे, छिदिरत्र हठाद् ग्रहणे वर्तते स चाऽऽङा विशिष्यते, आच्छायाया इति, छायां मर्यादां परिहृत्येत्यर्थः, अभिविधौ चाऽऽङ् छायामभिव्याप्येत्यर्थः । वाक्यस्मरणयोरिति–वाक्यं पूर्ववाक्यार्थविपरीतकरणरूपं, स्मरणं विस्मृतार्थप्रकाशनं, प्रमाच्छन्द इति–प्रमीयत इति "उपसर्गादातः" इत्यङ् प्रमा चाऽसौ छन्दश्च प्रमाच्छन्दः ।

25 '**प्लुताद्वा**' । १-३-२९ ॥ दीर्घादित्यनुवृत्तावपि द्विमात्रत्रिमात्रयोर्विरोधात्सामानाधिकरण्यासम्भवेऽपि मञ्चाःक्रोशन्तीत्यादिवत्स्थानोपचारात्तद्व्यपदेशाद्विशेषणविशेष्यभावः, दीर्घोऽस्याऽस्ति स्थानित्वेनेत्यभ्रादित्वादति वा दीर्घशब्देन

१ १-३-२६ । २ १-३-२४ । ३ ४-१-१०७ । ४ १-३-३२ । ५ २-३-६४ । ६ २-३-७६ । ७ १-३-३० । ८ २-२-३२ । ९ १-४-४१ । १० ५-३-११० ।

प्लुतोऽभिधीयत इत्याह दीर्घस्थानादिति, ननु किमर्थमिदं यतो दीर्घमाश्रित्य "अनाङ्माङ्० " इत्यनेनैव द्वित्वं वा भविष्यति ?, सत्यं, इदमेव ज्ञापकं 'दीर्घापदिष्टं नप्लुतस्येति'

'स्वरेभ्यः' । १-३-३० ॥ पदान्त इति निवृत्तमिति । "गच्छति पथिदूते" इत्यत्र गच्छतीति निर्देशाच्च । 5

'हर्दर्हस्वरस्यानु नवा' । १-३-३१ ॥ अर्च्यत इति "भीणूशलि०" इति के, "चजः कगम्" इति कत्वं, अर्च्यत इति घञि न्यङ्क्वादित्वात्कत्वेऽनेन द्वित्वे वा औणादिकेऽर्के प्रथममेव कस्य द्विरूपत्वान्नाऽनेन द्वित्वं, पद्मह्रद इति-ह्रादते इत्यच् पृषोदरादित्वाद्ध्रस्वः, अत्र द्वित्वे कृतेऽपि "रोरेलुग्०" इत्यनेन रलोपे सति न कश्चिद्विनङ्क्ष्यति ? सत्यं, यद्यत्र र वर्जनं न स्यात्तदोत्तरसूत्रेऽपि रवर्जनाभावेऽर्ह 10 इत्यत्रोत्तरेण द्वित्वे "रोरेलुंग्०" इति लुकि आर्ह इत्यनिष्टं रूपं स्यादिति । ननु कर इत्यत्र द्वित्वे कृतेऽपि "लुगस्या०" इत्यादिनाऽस्य लुग्भविष्यति किं स्वरवर्जनेन ? सत्यं चारु दारु वारीत्यादौ चारू दारू वारी इत्याद्यनिष्टं भवेदिति स्वरवर्जनं, अत्राऽन्वित्यस्याऽभावे सत्यन्तरङ्गत्वाद् द्विरवेकृते पश्चात्परोक्षानिमित्तत्वेन बहिरङ्गं द्विर्वचनं स्यात्तत्र प्रोर्ण्णुन्नावेत्यनिष्टरूपापत्तिः, ननु द्वित्वं कृतमपि निमित्ताभावे इति निवर्त्स्यति 15 किमनुग्रहणेन ? सत्यं, अनुग्रहणादेवाऽयं न्यायोऽनित्य इति ।

'अदीर्घाद्विरामैकव्यञ्जने' । १-३-३२ ॥ अदीर्घादिति पर्युदासादनुवृत्तस्य स्वरस्य विशेषणमित्याह अदीर्घात्स्वरादिति, अथ त्वक्क् इत्यत्र प्रथमककारस्य "संयोगस्याऽऽदौ०" इति लुक्कस्मान्न भवति ? न च वाच्यमयं द्वित्वादेशोऽनर्थक इति, अन्यत्र द्वित्वश्रुतेश्चरितार्थत्वादिति ? सत्यं, अर्हस्वरस्येति र्होपादानाद् व्यक्तिपदार्थ आश्रीयते, 20 तत्र च ककारविषयस्य द्वित्वस्याऽऽनर्थक्यं मा भूदिति न भवति, ननु "ल्लिंलौ" इति सूत्रे द्विवचनेनेदं ज्ञापितं, यथा सानुनासिकस्याऽपि निरनुनासिक एवाऽऽदेश इति, तत्कथं सय्यँतः इत्यत्र सानुनासिको यकार इति ? सत्यं, स एव सानुनासिको यकारो द्विरूपो भवति न त्वयं भिन्न आदेश क्रियत इति सानुनासिक एव भवतीति, एकयाऽपि चाऽर्धकलया द्वावपि यकारौ सानुनासिकौ ज्ञायेते, सानुनासिकयकार- 25 स्यैव द्वित्वापन्नत्वादिति, गाव एनं त्रासीरन्निति "तिक्कृतौ नाम्नि" इति क्तः, त्रियत इति "वैयोपसर्गा०" इति यः, अत्र द्वित्वे कृते रलोपे च वार्ये स्यात्,

---

१ १-३-२८ । २ ६-३-२०३ । ३ उणा० २१ । ४ २-१-८६ । ५ १-३-४१ । ६ २-१-११३ । ७ २-१-८८ । ८ १-३-६५ । ९ ५-१-७१ । १० ५-१-३२ ।

डउविधानस्य पुंसि विसर्गान्तस्य चरितार्थत्वान्नपुंसके तितउ इत्यत्र विरामस्थस्यो-
कारस्य द्वित्वं स्यात्, प्रथमत्वादिकमिति पत्थ्यदनमित्यादिषु ।

'अन्त्ववर्गस्यान्तस्थातः' । १-३-३३ ॥ अन्तस्थात इत्यत्राऽऽद्यादित्वात्तस् ।

'ततोऽस्याः' । १-३-३४ ॥ दध्य्यत्रेत्यादौ । 'असिद्धं बहिरङ्गमिति'
5 न्यायादन्तरङ्गे द्वित्वे कर्तव्ये बहिरङ्गो याद्यादेशोऽसिद्धः कस्मान्न भवति ? न चाऽ-
स्याऽसिद्धत्वे सूत्रमिदमनर्थकं भवतीति वाच्यं, ध्यानमित्यादावनादेशरूपे यादौ तस्य
सावकाशत्वादिति ? उच्यते, " न सन्धिङीयक्वि० " इत्यत्र द्वित्वस्य सन्धिविधित्वे-
न स्थानिवद्भावप्रतिषेधे सिद्धे द्विग्रहणमसिद्धं बहिरङ्गमन्तरङ्ग इति न्यायस्य बाधनार्थं
द्वित्वमुपपद्यते । तथाऽत्रेत्यस्मिन् रस्य न द्वित्वमर्हस्वरस्येत्यधिकारात्, लस्य तु
10 द्वित्वे कुल्लाम्यतीति द्रष्टव्यं ।

'शिटः प्रथमद्वितीयस्य' । १-३-३५ ॥ ष्ठल्स्थाने इत्यतः कर्तरि " वौ
ज्वला० " इति णे वृद्धौ " जातेरयान्त० " इति ङ्यां स्थाली, स्थालयतीति वा
" स्वरेभ्य इः " स्थालिः, अस्यत इति ध्यणि " शिक्यास्य० " इति वाऽऽस्यं, त्वञ्छात्र
इति त्वम्छात्र इति स्थिते " तौ मुमो० " इत्यनुनासिको ञकारस्ततश्छस्य द्वित्वे
15 " अघोषे प्रथमो० " इति छस्य चः ।

'ततः शिटः' । १-३-३६ ॥ ताभ्यां ततः, तच्छब्दस्याऽनन्तरपूर्ववस्तु-
परामर्शित्वेन प्रथमद्वितीययोरनुकर्ष इति, शिड्वाद्यस्य० " इति पस्य फकारे कृते
द्वितीयादपि सस्य द्वित्वे अफ्स्सरा इति दृश्यं । नराः ब्रुवन्तः सीदन्त्यस्यामिति
पृषोदरादित्यात् बृसी, कश्श्यते इति णिगन्तस्य, एवं कष्ष्यत इत्यपि ।

20 'पुत्रस्यादिन् पुत्रादिन्याक्रोशे' । १-३-३८ ॥ नकारान्तताभिव्यक्त्य-
र्थमादिन्निति सूत्रांशे लक्षणप्राप्तोऽपि नलोपो न कृतः, आदिन् पुत्रादिन्नुपादानेऽपि
" नामग्रहण० " इति न्यायात् स्त्रियामुदाहृतं, तत्रैव प्रायेणाऽऽक्रोशसम्भवात्, स्त्रीव-
त्पुंसोऽपि पुत्रादनेनाऽऽक्रोशे तत्राऽपि प्रतिषेधो भवत्येव, पुत्रादी भवेति, अभीक्ष्णं
पुत्रानत्सीति " व्रताभीक्ष्ण्ये " इति णिन् पुत्रादिनी शिशुमारीति, अध्यारोपेण हि
25 निन्दाक्रोशौ, तत्त्वाख्याने तु तदसम्भव इति प्रतिषेधाभावाद् " अदीर्घाद्० " इति
द्वित्वं भवत्येव, नागीति " जातेरयान्त० " इति ङीः ।

---

१ ७-४-१११ । २ ५-१-६२ । ३ २-४-५४ । ४ उणा० ६०६ । ५ उणा० ३६४ । ६ १-३-१४ ।
७ १-३-५० । ८ १-३-५९ । ९ ५-१-१५७ । १० १-३-३२ । ११ २-४-५४ ।

'म्नां धुड्वर्गेऽन्त्योऽपदान्ते'। १-३-३९ ॥ यद्यत्र वर्गग्रहणं न स्यात्तदा गन्तेत्यत्र थकारःस्यात्तस्याऽपि तकारापेक्षयाऽन्त्यत्वादित्यव्यवस्थानिरासाय वर्गग्रहणम् निमित्तवर्गस्यैवेति-मकारनकारापेक्षयाऽन्यस्य वर्णस्याऽन्त्यस्याऽभावादिति। बहुवचनमिति-अयमर्थो 'वर्णग्रहणे जातिग्रहणमिति' जातिनिर्देशे प्राप्ते बहुवचनं व्यक्तिनिर्देशार्थं, तेन यावान्मकारो नकारश्चाऽपदान्तस्तत्र सर्वत्र तद्व्यक्त्यपेक्षया वैयर्थ्यं मा भूदिति प्रवर्तमानोऽन्त्यः कार्यान्तरबाधायै प्रभवति। गम्यते, हन्यत, इत्यत्र म्नोर्निमित्तयकारस्याऽन्त्यो रः स्यात्। 5

'शिड्हेऽनुस्वारः'। १-३-४०॥ ननु पिण्ढि इत्यादौ श्नस्याल्लुकः स्थानित्वादकारेण पस्य व्यवधानादनुस्वारो न प्राप्नोति, किमन्वित्याश्रयेण? नैवम्, "न सन्धि०" इति सन्धिविधौ स्थानित्वनिषेधात्। ननु हस्य शिट्संज्ञां कृत्वा शिट्यनुस्वार इत्येवोच्यताम्? सत्यम् यदि हस्य शिट्संज्ञां कृत्वाऽहग्रहणं न क्रियते तदा औजढदित्यत्र "अघोषे शिटः" इति हलोपेऽनिष्टं रूपं स्यादिति। 10

'रो रे लुग्दीर्घश्चादिदुतः'। १-३-४१॥ 'नन्वपदान्त इत्यधिकारात् अजर्घाः, अपास्पाः, अचोकः, अचाखाः, अचाकाः, अपापाः, इत्यादिष्वेव प्राप्नोति, ननु स्वाराज्यमित्यादाविति? नैवम्, अदिदुत इति इद्ग्रहणादपदान्त इति नाऽनुवर्तते, यत इकारात्परस्य रेफस्य रेफेऽपदान्ते सम्भवो नाऽस्तीति, भिन्नस्थानिनिमित्तभणनाद्वा। किं पुनरिदं सानुबन्धस्य कार्यिणो रेफस्य ग्रहणं निरनुबन्धस्य वा? तत्राऽऽद्यपक्षेऽग्नी रथेनेत्यादि सिध्यति, न तु पुना रमत इत्यादि, द्वितीयपक्षे पुना रमते इत्यादि सिध्यति न त्वग्नी रथेनेत्यादि। न चोभयपरिग्रहे किञ्चिन्नियामकमस्ति? उच्यते-अत्र 'रो रे०' इत्येकप्रयत्नेनैव सूत्रद्वयोच्चारणादेकत्र सानुबन्धस्याऽपरत्र निरनुबन्धस्य निर्देशात् 'निरनुबन्धग्रहणे सामान्यग्रहणमिति' न्यायाच्च सामान्येन ग्रहणं भवतीत्याह रेफस्येति। अनन्तराणामिति-ननु सामान्यनिर्देशादनन्तराणामेवेति कुतो लभ्यते इति चेत्? उच्यते-रे इत्युपश्लेषसप्तमीनिर्देशाल्लुगिव दीर्घोऽपि रेफोपश्लिष्टस्यैव भवतीति। 15 20

'ढस्तड्ढे'। १-३-४२॥ अन्विति, इदं सूत्रं पदान्ते "धुटस्तृतीयः" इत्यस्य बाधकम्, अपदान्ते तु "तृतीयस्तृतीयचतुर्थे" इत्यस्य चेति, ततोऽन्वित्यधिकार एतयोः सूत्रयोर्विषयं मुक्त्वा ज्ञातव्यः। अत एव मधुलिड्ढौकते इत्यत्र पूर्वं तृतीयत्वाभावे सति न त्र्यञ्जचिकलतेति। चकड्ढे इति-अत्र "नैम्यन्ताद्०" इति धस्य ढत्वे "अदीर्घाद्विराम०" इति तस्य द्वित्वे "तृतीयस्तृतीय०" इति ढस्य डः आवृढम्, आवृढमिति-तृहौ 25

१ ७-४-११९। २ ४-१-४५। ३ २-१-७६। ४ १-३-४९। ५ २-१-८०।

दृंढौ, दृहौत् उद्यमे इति धातू "वेटोऽपत" इतीड्निषेधः। लेढा इति—नन्वत्र परत्वाद्गुणो भविष्यति किमन्वित्यधिकारेणेति? सत्यम्, ढलोपस्याऽल्पाश्रितत्वेनाऽन्तरङ्गत्वात्प्रथमं ढलोपो दीर्घत्वं च प्राप्नोति। ननु ढस्याऽसत्त्वात्सर्वमप्यसत् ततो गुणो भविष्यति? सत्यम्, 'तथाप्यसिद्धं बहिरङ्गमन्तरङ्ग' इति दीर्घत्वं स्यात्, 'वार्णो विधिः' इति
5 न्यायेनाऽन्तरङ्गं ढत्वं ततस्तस्मिन्नभिधेये गुणोऽसिद्धो यतो गुणोऽवार्णो विधिरिति, कार्यासत्त्वपक्षे इदमुक्तं, शास्त्रासत्त्वपक्षे तु गुणे कृते ढत्वं भवति।

'उदःस्थास्तम्भः सः'। १–३–४४॥ ननु उदस्थादित्यत्र सकारलोपः कस्मान्नभवति? न च वाच्यमडागमेन व्यवधानान्न भविष्यति, यतोऽङ्गिनोऽङ्गं व्यवधायकं न भवति, सत्यम्, आवृत्त्याउद इति पदं स्थास्तम्भः सकारस्य च
10 सम्बन्धनीयं, उदस्थात् उदस्तम्भदित्यनयोः सिद्ध्यर्थम्। उदस्थादित्यत्राऽडागमात् पूर्वं सन्नित्यधिकारान्न भवति, अडागमे च सति पञ्चम्या निर्दिष्टे परस्य तच्चाऽनन्तरस्यैव न व्यवहितस्येति न भवति। उत्स्थान इत्यत्र स्थानस्य विशेषणं उत्, न तु तिष्ठतेरिति।

'तदः सेः स्वरे पादार्था'। १–३–४५॥ तद इत्यनेन तदादेशस्य सस्य ग्रहणमन्यथा व्यञ्जनात्सिलोपः सिद्ध एव। अनुकरणत्वात्तद इत्यत्र त्यदाद्यत्वाभावः
15 शब्दर्थानुकरणे हि 'प्रकृतिवदनुकरणम्' इति न्यायः प्रवर्तते। शब्दानुकरणे तु नेति। कथमिदमिति चेत्? 'तदः सेः स्वरे' इति "पैरिव्यवात्क्रिय" इति सूत्रसूत्रणात्। पादार्थेयं पादार्थो यस्या इति वा पादार्था।

'एतदश्च व्यञ्जनेऽनग्नञ्समासे'। १–३–४६॥ प्रकृतेः परः श्रूयमाणश्चकारः प्रकृत्यन्तरसद्वितीयतां गमयन् पूर्वसूत्रश्रुतप्रकृत्यैव सद्वितीयतां गमयति।
20 नञः समासो नञ्समासस्ततो द्वन्द्वगर्भो नञ्तत्पुरुषः। नञ्समासे च सति न भवतीति-अनेन नञः क्रियासम्बन्धं दर्शयन अनग्नञ्समास इति प्रसज्यप्रतिषेधोऽयमिति दर्शयति। पर्युदासे हि सति 'नञ्युक्तं तस्सदृशे' इति न्यायेन नञ्समासादन्यत्राऽपि समास एव वर्तमानाभ्यामेतत्तच्छब्दाभ्यां सिलोपः स्यादिति। अनग्नञ्समासे इति प्रतिषेधात् परमैष करोतीत्यादौ तदन्तादपि सेर्लुक्। धनं लब्धा "धैनगणाल्लब्धरि"
25 इति ये धन्यः—अनुबन्धग्रहणादिति—अयमर्थः। सेरिति इदनुबन्धग्रहणादन्यानुबन्धसमुदायस्य लोपाभावः, एतेषु चरतीत्यादौ। अथाऽत्र परत्वादेत्वे षत्वे च कृते सकारस्याऽभावाल्लोपो न भविष्यति? सत्यम्, विशेषविहितत्वादेत्वषत्वाभ्यां पूर्वमेव लोपः स्यादिति। किञ्च एतत् स्कुम्नातीत्यादावपि स्यात्।

---

१ ४–४–६२। २ ३–३–२७। ३ ७–१–९।

**'व्यञ्जनात्पञ्चमान्तस्थायाः सरूपे वा'** । १-३-४७ ॥ समाहारेऽपि सूत्र-
त्वाद् ह्रस्वाभावः । आदित्यो देवताऽस्याऽऽदित्य इति-अत्राऽकारलोपे लुकः सन्धि-
विधित्वात् स्थानिवद्भावप्रतिषेधेऽनेन पक्षे यलुक् । स्व इति कृते शार्ङ्गइत्यादिष्वपि स्यात् ।

**'धुटो धुटि स्वे वा'** । १-३-४८ ॥ प्रत्तमिति-प्रपूर्वाद्दातेरारम्भेऽर्थे क्तः,
"[1]प्राद्दागस्त०" इति त्तादेशः । अवदीयते स्म क्तः "[2]निविस्वन्ववात्" इति त्तः । 5
शिण्ढि पिण्ढि इति-शिष्पिषोः पञ्चम्या हौ "[3]रुधां स्वरात्०" इति श्नप्रत्यये "[4]श्नास्त्यो-
र्लुग्" इत्यलोपे "[5]हुधुटः०" इति हेर्धिभावे "[6]तृतीयस्तृतीय०" इति तृतीयत्वे
"[7]तवर्गस्य०" इति ढत्वे "[8]म्नां धुड्०" इति णत्वेऽनेन पक्षे डलोपे चेति । भार्ङ्ग-
मिति-भृगो "[9]भृवृभ्यां नोऽन्तश्च" इति किति गे नागमे भृङ्गं "[10]तस्येदम्" इत्यणि ।

**'तृतीयस्तृतीयचतुर्थे'** । १-३-४९ ॥ लिख्यते इत्यत्र खस्य गः, वल्भते 10
इत्यत्र लस्य द आसन्नः प्राप्नोति ।

**'अघोषे प्रथमोऽशिटः'** । १-३-५० ॥ पयस्सु इत्यत्र "[11]शषसे शषसं वा" इति
विधानादपि न प्राप्नोति किमशिट इति वचनेन ? सत्यम्, श्च्योततीत्याद्यर्थम् । तथाऽशिट
इत्यभावे वृक्षः पुरुष इत्यादौ कस्याऽऽदिः कादिरिति व्याख्यया विसर्गस्यापि अपञ्च-
मान्तस्थेति धुट्त्वे अवर्णहविसर्गकवर्ग्याः कण्ठ्या इति कत्वं स्यात् । श्च्योततीत्यादि- 15
प्रयोगत्रये यथासङ्ख्यं चटताः स्युरिति । अस्ति आस्ते इत्यादिषु च सस्य तकारः स्यात् ।

**'विरामे वा'** । १-३-५१ ॥ वैषयिकमिदमधिकरणम् क्रुङ् इत्यादि-चवर्ग्यो
ञकारः, "[12]पदरुजविशस्पृशो घञ्" इत्यादौ दृश्यः । क्रुङित्यादिचतुष्टये कटतपाः स्युः ।
घञ इत्यत्र चः स्यादिति ।

**'न सन्धिः'** । १-३-५२ ॥ संहितायामिति-सन्धीयन्ते वर्णा अस्यामिति 20
"[13]शीरीभू०" इति किति ते संहिता, वर्णानां परः सन्निकर्षः । एकपद इति-विषय-
सप्तमीति इति, भवतीत्यादावेकपदे नित्यं संहिता । धातूपसर्गयोरिति-धातूपसर्गयोः
प्रेलयतीत्यादौ नित्यसमुदितत्वात्समासस्यापि निरन्तरानेकपदात्मकत्वात् पदधातूप-
सर्गसमासानां नियमेनैकप्रयत्नोच्चार्यत्वाच्च विरामाभावान्नित्यं संहितेति । वाक्ये तु
सर्वत्रैकप्रयत्नोच्चार्यत्वस्याऽनियमाद्विरामाभावेन संहितेति । 25

**'रः पदान्ते विसर्गस्तयोः'** । १-३-५३ ॥ विसर्गः शब्दपूरोवर्ति बिन्दुद्वयं

---

१ ४-४-७ । २ ४-४-८ । ३ ३-४-८२ । ४ ४-२-९० । ५ ४-२-८३ । ६ १-३-४९ ।
७ १-३-६० । ८ १-३-३९ । ९ उणा० ९४ । १० ६-३-१६० । ११ १-३-६ । १२ ५-३-१६ ।
१३ उणा० २०१ ।

रूढेः, तयोरित्यत्रैकाऽपि सप्तम्यर्थवशाद्द्विधा भिद्यते; एका वैषयिकेऽधिकरणेऽपरा त्वौपश्लेषिके इति। असिद्धं इति–प्रत्ययाश्रितत्वेन बहुस्थान्याश्रितत्वेन च बहिरङ्गता, वर्णमात्राश्रितत्वेन त्वन्तरङ्गता। पदादेशः पदवदिति च वृद्ध्यादौ कृते रेफस्य पदान्तत्वमिति।

5 'ख्यागि'। १–३–५४॥ ख्याग्येव विसर्गनियमात् ख्यांक् प्रथन इत्यस्मिन् जिह्वामूलीयोऽपि।

'शिट्यघोषात्'। १–३–५५॥ अघोषात् परस्य पदान्ते रेफस्याऽसम्भवादघोषादिति शिटीत्यस्य विशेषणमित्याह–अघोषात्परे शिटीति।

'अरोः सुपि रः'। १–३–५७॥ ननु पयःसु इत्यादिषु "सो रुः" इति 10 कृतेऽन्तस्थाद्वारेण रेफात्परः षकारः कथं न भवति? सत्यम्, नित्यत्वात् "रः पदान्ते विसर्गस्तयोः" इति भवति। रुवर्जनाल्लाक्षणिकन्यायो निरनुबन्धन्यायश्चाऽनित्यस्तेन "रः कखपफयोः०" इत्यादौ लाक्षणिकस्याऽपि भवति।

'वाहर्पत्यादयः'। १–३–५८॥ निपातनात्पदान्ताधिकारो निवृत्तस्तेनोत्तरसूत्रे न याति, तथा च–खूर्षीरमित्यादि सिद्धम्। गीर्पतिरिति–अत्र क्षीरस्वामिना भ्रातुः 15 पुत्रादित्वात् षत्वमिष्यते। प्रचेता राजन्निति सम्बोधने विशेषज्ञापनाय सम्बोधनादन्यत्राऽप्युदाहार्यम्। तच्च समासे एव अन्यत्र तु अम्वादिरिति दीर्घत्वे विशेषाभावः। यदुत्पलः–कर्मधारयात्समासान्ते प्रचेताराजः प्रचेतोराजः। शकटोऽप्याह–प्रचेतसो राजा प्रचेताराजः। प्रचेतो राजाऽस्य प्रचेताराजा प्रचेतोराजेति, आकृतिगणार्थत्वाद्बहुवचनस्य। वारि चरति क्वचिदिति डे वार्चः। उषसि बुध्यते "नाम्युपान्त्य०" इति 20 के उषर्बुध इत्यनयोः शत्वमुत्वं च न भवतीति।

'शिट्याद्यस्य द्वितीयो वा'। १–३–५९॥ अत्राऽऽद्यत्वं प्रतिवर्गपञ्चकं प्रथमापेक्षं च द्वितीयमिति, तेन कचटतपानां खछठथफाः क्रमेण शिटि भवन्ति। क्रमेणोदाहरणानि।

'तवर्गस्य श्चवर्गष्टवर्गाभ्यां योगे चटवर्गौ'। १–३–६०॥ स्थानित्वा-25 शङ्केत्यादि–अयमर्थो योगग्रहणं विना सहार्थे तृतीयायां "अवर्णस्येवर्णादिना०" इत्यादिवत् श्चवर्गादेरपि स्थानित्वाशङ्का। परदिग्योगपञ्चम्यां तु "पञ्चम्या निर्दिष्टे परस्य०" इति न्यायात्परस्यैव तवर्गस्य स्यान्न पूर्वस्येति योगग्रहणम्। ननु तवर्गस्य कार्यित्वात्तेन

१ २–१–७२। २ ५–१–५४। ३ १–२–६। ४ ७–४–१०४।

च विशिष्टवर्णसमुदायस्याऽभिधानात् तच् शेते इत्यादिषु एकैकस्य तवर्गशब्दाप्रवृत्तौ कथं कार्यित्वमिति ? सत्यम्, समुदायैकदेशस्याऽपि तदात्मकत्वाद् ग्रामो दग्ध इत्यादिवत् समुदायशब्देनाऽभिधानात् दस्याऽपि तवर्गत्वे सति दकाररूपतवर्गस्याऽनेन जकारः; यद्वा यथा ग्रामे वसति गृहे वसतीत्यादौ ग्रामाद्येकदेशादेरपि ग्रामादिशब्दाभिधानम्। न हि देवदत्तादिरेवमभिधीयमानो ग्रामं वा व्याप्य वसति किन्तु तदेकदेशे! तत्र स एवैकदेशो ग्रामो गृहं चोच्यते तद्वदत्राऽपीत्यदोषः। तच्छादयतीति–छदण् संवरणे इत्यस्य छदण् अपवारणे इत्यस्य वा युजादेः स्वार्थणिजन्तस्य रूपम्। तज्ज्ञापयतीति "[1]प्रयोक्तृव्यापारे णिग्" "[2]हन्त्यर्थाश्च" इति णिजन्तस्य वा रूपम्। राज्ञ इति-शसि ङसो ङसि च रूपम्। एवं *मज्ज्ञ इत्यपि। पूर्वेण शकारेणेति–"[3]न शात्" इत्यनेन निषेधो वक्ष्यते, परेण षकारेणेति–"[4]षितवर्गस्य"–इत्यनेन। अन्वित्यधिकारात् अड्डिडिषतीत्यत्र द्वित्वे कृते पश्चात्टवर्गः, अन्यथा अडिड्डिषतीत्यनिष्टं रूपं स्यात्। एवमट्टिटिषते इत्याद्यपि। एवमुत्तरसूत्रेऽपि "[5]चजः कगम्" इति न भवतीति–तच् शेते, तच्चरतीत्यादौ उभयाश्रितत्वाच्चत्वं बहिरङ्गं पदमाश्रितत्वात्कत्वमन्तरङ्गमिति। शकारस्य षत्वमपीति–वृश्चतीत्यादौ "[6]सस्य शषौ" इति कृतस्य शकारस्य "[7]यजसृज०" इत्यनेन धुडाश्रितं षत्वं प्रत्ययाभावान्न भवतीत्यर्थः।

'सस्य शषौ'। १–३–६१॥ ननु वृश्चतीत्यत्र 'दन्त्यापदिष्टं कार्यं तालव्यस्याऽपि भवतीति' भणनात् "[8]नाम्यन्तस्था०" इत्यनेन षत्वं कथं न भवतीति ? उच्यते–पाठकाले यो दन्त्यसकारस्तस्य कृतत्वाभावादिति।

'न शात्'। १–३–६२॥ तवर्गस्येति–असम्भवात्सस्येति न व्याख्यातम्।

'पदान्ताट्टवर्गादनाम्नगरीनवतेः'। १–३–६३॥ तवर्गस्येति–उत्तरत्र तवर्गस्येति भणनात्तवर्गस्य सस्य चेति लभ्यतेऽत्र। नामित्यामादेशस्येति–अन्प्रत्ययान्तस्य घञन्तस्य च नमतेरवयव एकः। अत्र य आमादेशो नाम् तस्यैवाऽर्थवत्त्वाद्ग्रहणमित्याह–षडनाम–नामशब्दो नकारान्तोऽवयवोऽकारान्त इति।

'लिलौ'। १–३–६५॥ अनुनासिक एव भवतीति–विपरीतनियमस्तु निरनुनासिकस्य सानुनासिक इति, "[9]हृदयस्य हृल्लास०" इत्यत्र हृल्लासेति करणान्न भवति। प्रायिकं चैतज्ज्ञापकं, तेन "[1]समानानां तेन दीर्घः" इत्यादौ आसन्न एव भवतीति।

॥ प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥

---

१ ३–४–२०। २ १–३–६२। ३ १–३–६४। ४ २–१–८६। ५ १–३–६१। ६ २–१–८७। ७ २–३–१५। ८ ३–२–९४। ९ १–२–१। * अत्रेदं तत्वम्–टुमस्जोंत् शुद्धौ इत्यस्मात् 'उक्षितक्षि०' (उणा ९००) इत्यनेन अन्प्रत्यये मज्जन्शब्दः, तस्य शसिरूपम्।

**'अत आः स्यादौ जस्भ्याम्ये'** । १ । ४ । १ ॥ अत्र प्रत्ययाप्रत्यययोरिति सिद्धे स्यादिग्रहणं "र्णषमसत्परे०" इत्यादौ प्रयोजनार्थम् । तेन राजभ्यामित्यत्र नलोपस्य स्यादिविधौ विधेयेऽसिद्धत्वादाकारो न भवति । न चाऽत्र स्यादिग्रहणाभावे "त्रिचतुरः०" इत्यादिविहितस्य स्यादेर्ग्रहणं भविष्यतीति । यतस्तस्य ग्रहणेऽपि न किमपि फलम् ।
5 अन्यच्च स्यादिग्रहणे शुचिशब्दात् ङ्यां प्रत्ययत्वात् "ङित्यदिति" इत्येत्वं प्राप्तं निषिध्यते । किञ्चाऽत्र स्यादिग्रहणाभावे वन्य इत्यत्राऽपि "अवर्णेवर्णस्य" इति बाधित्वाऽकारः स्यात् । वृक्षा इति–अत्र जसि अपवादत्वात्समानदीर्घत्वबाधकस्य "लुगस्यादेत्यपदे" इत्यस्य बाधकोऽयमाकारः । आभ्यामिति–इदं शब्दस्य अततीति "क्वचिद्०" इति डे अपकृतेर्वा सिद्धं । श्रमणाभ्यामिति–स्यादेः पूर्वमेकपदत्वाभावात्कथं "रषृ-
10 वर्ण०" इति णत्वं श्रमणप्रकृतेः ? उच्यते–भाविनि भूतवदिति न्यायाद्भवति । श्रमणायेति–अकारसन्निपातेन विधीयमानो यकारस्तद्विघाताय कथं प्रभवतीति न वाच्यं, यग्रहणवैयर्थ्यप्रसङ्गात् ।

**'भिस ऐस्'** । १ । ४ । २ ॥ एसादेशेनैवेति–एसादेशे कृते "लुगस्या०" इति न वाच्यं, विधानसामर्थ्यात् । अन्यथा देवैरित्यनिष्टं स्यात् । तदा इसिति कुर्यात् ।
15 अतिजरसैरिति–एकदेशे विकृतस्याऽनन्यत्वात्कृतह्रस्वोऽपि जराशब्द एवेति । भिस्सटेति–प्सांक् इत्यस्याऽभिपूर्वस्याऽभिप्सायते इति "उपसर्गादातः" इत्यङि पृषोदरादित्वादभेरकारलोपे पस्य सकार आपि लक्ष्यानुरोधाद्विकल्पेन टागमे भिस्सा भिस्सटा ।

**'इदमदसोऽक्येव'** । १ । ४ । ३ ॥ इष्टावधारणार्थ इति–तेन प्रत्ययनियमो न भवति । तदभावे च तकैः विश्वकैरित्यादि सिद्धम् ।

20 **'टाङसोरिनस्यौ'** । १ । ४ । ५ ॥ अन्ये त्विति–यदि हि अतिजरसिनेत्येतत्सूत्रकारस्य साधुत्वेन नाऽभिमतं स्यात्, तदा टा इत्येतस्य नकारादेशमेव कुर्यात् तत्राऽपि ह्येत्वे कृते वृक्षेणेत्यादि सिध्यत्येव । कथमेत्वमिति चेत् "एद्बहुस्भोसि" इत्यत्र टावचनप्रक्षेपात् ।

**'ङेङस्योर्यातौ'** । १ । ४ । ६ ॥ अत् इत्येव क्रियताम् किं दीर्घकरणेन ? न चैवं
25 कृते "लुगस्या०" इति प्राप्स्यतीति, तदा हि त् इत्येव कुर्यात् । सत्यम् । मतान्तरेऽतिजरसादित्यपि मन्यते तत्सिद्ध्यर्थं दीर्घकरणम् । दीर्घकरणाच्च स्वमतेऽपि सम्मतमिति बोध्यम् ।

---

१ २-१-६० । २ २-१-१ । ३ १-४-२३ । ४ ७-४-६८ । ५ २-१-११३ । ६ ५-१-१७१ । ७ २-३-६३ । ८ ५-३-११० । ९ १-४-४ ।

'**सर्वादेः स्मैस्मातौ**' । १ । ४ । ७ ॥ परमसर्वस्मायिति—स्याद्याक्षिप्तस्य नाम्नः सर्वादिविशेषणाद्विशेषणेन च तदन्तविधेर्भावान्न सर्वादिरिति द्वन्द्वे निषेधाद्वा 'ग्रहणवता नाम्ना न तदन्तविधिः' इत्यस्याऽनुपस्थानात्तदन्तस्य परमसर्वस्मै इत्युदाहृतम् । केवलस्य व्यपदेशिवद्भावात्तदन्तत्वं द्रष्टव्यम् । विश्वस्मायिति—सर्वशब्द-साहचर्याद्विश्वशब्दस्याऽपि समस्तार्थस्य ग्रहणं न तु जगदर्थस्य । स्वार्थिकप्रत्ययेति— 5 इत्थं वदतोऽयमाशयः । स्वार्थिकप्रत्ययोऽपिगणपाठफलमिति । अधराणीति—शब्दरूपा-पेक्षया नपुंसकनिर्देशो नाऽर्थापेक्षया । तेन स्त्रीपुंनपुंसकेषु सर्वेष्वप्यर्थेषु सर्वादित्वमिति । स्वाभिधेयेति—पूर्वादीनां शब्दानां स्वाभिधेयो दिग्देशकालस्वभावोऽर्थस्तमपेक्षते यः स स्वाभिधेयापेक्षः । चोऽवधारणे । दिगादीनां ह्यर्थानां पूर्वादिशब्दाभिधेयानां यत्पूर्वा-दित्वं तन्नियमेन कञ्चिदवधिमपेक्ष्य सम्पद्यते न त्ववधिनिरपेक्षम् । तथाहि—पूर्वस्य 10 देशस्य यत्पूर्वत्वं तत्परं देशमवधिमपेक्ष्य भवति । परस्याऽपि यत्परत्वं तत्पूर्वदेशमपे-क्ष्य भवति । तस्मात् पूर्वादिशब्दवाच्यापेक्षणेऽवश्यं केनचिदवधिना भाव्यम् । तत्र तस्यैवाऽवधेर्यः पूर्वादिशब्दाभिधेयापेक्षोऽवधिभाव एकान्तिकः स नियमो व्यवस्था-परपर्याय । तस्मिन् गम्यमाने पूर्वादीनां शब्दानां स्वाभिधेय एव वर्तमानानां सर्वा-दिकार्यम्, न तु वाच्ये । यो हि पूर्वादिशब्दाभिधेयादर्थादन्यस्याऽवधिभूतस्य नियमः स 15 कथं पूर्वादिशब्दवाच्यो भविष्यतीति । अतस्तस्मिन्नान्तरीयकतया गम्यमाने पूर्व-पर-अवर-दक्षिण-उत्तर-अपर-अधर इत्येतानि सप्तशब्दरूपाणि सर्वादीनि भवन्ति । अवधि-मति दिगादिलक्षणे वर्तमानानि पूर्वादीनि सर्वादीनि भवन्तीत्युदाहरति—पूर्वस्मै इत्या-दि । बहिर्भावेनेति—बहिर्योगे धर्मे बहिष्ठे धर्मिणि बहिःशब्दः । पुरि वर्तते इति—पुरीति शब्दप्रधानो निर्देशः । यदाऽन्तरशब्दस्य पुंव्यञ्जनान्तो वाच्यो भवति तदा सर्वादि- 20 त्वस्य निषेधः । यदा ईकारान्तोऽकारान्तो वा पुरः पुरी द्रङ्गादयश्च वाच्या भवन्ति तदा सर्वादित्वमस्त्येव । सर्वविभक्त्यादय इति—आदिशब्दाद्यथायोगमेकशेषपूर्वनिपात-पुम्भावडद्रिआत्—आयनिञ्—मयट्—अक्प्रयोजनानि ज्ञायन्ते इति । न तु सर्वमादीयते गृह्यतेऽभिधेयत्वेनेत्यन्वर्थाश्रयणात् सर्वेषां यानि नामानि सर्वादीनि । संज्ञोपसर्जने च विशेषेऽवतिष्ठेते । तथाहि—यदा सर्वशब्दः संज्ञात्वेन नियुज्यते तदा प्रसिद्धप्रवृत्तिनि- 25 मित्तपरित्यागात्स्वरूपमात्रोपकारी प्रवर्तत इति विशेष एवाऽवतिष्ठते । उपसर्जनमपि जहत्स्वार्थमजहत्स्वार्थातिक्रान्तार्थविशेषणतामापन्नम् अतिसर्वायेत्यादावतिक्रान्तार्थवृ-त्तिर्भवति । एवं बहुव्रीहावपि । उभत्पूरणेऽतो "नाम्न्युपान्त्य०" इति के उभः । तत्पूर्वा-द्यातेः "आतो डो ह्वावामः" इति डे निपातनाद्वित्वे उभयट् । डतरेति—प्रत्ययानुक-

१ ५-१-५४ । २ ५-१-७६ ।

रणम् । जित्वरिष् सम्भ्रमेऽतः " केचिद् " इति डे । त्वत् अस्यैव धातोः " संश्चद्वेह-त्साक्षादादयः " इति निपातनात् ।

**'नेमार्द्धप्रथमचरमतयायाल्पकतिपयस्य वा'** । १ । ४ । १० ॥ द्वितयेति-तयि रक्षणे च, अयि गतावाभ्यामचि तयायौ शब्दौ स्तः । परं व्याख्यानात्तयायौ
5 प्रत्ययौ । तयोः केवलयोरसम्भवात्तदन्तरस्य कार्यं दर्शयति-तयेति व्युत्पत्तिपक्षे तयद्-साहचर्यादयस्य तद्धितस्य ग्रहणं, न तु " गयहृदय० " इत्यौणादिकस्य । व्यवस्थि-तविभाषेति-व्यवस्थितं मर्यादानतिक्रान्तं प्रयोगजातं विशेषेण भाषते विभाषेति । अर्धा नाम केचिदिति-नामेत्यव्ययम् । नाम नाम्ना संज्ञया नाम प्रसिद्धार्थो वा । केचिद्वर्तन्ते किं नाम अर्धा नाम तदा क्लीबः ।

10 **'द्वन्द्वे वा'** । १ । ४ । ११ ॥ कतरे च दशनाश्चेति कृते द्वन्द्वस्योभयपदप्राधा-न्येऽपि कतरदशना इत्यत्र " द्वन्द्वे वा " इति न विकल्पः । सर्वादेरित्यानन्तर्यषष्ठी-विज्ञानात् । यद्वा सर्वादेरित्यावृत्त्या पञ्चमी व्याख्येया । " पञ्चम्या निर्दिष्टे परस्य " इति न्यायाच्च स्यादेर्व्यवहितत्वान्न भवति । वस्त्रान्तरवसनान्तरा इति-वस्त्रमन्तरं येषां ते वस्त्रान्तराः । सर्वादित्वादन्तरशब्दस्य पूर्वनिपाते प्राप्ते राजदन्तादित्वाद्वस्त्रस्य
15 पूर्वनिपातः । एवं वसनान्तराः । ततो वस्त्रान्तराश्च वसनान्तराश्चेति कृते समानार्थत्वादे-कशेषः प्राप्नोति । नैवम्, अत्र वसनशब्दो गृहपर्याय इति न समानार्थत्वम् । यद्वा एकोऽन्तरशब्दो व्यवधानार्थी अन्यश्च विशेषार्थी । ननु चाऽन्तरशब्दो बहुव्रीहौ वर्तते न द्वन्द्वे इति कथमदः प्रत्युदाहरणं, न । तदवयवको बहुव्रीहिरपि द्वन्द्व इति ।

**' न सर्वादिः '** । १ । ४ । १२ ॥ सर्वादिकार्यमिति-सर्वादिकार्यं कर्मतामापे-
20 दानं न प्राप्नोतीत्यर्थः, प्राप्तावपि परस्मैपदं मते ।

**'तृतीयान्तात्पूर्वावरं योगे'** । १ । ४ । १३ ॥ अश्ववडवेति पूर्वशब्दस्याऽपरेण स्वेन समाहृतिर्भणिष्यते इति सूत्रत्वात्समाहारः । कर्मधारयो वा पूर्वावयवयोगादिति । योगे सम्बन्धे इति-योग एकार्थीभावो व्यपेक्षा चोभयं गृह्यते । मासपूर्वायेति-"ऊनार्थ०" इति समासः । लुप्ताया अपि तृतीयायाः "स्थानीवा०" इति स्थानित्वेन तृतीयान्तत्वम् ।
25 " लुंप्यय्वृल्लेनत् " इति परिभाषया पूर्वस्य यत्कार्यं प्राप्तं लुपि निमित्तभूतायां तदेव निषिध्यते । अतः "स्थानीवाऽवर्णविधौ" इति स्थानित्वं ततस्तृतीयान्तत्वं सिद्धम् । ननु यास्यति मासेनेत्यत्र योगग्रहणं विनाऽपि " समर्थः पदविधिः " इति न्यायेन भविष्यति

---

१ ५-१-१७१ । २ उणा० ८८२ । ३ उणा० ३७० । ४ ७-४-१०४ । ५ ३-१-६७ । ६ ७-४-११२ । ७ ७-४-१०९ । ८ ७-४-१२२ ।

निषेधः किं योगग्रहणेन ? उच्यते, योगग्रहणादन्यदपि सिद्धं, अपरैः सामान्येन तृतीयान्तेन योगे प्रतिषेधः कृतो, न तृतीयान्तात्, तेषां मते पूर्वाय मासेनेत्यपि भवति, तन्मतसंग्रहार्थं तु पूर्वदिग्योगेऽपि पञ्चमी व्याख्येया।

'अवर्णस्यामः साम्'। १। ४। १५॥ परस्पराद्यामः सामादेशे तत्रैव सामादेशे(शः) एवोच्यते( च्येत ), परोक्षादेशस्तु आम् धातोर्विधीयमानः सर्वादेर्न सम्भवति, "[1]कर्तुः क्विप्॰" इति क्विप्प्रत्ययान्ततायां सम्भवेऽपि स्यादेरित्यधिकारान्निरस्यत इत्याह-षष्ठीति। 5

'आपो ङितां यै यास् यास् याम्'। १। ४। १७॥ आबन्तेति, पूर्वसूत्रेषु सर्वादेरव्यभिचारेऽप्युत्तरसूत्रे सर्वादिग्रहणादिह सामान्यमवगम्यते इति। कारीषगन्ध्यायै, अणि अणन्तत्वाद् "अणञेये॰" इति इञि तु "[2]इतोऽक्त्यर्थात्" इति ङीः प्राप्नोति ? नैवं, अत्र ष्यादेशः समजनि, "[3]अणञेयेकण्॰" इति सूत्रे स्वरूपस्याऽणो ग्रहणं, न ष्यादेशरूपस्य, एतद् व्याख्यानतो लभ्यते, इञस्तु इकारान्तस्य ङीरुक्तः। 10

'सर्वादेर्डस्पूर्वाः'। १। ४। १८॥ अस्य, इदंशब्दस्य "[4]अः द्वेः" इत्यत्वे "[5]लुगस्या॰" इत्यकारलोपे "[6]आत्" इत्यापि "[7]आपो ङितां॰" इति यायाद्यादेशे "[8]अनक्" इत्यदादेशेऽनेन डस्पूर्वत्वे "[9]डित्यन्त्य॰" इत्यकारलोपे, अथात्र यायाद्यादेशे कृते सर्वादित्वेन तत्पृष्ठभावित्वात् ङसि कृते व्यञ्जनादित्वाभावात्कथमदादेश इत्याह-परत्वादिति। प्रियसर्वायै इति-सर्वशब्दस्य प्राङ्निपाते प्राप्ते "[10]प्रियः" इत्यनेन प्रियस्य प्राङ्निपातः, अथ बहुव्रीह्यादेरिति-परेण बहुव्रीह्यादेरिति प्रागभिदधे तदेवाऽनूदितं अत आदेः फलं न निरीक्ष्यं, त्वकं पिताऽस्याऽहकं पिताऽस्य द्वकौ पुत्रावस्य के सब्रह्मचारिणोऽस्येति। 15 20

'टौस्येत्'। १। ४। १९॥ एदिति तकारोऽसन्देहार्थः, अन्यथाऽन्तरेण तकारमेरित्युच्यमाने किमित्येकार आदेशो भवत्याहोस्विदिकारः स्यात्, टौसोः परयोः पूर्वे आदेशा इति सन्देहः स्यात्।

'औता'। १। ४। २०॥ आबन्तस्यैवेति, आबन्तस्येत्येकाऽपि षष्ठी द्विधाऽर्थवशाद्भिद्यते, सम्बन्धितया स्थानितया इत्याह-आबन्तस्य सम्बन्धिना औता सह आबन्तस्यैव स्थाने इति। बहुखट्वौ-एकदेशेति "[11]स्थानीवा॰" वाऽऽबन्तत्वम्। 25

---

१ ३-४-२५। २ २-४-२०। ३ २-४-७२। ४ २-१-४१। ५ २-१-११३। ६ २-४-१८। ७ १-४-१७। ८ २-१-३६। ९ २-१-११४। १० ३-१-१५७। ११ ७-४-१०९।

'**इदुतोऽस्त्रेरीदूत्**' १ । ४ । २१ ॥ पञ्चाऽन्तस्येति निर्दिश्यमानेति वा इदुतौ स्थानिनौ विधानेत्यन्यथा ईकारमेव विदध्यात् ।

'**ङित्यदिति**' । १ । ४ । २३ ॥ धेनवे विधीयतेऽस्य पेय इति बाहुलकादपादाने, "धेः[1] शित्" इति नुः, कर्मणि तु क्यः स्यात्, नपुंसके त्वसम्भवित्वान्न दर्शितं, तत्र हि "अनाम्स्वरे[2]०" इति नोऽन्तेन भाव्यं, बुद्ध्यै इत्यादि–नन्विकारोकारमात्रापेक्षत्वात्पूर्वमेव एदोतौ स्यातां तदा याद्यादेः स्त्रीत्वविशिष्टेकारोकारापेक्षत्वेन बहिरङ्गत्वात्कृतयोरप्येदोतोरिकाराभावाद्वर्णविधित्वाच्च स्थानित्वाभावाद्दैदासाद्यादेशाभावात्प्रतिषेधो न युक्तः । न च तदन्तादादेशविधानाद् अवर्णविधित्वात्स्थानित्वमप्रधानेऽपि वर्णविधिप्रतिषेधात् एवं तर्हि अनवकाशत्वात्पूर्वं दैप्रभृत्यादेशाः प्रवर्तन्ते, पश्चाददिति प्रतिषेधस्तथापि इदुत्सन्निपातेन जायमानत्वाद्दैदासाद्यादेशैनैव एदोद्बाधो भविष्यतीति अदिति प्रतिषेधो व्यर्थः, यद्येवं यत्वमपि न प्राप्नोति तस्माददितीति प्रतिषेधो वर्णविधावयं न्यायो नोपतिष्ठत इति ज्ञापनार्थः, तेन दैदासादिषु कृतेष्वेदोतौ न भवतः ।

'**ङिडौं**' । १ । ४ । २५ ॥ बुद्ध्यामिति, ननु दाम्करणसामर्थ्यादेव डौर्न स्यात्, किं व्यावृत्त्या ? न ङित्यदितीत्येत्वनिषेधकत्वेन तस्य चरितार्थत्वाड्डौः स्यादिति व्यावृत्तिः सफला । यदा "इश्च स्थादः" इत्यत्र सिज्लोपविधायकत्वेन ह्रस्वकरणस्य चरितार्थत्वे गुणबाधकं कित्करणं, किञ्च यथासंख्यार्थं दाम्ग्रहणं कार्यं, अन्यथेदं सूत्रमन्यथा, उत्तरं चाऽन्यथा कार्यं स्यात्तथा च गरीयसी रचना स्यादिति ।

'**केवलसखिपतेरौ**' । १ । ४ । २६ ॥ सख्य इति, अत्र "स्थानीवाऽवर्णविधौ" इति न्यायात् क्विपः स्थानित्वे सति "य्वोः[5] प्वऽय्०" इति यलोपः कस्मान्न भवति ? '<u>असिद्धं बहिरङ्ग</u>' मिति न्यायादन्तरङ्गे क्विबाश्रिते कार्ये यत्वमसिद्धं द्रष्टव्यम् ।

'**न नाङिदेत्**' । १ । ४ । २७ ॥ सखिपतेर्नाङिदेता सह न यथासंख्यं, "खितिखीती[6]०" इत्यत्र सूत्रे खितिग्रहणात्सख्युरितो निर्देशाद्वा । सख्याविति–अत्राऽऽदेशे कृते "ङित्यदिति[7]" इति प्राप्नोति न तु पूर्वं, यतस्तद्बाधकं "ङिडौंः[8]" ततोऽपि "केवलसखि०" इत्यौत्वं ततस्तदादेशेति न्यायात्स्यादित्वे सति एत्वं प्राप्तं निषिद्धम् ।

'**स्त्रियां ङितां वा दैदास्दास्दाम्**' । १ । ४ । २८ ॥ "पत्युर्नः[9]" इति

---

१ उणा० ७८७ । २ १-४-६४ । ३ ४-३-४१ । ४ ७-४-१०९ । ५ ४-४-१२१ । ६ १-४-३६ । ७ १-४-२३ । ८ १-४-२५ । ९ २-४-४८ ।

निर्देशात्सखिपती नाऽनुवर्तेते, स्त्रिया इति विशेषणस्य विशेष्यसापेक्षत्वात्सखिपतिभ्यां परेषां ङितां "खितिखीतीय उर्"इत्येवमादिभिर्विशेषविधिभिराघ्रातत्वादित्करणस्य तु प्रयोजनवत्त्वात्सामान्यमिदुदन्तमधिकृतं गम्यत इत्याह–इदुदन्ताच्छब्दा इति।

'**स्त्रीदूतः**' १।४।२९॥ स्त्रियै इति, ग्रामण्यादि शब्दो हि क्रियाशब्दत्वात्रिलिङ्गत्वान्नित्यस्त्रीविषयो न भवतीति स्त्रियामपि वर्तमानादादेशाभावः। आमलक्या इति–आमलकादुणादिप्रत्ययान्तात् ङ्यं। आमलकी वृक्षवाची ध्वनिः। यद्वाऽऽमलकस्य फलं विकारो वृक्षः, दुःसंज्ञकस्य मयटो यथा बाहुलकाल्लुप्, गौरादित्वाद् ङीः, तदापि आमलकीशब्दो वृक्षवाची, वर्णविधित्वेनेति, इकारोकारौ वर्णौ तदाश्रिता दायादयः।

'**वेयुवोऽस्त्रियाः**' १।४।३०॥ आध्यै, आध्यायति, प्रध्यायति, आदधाति, प्रदधातीत्येवंशीलाऽऽधीः, प्रधीः, एतौ च शब्दौ बुद्धिवाचकौ वर्षाभूवन्नित्यस्त्रीलिङ्गौ, आधीप्रधीशब्दौ क्रियाशब्दत्वेन सर्वलिङ्गत्वाद्ग्रामण्यादिशब्दवन्नित्यस्त्रीविषयौ नेति चिन्त्यमेतदित्येके।

'**आमो नाम् वा**' १।४।३१॥ षष्ठीबहुवचनस्येति, अत्र ङिस्थानस्य सानुबन्धत्वादपरस्य चाऽसम्भवात्स्याद्यधिकाराच्च षष्ठीबहुवचनस्यैवाऽऽमो ग्रहणम्।

'**ह्रस्वापश्च**' १।४।३२॥ पूर्वेण विकल्प एवेति विशेषविहितत्वेनाऽपवादत्वादिति शेषः।

'**संख्यानां र्ष्णाम्**'।१।४।३३॥ र् च ष् च न् च तेषां र्ष्णाम्। "तवर्गस्य०"[1] इति णत्वं, "रषृवर्णा०"[2] इति तु न एकपदत्वाभावात्। "वोत्तरपदान्त०"[3] इत्यपि न, यतः षकारो न पूर्वपदस्थः किन्तु मध्यपदस्थः। तर्हि रेफ् पूर्वपदस्थोऽस्ति तदपेक्षया णत्वं भवतु? न, पदेऽन्तर इति निषेधात्, ननु र्ष्णामिति शब्दनिर्देशः संख्या चैकत्वादिरर्थः। ततः शब्दार्थयोः सामानाधिकरण्यं न सङ्गच्छेत? सत्यं, उपचारात्संख्यार्थाः शब्दाः संख्याशब्देनाऽभिधीयन्ते, यद्वा संख्यायते आभिरिति "उपसर्गादातः"[4] इति करणाधार इति परमप्यनटं बाधित्वा बहुलवचनादङि आपि च, संख्याशब्देनैकादयः शब्दा एवोच्यन्त इति। त्रिंशतामिति ननु च त्रिंशदादयः शब्दाः संख्येयेष्वपि वर्तमाना "विंशत्या शतातद्वन्द्वे" इति वचनादेकत्व एव वर्तन्त इत्यत्रैकवचनान्ता एव भवितुमर्हन्ति कथं बहुवचनं? सत्यं, एकशेषात्। अष्टा-

१ १-३-६०। २ २-३-६३। ३ २-३-७५। ४ ५-३-११०।

नामिति अथाऽष्टन्शब्दादामि परत्वात् " वाष्टन० " इत्याकारे नान्तत्वाभावात्कथं नाम् भावोऽत आहाऽऽम् तद्भवनान्ताया अपीति ।

' त्रेस्त्रयः ' । १ । ३ । ३४ ॥ आमः सम्बन्धिन इति, सम्बन्धस्योभयनिष्ठत्वं आमः सम्बन्धिन इत्यपि युक्तं, आमः सम्बन्धित्वं च त्रेरर्थद्वारकं, यस्मादामः
5 सम्बन्धी त्रेरर्थस्ततः स आम इत्युच्यते, आम्सम्बन्धीति–कार्यकारणभावे षष्ठी । त्रिशब्दः कारणमाम् च कार्यं, यया त्रिशब्दबहुत्वे आम् ।

' एदोद्भ्यां ङसिङसो रः ' । १ । ४ । ३५ ॥ सूत्रतकारस्वरूपग्रहणार्थः, तेन लाक्षणिकयोरप्येदोतोः परिग्रहः । परमेरिति–" आतो नेन्द्रवरुणस्य " इति ज्ञापकात्पूर्वं पूर्वोत्तरपदयोः कार्यं ततः सन्धिकार्यमतः परमैरिति प्राप्नोति ? नैवं, ' ज्ञापकज्ञापिता
10 विधयो ह्यनित्या ' इति ।

' खितिखीतीय उर् ' । १ । ४ । ३६ ॥ इति सायते दीयते स्म पुण्यैः सातं सातिः सौत्रः, सुखे सातति वा मुख्य इति अत्र विचि कृते " य्वोः प्वऽय्० " इति यस्य लुग्न, यतः " स्वरस्य परे० " इति णिलोपः स्थानी । न च " न सन्धि० " इत्यस्याऽवकाशः, 'नञा निर्दिष्टस्याऽनित्यत्वात्', भवतु वाऽवकाशस्तदेदमुत्तरं " य्वोः
15 प्वऽय्० " इति सूत्रे लुग इति संज्ञा, संज्ञापूर्वको विधिरनित्यो यद्वा " क्वौ " इति सूत्रकरणात् क्विब्विचोर्व्यञ्जनकार्यमनित्यं यतो प्रयोगिनामुपलक्षणः क्विप् ।

' ऋतो डुर ' । १ । ४ । ३७ ॥ ऋकारापदिष्टं लृकारस्याऽपि, तेन ऋफिडादिलत्वे कुल्लृकारः यदाह उपाध्यायः–आप्लृ इत्येतस्मात् षष्ठ्यामाप्ल इत्येव भवति ।

' तृस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रो घुट्यार् ' । १ । ४ । ३८ ॥
20 सूत्रत्वादनाम्स्वर इति न । सूत्र ऋकारोपादानाद्वा, कथमिति चेत् ? प्रशास्तॄणामृः प्रशास्तृस्तस्य । अतिकर्तारमिति–अत्र तत्पुरुषो न बहुव्रीहिः कच्प्रसङ्गात्तेन च व्यवधानेन प्राप्त्यभावात्, नन्वत्र सूत्रे शौ निमित्ते किं न दर्शितम् ।' ' स्वराच्छौ " इति न्यागमव्यवधानान्न प्राप्नोतीति चेन्न नागमः प्रकृतेरेवांऽश इति, सत्यं; अवयवेनाऽवयवस्य ऋलक्षणस्य व्यवधानं भवतीति न दर्शितम् ।

25 ' अडौ च ' । १ । ४ । ३९ ॥ डौ घुटि चेति–अत्र निमित्तात्परः श्रूयमाणश्च-

---

१ १-४-५२ । २ ७-४-२९ । ३ ४-४-१२१ । ४ ७-४-११० । ५ ७-४-१११ । ६ ४-४-११९ । ७ १-४-६५ ।

कारो निमित्तान्तरसव्यपेक्षः प्रत्यासत्तेरनन्तरसूत्रोपात्तमेव निमित्तमुपस्थापयति, कर्तृणि जले पितरि वारिणीत्यादावुभयोः सावकाशत्वेन ।

'मातुर्मातः पुत्रेऽर्हे सिनाऽऽमन्त्र्ये'। १ । ४ । ४० ॥ ननु कथं मातृशब्दस्य पुत्रार्थे वृत्तिर्न ह्यसौ पुत्रार्थे वर्तमानः क्वचिद्दृष्ट इत्याह–सामर्थ्यादिति । अयमर्थः–केवलो न वर्तते बहुव्रीहौ तु स्वार्थोपसर्जनतयाऽर्थान्तरं प्रतिपादयत्येव, कचोऽपवाद इति, अनन्तरानन्तरिभावे षष्ठीव्याख्येया, तेन कचा व्यवधानेन स्यात्, सम्भावित उत्कर्षो यस्याः सकाशात्, तत्पुत्र इति व्यपदेशः कथनं तस्य योग्यं, अरे गार्गीमातृकेति–अज्ञातपितृकत्वेनाऽनेकपितृकत्वेन च निन्द्यया मात्रा विगुणः पुत्रो निन्द्यत इति ।

'ह्रस्वस्य गुणः'। १ । ४ । ४१ ॥ अधिकृतस्य नाम्नो विशेषणाद्विशेषणेन च तदन्तविधिसम्भवादाह–ह्रस्वान्तस्येति श्रुतत्वादिति, श्रुतो ह्रस्वो ह्रस्वान्तत्वं त्वनुमितं, 'श्रुतानुमितयोश्च श्रौतो विधिर्बलीयान्'इति न्यायः, ह्रस्वविधानेति–'उभयोः स्थाने य' इति न्यायेन यदा सिव्यपदेशस्तदा सिर्ह्रस्वश्चाऽस्ति, अतो विधानसामर्थ्यात्, यदा तु ह्रस्वव्यपदेशस्तदा सेरभावान्न भवति ।

'एदापः'। १ । ४ । ४२ ॥ आश्चाऽसावाप्चान्त्याकारप्रश्लेषात्, हे प्रियखट्वेत्यत्र "गोश्चान्ते०" इति ह्रस्वत्वे 'एकदेशविकृते'ति न्यायात्प्राप्तोऽप्येकारादेशो न भवति ।

'नित्यदिद्द्विस्वराम्बार्थस्य ह्रस्वः'। १ । ४ । ४३ ॥ शृं गृणाति शृङ्गरुः ऋषिस्तस्याऽपत्यं शार्ङ्गरवी । हे अक्केति–अक् कुटिलायां गतावित्यस्य "निष्कतुरुष्क०" इत्यादिना निपातनात्कप्रत्यये । अततेः "पुंतपित्त०" इति ते निपातनादत्ता, अली भूषणादौअस्य "भिल्लार्च्छभिल्ल०" इत्यादिनिपातनाल्लेऽल्ला । हे हूहूः ?–जहातेः पृषोदरादित्वादूप्रत्यये द्विर्वचनादौ । हे वातप्रमीः ? नायऽमीकारान्तो नित्यदित् किन्तु पुल्लिङ्गोऽपि, हे सुभ्रिवति–"केवयु०" इति निपातनाद्भ्राम्यतेर्भ्रु । शोभनं भ्रु भ्रमणं यस्याः सुभ्रुशब्दाद्भीरुध्वनेश्च जातित्वादूङ्, परस्य विकल्पेन दित्वात् हे सुभ्रूः, ! हे भीरो ! प्राप्तमित्यभिप्रायः ।

'अदेतःस्यमोर्लुक्'। १ । ४ । ४४ ॥ आमन्त्र्य इति वर्तते । तत्र च स्यादेश एवाऽमूसम्भवतीत्याह–स्यादेशेति । हे कतरदिति–ननुअमूग्रहणस्याऽन्यदपि फलं कस्मान्न भवति, यथा कुम्भस्य समीपानि हे उपकुम्भमित्यत्र लुगर्थं ? नैवं, सिसाहचर्यादेकवचनादेशस्याऽमो ग्रहणं, न बहुवचनस्थानस्य ।

---

१ २–४–९६ । २ उणा० २६ । ३ उणा० २०४ । ४ उणा० ४६४ । ५ उणा० ७४६ ।

'**दीर्घङ्याब्व्यञ्जनात्सेः**' । १ । ४ । ४५ ॥ कुमारी ब्राह्मण इत्यत्र नैषां क्विबादीनां ङीस्योर्व्यवधायकत्वे, स्थानित्वम् । यतः स्थान्याश्रये वृद्ध्यादिके कार्ये कर्तव्ये स्थानित्वं, न तु व्यवधायकत्वे, नहि व्यवधायकत्वं कार्यं नाम अपि तु वृद्ध्यादीनि कार्याणीति; एवमच्योढ्वमित्यादिषु सिचो लोपस्य ढत्वे कर्तव्ये न स्थानित्वम् ।

5 '**समानादमोतः**' । १ । ४ । ४६ ॥ अचिनवमिति, न च वाच्यं परत्वान्नित्यत्वाच्च गुणेन भाव्यमिति, प्राप्तौ हि सत्यां हि परत्वं नित्यत्वं च चिन्त्यत इति ।

'**दीर्घो नाम्यतिसृचतसृषः**' । १ । ४ । ४७ ॥ आमादेश इति, स्याद्यधिकारादामादेश गृह्यतेऽत इदमुक्तं अष् इति, ननु षकाररेफाभ्यां व्यवधानादेवं न भविष्यति दीर्घः, किं षूवर्जनेनेत्याह—नकारेणेति, अन्यव्यञ्जनेन तु असम्भव इति ।

10 '**शसोऽता सश्च नः पुंसि**' । १ । ४ । ४९ ॥ समानस्येति, अत्र यद्यपि समानस्य शसोऽकारस्य च स्थानित्वं, तथापि 'प्रधानानुयायिनो व्यवहारा भवन्तीति' प्रधानस्थान्यासन्न एव दीर्घो भवति, प्रधानत्वं च षष्ठीति निर्दिष्टस्य समानस्येवेति 'प्रधानस्थान्यासन्न' इति वचनात् मुनीनित्यादौ शसोऽकारस्याऽवर्णहविसर्गत्यासन्नत्वेऽप्याकारो न भवति ।

15 '**संख्या सायवेरह्नस्याहन् ङौ वा**' । १ । ४ । ५० ॥ अण्विषये इति, द्वयोरह्नोर्भवो दिगधिकमिति तद्धितविषये सेऽण्विषयेऽटि अह्नादेशः, शाकटायनस्तु "[1]वर्षाकालेभ्यः" इकण्विषयेऽट्प्रत्ययमिच्छति, स्वमते तु न, द्व्यह्न इत्यस्याऽकालवाचित्वात् । यावदह्नि इत्यादिषु दुसंज्ञकेषु दोरीयविषयेऽटि तत ईयस्तस्य च । "[2]द्विगोरनपत्ये०" इति लुक्, द्व्यहे इति, "[3]द्विगोरह्नोऽट्०" इत्यत्राहन् ग्रहणज्ञापकात् "[4]सर्वांश०" इति परमप्यटं बाधित्वा "द्विगोरह्नोऽट्०" इत्यट् 20 ततोऽह्नाभावः ।

'**निय आम्**' । १ । ४ । ५१ ॥ अस्याम, "[5]आमो नाम्वा" इति नामादेशो न भवति, तत्र नित्यस्त्रीदूतोऽधिकृतत्वात्, नन्वेकदेशविकृतेति क्लीबेऽपि प्राप्तिरस्ति, न, निय ईनी इति, ईकारप्रश्लेषात्, निनिग्रामणिनि इत्येव भवति, भोजेन तु भूतपूर्वन्यायेन नपुंसके नियामित्युक्तम् ।

25 '**वाऽष्टन आः स्यादौ**' । १ । ४ । ५२ ॥ पूर्वसूत्राद् ङेरनुवृत्तिर्मा भूदिति स्यादिग्रहणं, अथ—

---

१ ६–३–८० । २ ६–१–२४ । ३ ७–३–९९ । ४ ७–३–११८ । ५ १–४–३१ ।

'**अष्ट औ जंस्शसोः**' । १ । ४ । ५३ ॥ इत्यत्र अष्ट इति ज्ञापकात् ङेरनुवृत्तिर्न भविष्यतितर्हि मतान्तरसंग्रहार्थम् ।

'**डतिष्णः संख्याया लुप्**' । १ । ४ । ५४ ॥ सन्निपातलक्षणत्वादिति, सन्निपतति कार्यमस्मिन् सन्निपातो निमित्तं शिलक्षणं स लक्षणं चिह्नं यस्य तस्य ।

'**नपुंसकस्य शिः**' । १ । ४ । ५५ ॥ स्त्री च पुमांश्च स्त्रीपुंसौ "स्त्रियाः पुंसो०" इति समासान्तः, न स्त्रीपुंसौ नखादित्वान्नञोऽदभावः, पृषोदरादित्वात्स्त्रीपुंसशब्दस्य पुंसक आदेशः । 5

'**औरीः**' । १ । ४ । ५६ ॥ कार्यकार्यिणोरभेदनिर्देशः सर्वादेशार्थः, अन्यथा "षष्ठ्याऽन्तस्य" इति न्यायाद्विश्लिष्टावर्णस्यौकारस्य स्यात्, यतो अ ओ इति प्रकृतौ "ऐदौत्सन्ध्यक्षरैः" इत्यनेनौकारो निष्पादितः । 10

'**अतः स्यमोऽम्**' । १ । ४ । ५७ ॥ नन्वत्र अद्ग्रहणं किमर्थं, न च वाच्यमद्ग्रहणाभावे दधीत्यत्राऽप्यमादेशः स्याद्यतोऽनतो लुबिति सूत्रे बाधकं विद्यते इति ? ननु अनत इत्यत्र प्रसज्यप्रतिषेधः पर्युदासो वा नञ् गृह्यत इति सन्देहः, न च वाच्यं पर्युदासाश्रयणे हि नामिनो लुबिति सूत्रं कुर्यात् तस्मात्प्रसज्य एव, इदमपि न वाच्यं, कुतः काष्ठापरं प्रकर्षमध्यायक इत्यत्र क्रियाविशेषणत्वे आकारादप्यमो लुग्दृश्यते, अतोऽनत इति कर्तव्यमेव, अतः सन्देहस्तदवस्थ एवाऽतोऽतो ग्रहणेन ज्ञाप्यते प्रसज्य एव गृह्यते, तथा च पय इत्यादौ लुप् सिद्धा न त्वमादेशः । अदिति नपुंसकस्य विशेषणमन्तस्तदन्तप्रतिपत्तिर्भवतीत्याह-अकारान्तस्येति, अम्ग्रहणमुत्तरार्थं, तेनाऽन्यतपश्येति । 15

'**पञ्चतोऽन्यादेरनेकतरस्यदः**' । १ । ४ । ५८ ॥ पञ्चसंख्या परिमाणमस्य "पञ्चद्दशद्वर्गे वा" समासान्तः । 20

'**अनतो लुप्**' । १ । ४ । ५९ ॥ नन्वनत इति किमर्थं, न च वाच्यं कुंडमित्यत्राऽपि स्यात्, "अतः स्यमोऽम्" इति बाधकात् ? अत्रोच्यते, अनत इत्यभावे "पञ्चतोऽन्यादे"रित्यतोऽन्यादेरित्यागच्छेत्, न च वाच्यमन्याद्यभीष्टौ ह्येकमेव योगं कुर्यात्, पूर्वमेकतरवर्जितस्याऽन्यादेर्ग्रहणमिति पृथग्योगस्य साफल्यात् । हे कतृ ! इत्यादौ निरवकाशत्वात्प्रथमं सिलोपे प्रत्ययलोपलक्षणन्यायेन ह्रस्वस्येति गुणः कस्मान्न भवतीत्याह–लुकमकृत्वेति । 25

---

१ ७-३-९६ । २ ७-४-१०६ । ३ १-२-१२ । ४ ६-४-१७५ । ५ १-४-५७ ।

'नामिनो लुग्वा'। १। ४। ६१ ॥ प्रियतिसृ कुलमिति, "ऋदुशनस्०" इत्यत्र घुटः सेर्ग्रहणादत्र क्लीबत्वेन घुट्त्वाभावे सेः स्थानित्वेऽपि न डाः।

'वाऽन्यतः पुमांष्टादौ स्वरे'। १। ४। ६२ ॥ पुंवद्वेति–परार्थे प्रयुज्यमानः शब्दो वतिमन्तरेणाऽपि वत्यर्थं गमयति, अत्राऽपि परार्थो नपुंसकस्तत्र हि
5 प्रयुक्तः पुमानति। ग्रामण्या ग्रामणिनेति, ननु पूर्वं क्विब्वृत्तेरित्यादिना यत्वं कस्मान्न भवति? सत्यं, इदुतोऽस्त्रेरित्यत्र स्त्रिवर्जनेन परमपीयुव् यत्वादि, इदुदाश्रितत्वेन नाध्यते इति भणनात्। 'आदेशादागम' इति न्यायाद्यत्वं बाधित्वा नोऽन्तः। ग्रामण्येति ग्रामणीशब्दस्याऽनेन पुंवत्त्वे ह्रस्वनागमाभावः। कर्तॄणामिति द्वयोरपि "ह्रस्वापश्च" इति नाम्, न तु पुंस्त्वपक्षेऽनाम्स्वर इत्यनेन नोऽन्तस्तत्राऽऽमो वर्जितत्वाद्द्वि-
10 तीयप्रयोगो रूपनिर्णयार्थो दर्शितः। न तु तस्य किञ्चिदत्र फलं कुमार्येति, अत्र यद्यपि कुमारीशब्दः पुंवत्तथापि नित्यस्त्रीविषयत्वादीकारस्य "स्त्रीदूतः" इति दैः। कल्याण्यै इति शोणादित्वाद् ङीः।

'दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान्'। १। ४। ६३ ॥ कच् न भवति, "दध्युरः सर्पि०" इत्यनेन प्राप्तः, "अक्ष्णोऽप्राण्यङ्गे" इत्यप्यनित्यत्वान्न, अतिद-
15 ध्न्या स्त्रियेति, यदाऽत्र "इतोऽक्त्यर्थात्" इत्यनेन ङीस्तदा तद्व्यवधानादनेनाऽऽदेशाभावेऽतिदध्येत्येव भवति, यदा तु दध्यतिक्रान्तं ययेति बहुव्रीहिस्तदा "दध्युरःसर्पि०"इत्यनेन कचा भाव्यं, तस्माद्दध्यतिक्रान्तयेति तत्पुरुष एव न्याय्यः।

'अनाम् स्वरे नोऽन्तः'। १। ४। ६४ ॥ अनाम् चाऽसौ स्वरश्च अथाम्वर्जात्स्वरे लब्धे स्वरग्रहणं टादावित्यधिकारनिवृत्त्यर्थं, अन्तग्रहणं विना नस्य प्रत्ययत्वं स्यात्तथा
20 च निमित्ताभावेति तिसादेशो निवर्तेत, तथा 'प्रत्ययाप्रत्यययोरिति' न्यायेनाऽस्य नकारस्य प्रत्ययस्याऽपि सम्भवे वनानीत्यादावेव दीर्घः स्यान्न तु राजानमित्यादौ। प्रियतिसृण इति यदि पूर्वं नागमः स्यात्तदानीं किं विनश्येत्, यतः स्वाङ्गमव्यवधायकमिति कृत्वा कृतेऽपि नागमे तिसादेशो भविष्यति, 'आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' तत्कथं परत्वादित्युक्तं? अत्रोच्यते, यस्माच्छब्दान्नागमः समानीतस्तस्य यदि किमपि
25 प्राप्नोति तदानीमयं न्याय उपतिष्ठते, अत्र तु प्रियत्रिन् इत्येतस्य न किमपि प्राप्नोति, अपि तु त्रिअवयवस्य तिसादेशः, ततश्चाऽवयवस्याऽवयवेन व्यवधानं न तु अवयवेनाऽवयविनः, यथा देवदत्तस्य श्मश्रु न दृष्टं हस्तेन व्यवहितत्वात्, नहि कोऽपीत्थं वदति यदुत देवदत्तो न दृष्टो हस्तेन व्यवहितत्वात्, तौम्बुरवं चूर्णं तुम्बुरुणो विकारः

---

१ १-४-८४। २ १-४-३२। ३ १-४-२९। ४ ७-३-१७२। ५ ७-३-८५। ६ २-४-३२।

फलं "प्राण्यौषधि०" इत्यादिनाऽण् तस्य लुप्तस्य विकारो "विकारे" पुनरण्, तुम्बुरुणो वृक्षस्य विकारश्चूर्णमेकस्मिन्नणि वा नामिन इत्येवेति, क्लीवे नाम्यन्तसत्के स्यादौ विज्ञानात् कुलयोरित्यत्रैत्वे कृते न नागमः। द्वयोरित्यत्राऽपि आदेशादागम इति नोऽन्तः प्राप्तो न परत्वात् अन्तरङ्गत्वाच्च वर्णेन येन "आद्वेर" इत्यत्वं, पश्चादेत्वे कृते सकृदिति न्यायः। "स्वराच्छौ" अत इत्येवेति। नन्विवर्णादेः "अनामस्वरे नोऽन्त" 5
इति शौ नागमः सिद्ध एव, आकारान्तस्य तु अन्त्यस्य नपुंसके ह्रस्वविधानात् स्थितिरेव नाऽस्तीति, अत इत्येव युज्यते किं स्वरग्रहणेन? अत आह उत्तरार्थमिति।

'धुटां प्राक्'। १। ४। ६६॥ प्रागित्यनेन सह सम्बन्धाभावात् धुटामित्यत्र "प्रभृत्यन्यार्थ०" इति न पञ्चमी। गोमन्ति, "ऋदुदित" इत्यनेन परत्वान्नोऽन्तेऽनेन नोऽन्तो न भवति। 10

'घुटि'। १। ४। ६८॥ अधिकारोऽयमिति। नपुंसकस्य परतो नोऽन्तो न भवतीति विधिरेव कस्मान्न भवति? उच्यते–नपुंसके शिमन्तरेणाऽन्यस्य घुट्त्वाभावात्तत्र स्वराच्छावित्यादिभिर्नागमस्य विहितत्वात् पारिशेष्यादधिकारोऽयमिति।

'ऋदुदितः'। १। ४। ७०॥ पृथग्योगो भ्वादिव्युदासार्थं इति अयमभिप्रायः। "उदितः स्वरान्नोऽन्त" इत्यत्र धात्वधिकाराद् भ्वादेरुदित उदितः स्वरादित्यनेनैव सिद्धत्वादत्र "उदितः" पृथगारम्भादुदितोऽभ्वादेरेव, तत्साहचर्यादृदितोऽप्यभ्वादेरेवेति नियमात्, सम्राडित्यादौ न भवति। 15

'युजोऽसमासे'। १। ४। ७१॥ असमासे इति–स्याद्याक्षिप्तस्य नाम्नो युज इति विशेषणात्तत्र च तदन्तविधेर्भावात्समासेऽपि प्राप्तिरिति असमासग्रहणं, इदमेव च ज्ञापयति अत्र प्रकरणे तदन्तविधिरस्तीति। 20

'अनडुहः सौ'। १। ४। ७२॥ सत्यपि नामग्रहणे इति न्यायेऽनडुहीत्यादौ धुडन्तत्वाभावान्न भवतीति। ननु अनड्वानित्यत्र "स्रंसध्वंसक्वस्स०" इति दकारः कथं न भवति? सत्यम्, प्राप्नोति परं विधानसामर्थ्यान्न भवति।

'पुंसोः पुमन्स्'। १। ४। ७३॥ पुंसो रुदित्वादिति। ननु "पातेर्डुम्सुः" इत्युदनुबन्धः कृतोऽस्ति तेनाऽपि प्रियपुंसीतरा इत्यादि रूपत्रयं सेत्स्यति किमत्रोदनुबन्धेन? उच्यते–यदाऽव्युत्पत्त्याश्रयणं तदाऽत्र सूत्रे कृतस्योकारस्य फलम्, व्युत्पत्तौ तु 25

१ ६-२-३१। २ ६-२-३०। ३ २-१-४१। ४ १-४-६५। ५ १-४-६४। ६ ३-२-७५। ७ १-४-७०। ८ ४-४-९८। ९ २-१-६८। १० उणा० १००२।

फलमौणादिकस्य । यथा भवतुशब्दो "भातेर्डवतुः" इति व्युत्पादितोऽपि सर्वादौ । प्रियपुमानिति बहुत्वे वाक्यं, एकत्वे तु "पुमनडुन्नौ०" इति कच् स्यात् । ङीह्रस्वपुंवद्विकल्पेति ङीः, ह्रस्वपुंवतोश्च विकल्पः ।

'ओत औः'। १ । ४ । ७४ ॥ चित्रगुरित्यत्र परत्वात्पूर्वं ह्रस्वत्वे कृते पश्चात् घुटि ओकाराभावादोत इति वचनादौकारो न भवति, वर्णविधित्वाच्च स्थानिवद्भावो नाऽस्ति । अथ हे चित्रगो ! इत्यत्रौकारस्य विद्यमानत्वादुभयोः स्थानिनोः स्थाने इति न्यायेन ओ व्यपदेशे सति प्राप्नोति कस्मान्न भवति ? उच्यते—यदौकारव्यपदेशस्तदा लाक्षणिकत्वान्न भवति ।

'आ अम् शसोऽता'। १ । ४ । ७५ ॥ नन्वत्राऽतेति किमर्थं ? यत एतद्विनाऽपि गा इत्यादि प्रयोगजातं "समानानामिति" दीर्घे सिध्यतीति ? उच्यते—अतेति पदं विना पुंलिङ्गे "शसोऽता०" इति स्त्रीलिङ्गे "लुंगात०" इति प्रवर्तेयातां, ततश्च गान् गः इत्याद्यनिष्टं स्यात्, स्थिते तु "शसोऽता०" इत्यनेनैव दीर्घस्य सन्नियोगेऽकारोऽभाणि ।

'पथिन्मथिन्नृभुक्षः सौ'। १ । ४ । ७६ ॥ अत्र घुटिति सम्बन्धात्साविति श्लिष्टनिर्देशेन सुप् न गृह्यते । पन्था इत्यत्र सानुनासिकस्याऽऽयादेशो भवन् "लिँलौ" इत्यत्र द्विवचनेन ज्ञापितत्वान्निरनुनासिक एव भवति । पथीरिति, पन्थानमिच्छति क्यनि नलोपः स च "दीर्घश्च्वि०" इति परे कार्येऽसन्न भवति, यतो "रात्स" इत्यतः प्रागेव यत्सूत्रं तदेवाऽसद्भवति, इदं तु "रात्स" इत्यतः परमिति नाऽसत्, ततः पथीयतीति क्विपि अल्लोपे यलोपे चेदं रूपम् । नन्वनेनाऽऽत्वरूपे स्यादिविधौ विधातव्ये नलोपस्याऽसिद्धत्वान्नाऽन्तत्वमिति । न च वाच्यं, अत इत्यलुकः स्वरस्य परेऽनेन स्थानिवद्भावेन नान्तत्वानुपपत्तिरिति । यतः प्रत्यासत्तेर्यन्निमित्तो लुग्विधिरपि यदि तन्निमित्तो भवतीति व्याख्यानात् । अत्र त्वस्य लुक् क्विपि आत्वं तु सौ प्रत्यये प्राप्नोतीति कृत्वाऽत्र नान्तत्वमस्त्येवेति प्राप्नोत्यात्वं, सत्यम्, नान्तेतिव्यावृत्तिबलादेव न भवति; अन्यथा यत्र कुत्राऽपि नलोपस्तत्र सर्वत्राऽप्यमीषां पथ्यादीनां ध्वनीनामनेनाऽऽत्वलक्षणे स्यादिविधौ कर्तव्ये "णषमसत्परे०" इति न्यायेन नलोपस्याऽसिद्धत्वेनान्तत्वसद्भावादात्वं भवेदेवेत्यत्र सूत्रे नान्तनिर्देशोऽनर्थकः स्यात् । तस्माद्यत्र साक्षान्नान्तत्वममीषां भवति तत्रेदं प्रवर्ततेऽन्यत्र तु व्यावृत्तिरिति सर्वं समीचीनं, तर्हि "दीर्घङ्याब०" इति सूत्रेण सेर्लुक्कस्मान्न भवति ? यतोऽयमपि स्यादिविधिः, स्यादिविधौ च नलोपोऽसद्भवतीति; सत्यम्, "दीर्घङ्याबि"त्यत्र सावधारणं

१ उणा० ८८६ । २ ७-३-१७३ । ३ २-१-१०७ । ४ १-३-६५ । ५ ४-३-१०८ । ६ ३-१-९० । ७ २-१-६० । ८ १-४-४५ ।

व्याख्येयं व्यञ्जनान्तादेव यदि सिर्भवतीति, विहितविशेषणाद्वा यत्र एभ्यः परः सिर्विहितो भवति तत्र लुग्भवति; अत्र त्वीकारान्ताद्विहितो न व्यञ्जनान्तादिति। तर्हि या सा इत्येवमादिषु सेर्लुग् न प्राप्नोति ? सत्यम्, यत्रैतेषां मध्यादेकस्मादपि विहितो भवति, कार्यान्तरेषु च कृतेषु पश्चादेतेषामेव मध्येऽन्यतमस्मात्परो भवति तत्राऽपि भवति; तेनाऽनयोः प्रयोगयोर्व्यञ्जनान्तात्परो विहितः कार्यान्तरेषु सत्सु विद्यते आबन्तादिति सेर्लुग्भवत्येव । यः स इत्यनयोस्तु व्यञ्जनान्ताद्विहितोऽस्ति, परं "[1]आद्वेरः" इत्यादिकार्येषु कृतेषु सत्सु पश्चादमीषां मध्यादेकस्मादपि परो नाऽस्तीति न सेर्लुप्। बहुऋभुक्षा इति "[2]ऋत्यृति ह्रस्वो वा" इति ह्रस्वः, स्त्रीत्वाभावादिनः कज् न भवति; हे सुपथिन् ! हे सुपथीति "[3]क्लीबे वा" इत्यनेन वा नस्य लोपः।

'एः'।१।४।७७॥ पथ्यादीनामेकारस्याऽसम्भवात्, एरिति इकारत् षष्ठीत्याह ।

'थोन्थ्'।१।४।७८॥ अनेकवर्णत्वात् सर्वस्य प्राप्तौ थ इति स्थानिविशेषार्थमृभुक्षिन्निवृत्त्यर्थं च ।

'इन् ङी स्वरे लुक्'।१।४।७९॥ अघुट्स्वरादाविति। ङीसाहचर्यादघुटीति विशेषणं ज्ञेयं, तर्हि स्यादिमन्तरेणाऽपि प्राप्नोतीति न वाच्यं स्याद्यधिकाराश्रयणात् ङीग्रहणस्य वैयर्थ्यप्रसङ्गाच्च । सुपथी स्त्री कुले वेति व्युत्पत्तिपक्षे सुभ्वादित्वात् उणादीनामव्युत्पन्नानि नामानीति पक्षाश्रयणादिनन्तत्वादिनः कज् न भवति, समासान्तविधिरनित्यत्वात्। "[4]ॠक्पूः०" इत्यपि न, नान्तत्वात् "[5]स्त्रियां नृत०" इति ङी ।

'वोशनसो नश्चामन्त्र्ये सौ'।१।४।८०॥ यदा 'सर्वविधिभ्यो लोप' इति न्याय आश्रीयते तदा सेः स्थानिवद्भावेन कार्यम्।

'उतोऽनडुच्चतुरो वः'।१।४।८१॥ उत्तरत्र शेषग्रहणादामन्त्र्यसिरेवाऽनुवर्तते। पाश्चात्यसूत्रे साविति सामान्यभणनेऽपि सत्यपि नामग्रहणे लिङ्गविशिष्टस्येति हे अनडुहीत्यत्र गौरादिनिपातनाद्ध्रस्वाभावः, एवमुत्तरत्राऽपि। चतुःशब्दस्याऽर्थप्राधान्येनैकामन्त्रणासम्भवे समासे उपसर्जनीभूत एवोदाह्रियते ।

'वाः शेषे'।१।४।८२॥ अत्र सूत्रे शेषस्य घुट आम्नातत्वादेतत्सूत्रमुक्तः प्राक्तनसूत्रविषय इति भावः।

---

१ २-१-४१ । २ १-२-२ । ३ २-१-९३ । ४ ७-३-७६ । ५ २-४-१ ।

'सख्युरितोऽशावैत्'। १।४।८३॥ ननु प्रक्रियालाघवार्थं सख्युरितोऽशावायिति क्रियतां किमैत्करणेन ? न, अनेकवर्णेति सकलस्याऽपि स्यात्। न च निर्दिश्यमानानामिति इत एवाऽयिति वाच्यं, यतो विभक्तिसामान्येन सखिशब्दस्य विशेष्यत्वेनेकारस्य विशेषणत्वेन च निर्दिश्यमानत्वाभावात्। अशाविति–अथ शौ
5 सत्यादेशादागम इति न्यायादैत्वात् प्रथममेव नागमेन भाव्यं, ततस्तेन व्यवधानादैकारो न भविष्यति, न च द्वयोरप्यन्यत्र सावकाशत्वादैकारः स्यादिति वाच्यम्। कृतेऽप्यैकारे क्लीब इति ह्रस्वत्वे ततो नागमे दीर्घत्वे च न कश्चिद्दोषः, नैवम्; 'असिद्धं बहिरङ्गमि'ति घुड्निमित्तस्यैकारस्य बहिरङ्गत्वात् ह्रस्वत्वे कर्तव्येऽसिद्धत्वात्। ननु भवत्वेवं तथापि कृताकृतप्रसङ्गित्वेन नित्यत्वात्पूर्वं नागम एव घुड्व्यवधायको
10 भविष्यतीति ? नैवम्, कृतेऽपि नागमे प्रकृतिभक्तत्वेनाऽव्यवधायकत्वादैकारोऽपि नित्य इति द्वयोर्नित्ययोः परत्वादैकार एव स्यादिति शिप्रतिषेधः। अतिसखीनि–पूजितः सखा येषु कुलेषु सखिशब्दो नपुंसकोऽपि लक्ष्येषु दृश्यते।

'ऋदुशनस्पुरुदंशोऽनेहसश्चसेर्डाः' ।१।४।८४॥ ऋकारान्तस्य "अर्डौ च" इत्यरि, त्रयाणां तु "अभ्वादे"रिति दीर्घत्वे "सोरुः" इति रुत्वे च, सखि-
15 शब्दस्य त्वैत्वे प्राप्ते आरम्भः। हे अनेह इत्यत्र न सन्धिरिति सन्धिनिषेधः।

'नि दीर्घः'। १।४।८५॥ राजेति–स्यादिविधौ कर्तव्ये नलोपस्याऽसत्त्वात् प्रथमं लुग् न। सुघ्नयतेः क्विपि ने सुघ्नो हन्ति "अचित्ते टक्" अधिकरणे तु "स्थादिभ्यः कः" "गमहन०" इत्यलुग्, "हनो ह्नो घ्न" दीर्घविधित्वात् णेः स्थानिवद्भावो न भवति।

20 'न्स्महतोः'। १।४।८६॥ अत्रौणादिको "द्रुहिवृहि०" इत्यनेन कतृप्रत्ययान्तो व्युत्पन्नोऽव्युत्पन्नो वा महच्छब्दो ग्राह्यः, यस्तु शत्रन्तस्तस्य महन्नित्येव नत्वनेन दीर्घः, 'लक्षणप्रतिपदोक्तयो'रिति न्यायात्। यतः शतृप्रत्ययान्तं महदिति रूपं लाक्षणिकं कतृप्रत्ययान्तं तु प्रतिपदोक्तम्। एतच्च वत्सऋषभावूचतुः। सर्पींषीति–अत्र "न्स्महतोः"इत्यनेन दीर्घलक्षणे स्यादिविधौ विधातव्ये णषमसत्परे इत्यनेन
25 षत्वमसत्। महत्साहचर्यादिति–महदिति शुद्धो धातुः क्विबन्तो न सम्भवति तत्साहचर्यादन्यस्याऽपि शुद्धधातोः क्विबन्तस्य न भवति, नामधातुस्तु महदपि क्विबन्तः सम्भवति; अतोऽन्यस्याऽपि नामधातोः क्विबन्तस्य भवति। महच्छब्दस्तावन्नामत्वं न व्यभिचरति तत्सन्नियोगनिर्दिष्टस्य न्सन्तस्याऽपि नामत्वाव्यभिचारिण एव ग्रहणम्।

---

१ १–४–३९। २ २–१–७२। ३ ५–१–८३। ४ ५–३–८२। ५ ४–४–८३।
६ २–१–११२। ७ उणा० ८८४।

महती कुले इति, श्रेयसः पश्य, श्रेयसी कुले इति तु न दृश्यते न्सन्तत्वाभावेन क्र्यङ्गविकलत्वात् ।

' इन्हन्पूषार्यम्णः शिस्योः ' । १ । ४ । ८७ ॥ भ्रूणहानीति–हन्तेः केवलस्य क्विब् न दृश्यते इति तदन्तमुदाहरति–बहुपूषाणीति–पूषार्यम्णोः स्वप्रधानायां वृत्तौ शेरसम्भवात्तौ समास उपसर्जनभूतावुदाहरति । एषां शिस्योरेवेति–एषामेव शिस्योरिति तु विपरीतनियमो भवति, " वंश्यज्याय० " इत्यत्र युवेति " पराणिकान० " इत्यत्र तु पराणीति निर्देशात् । वृत्रहणाविति संज्ञायां, " पूर्वपदस्था० " इत्यनेन, असंज्ञायां तु " कवर्गैकस्वरवति " इति णत्वम् । तदन्तविधिमिति–ननु " अनिनस्मन्० " इत्यत्राऽतोरनिर्देशादनर्थकेन तदन्तविधेरप्रयोगादर्थवद्ग्रहणन्यायात् क्रियानित्यत्रैव दीर्घः प्राप्नोति न गोमानित्यादौ ? सत्यम्, अतुरनर्थकोऽपि तदन्तविधिं प्रतिषेधयति मत्वादीनामुकारानुबन्धकरणात्; अन्यथा तेषामपि शतृवत् ऋकारमेवाऽनुबन्धं कुर्यात् ।

' अभ्वादेरत्वसः सौ ' । १ । ४ । ९० ॥ भवानिति–नोऽन्ते सत्यपि " आगमोऽनुपघातेन " इति न्यायाद्भवत्येव दीर्घः ।

' क्रुशस्तुनस्तृच् पुंसि ' । १ । ४ । ९१ ॥ पुंलिङ्गविषय इतिसमासेऽपि यदि पुंलिङ्गविषय एव । तेन प्रियः क्रोष्टा यस्या यस्य वा कुलस्याऽत्र न भवत्येव आदेशः । अत एव व्यावृत्तिः क्लीबविषये दर्शिता । क्रोष्टोरिति–क्रोष्टोः क्रोष्टृ इति दृश्यम् ।

' टादौ स्वरे वा ' । १ । ४ । ९२ ॥ नित्यत्वादितिकृताकृतप्रसङ्गिन्यायेनेति । मृगवाचीति–मृगशब्दस्याऽरण्यवाचित्वेऽपि शृगाल एवाऽर्थेऽत्र वृत्तिर्दृश्यते । तथापीतितुन्नन्तो मृगवाच्येव तृच्प्रत्ययान्तस्तु कस्मिन्विषये मृगवाचीति न ज्ञायते । तुनः स्थानप्रवृत्तेन तु तृजादेशेन ज्ञाप्यते यत्र घुटि टादौ स्वरादौ च तृच् तत्रैव मृगवाचित्वम्, तेन मृगे वाच्ये क्रोष्टृभ्यामित्यादि न भवतीति नियमसिद्धिः ।

' स्त्रियाम् ' । १ । ४ । ९३ ॥ स्त्रियां चेति भिन्नवाक्यतयैतत्फलं यत् स्त्रियामित्युत्तरसूत्रे याति, अन्यथा पुंस्त्रियोरित्येव कुर्यात् । निर्निमित्त एवेति–ननु निमित्तत्वाश्रयणे ऋकारान्तत्वाभावात् क्रोष्टुशब्दस्य कथं ङीः स्यात् ? न क्रोष्टुशब्दस्य गौरादौ पाठाद् ङीः स्यादेवेति ङीसिद्धिः ।

प्रथमाध्यायः समाप्तः ॥

---

१ ६-१-३ । २ ३-३-२० । ३ २-३-६४ । ४ २-३-७६ । ५ प्रयोजयति इति लघुन्यासे ।

' त्रिचतुरस्तिसृचतसृ स्यादौ ' । २ । १ । १ ॥ स्त्रियामित्यनुवर्तते । पूर्वसूत्रादिति शेषः । तच्च श्रुतत्वात्त्रिचतुर इत्येतस्यैव विशेषणम् । परत्वादिति—ननु कृताकृतप्रसङ्गित्वेन नित्यत्वात् "आदेशादागम" इति न्यायात् पूर्वं नागम एव प्राप्नोति, नैवम् ; शब्दान्तरप्राप्त्या नागमोऽप्यनित्यः । यद्वा परत्वादिति कोऽर्थः ? प्रकृष्टत्वादित्यर्थः, प्रकृष्टत्वं च "आगमात् सर्वादेश" इति न्यायात्, किञ्च "ऋतो रः स्वरेऽनि" इत्यत्राऽनीति वचनमनर्थकं स्यात् । स्वरादौ पूर्वं नकारे तिसृाद्यादेशाभावात् रत्वप्रसङ्ग एव नाऽस्तीति अनीति वचनात्पूर्वं नागमादेस्तिसृाद्यादेश इति । प्रियतिसृ कुलमिति "नामिनो लुग्वा" इत्यत्र चतुःशब्दस्याऽपि लुग्विकल्पमिच्छन्त्येके, तन्मते प्रियचतसृ कुलं प्रियचतुर्वा कुलमिति । प्रियत्रीत्यादि—स्त्रीलिङ्गविवक्षायामपि समासात् ङीप्रत्यये प्रियत्र्येव, "शेषाद्वा" इति कचि प्रियत्रिकैवाऽऽदेशो न भवति; प्रथमं ङीप्रत्यये पश्चाद्बहुव्रीहौ "ऋन्नित्यदितः" इति कचेव । यदा तु केवलात्त्रिशब्दाद् ङीस्तदैकदेशविकृतत्वेनाऽऽदेशो भवति । कथं तिसृकानामेति ? त्रिशब्दात् संज्ञायां के आपि बहुवचनेन स्यादेर्व्यवधानात् कथं तिसृभाव इति प्रष्टुराशयः, समाधत्ते—स्त्रीलिङ्गो बहुवचनविषयः संज्ञाशब्दोऽयमिति । तस्यन्ति परबलान्यासु "निष्कतुरुष्क०" इति निपात्यते ।

' ऋतो रः स्वरेऽनि ' । २ । १ । २ ॥ अनीति नकारः प्रत्ययरूप आगमरूपो वा । समानदीर्घत्वेति—"शसोऽता०" इति, "अर्ङौ च" इति, "ऋतो डुर्" इति प्राप्तानाम् । तदपवाद इति—व्यञ्जनादौ स्यादौ पूर्वयोगः सावकाशः स्वरादौ तु अयमेव स्यात् ।

' जराया जरस् वा ' । २ । १ । ३ ॥ स्त्रियां त्विति—अतिजरयेत्यत्र ह्यतिजरशब्दात् प्रवृत्तेनाऽऽप्प्रत्ययेन जराशब्दो व्यवधीयते । जारः, जारेयः जराया अयं "तस्येदम्" इत्यण्, जराया अपत्यं "द्विस्वरादनद्याः" एयण् ।

' अपोद्भे ' । २ । १ । ४ ॥ स्वद्भ्यां, शोभना अतिशयिता वा आपो ययोरिति विग्रहे "पूजास्वतेः प्राक्टात्" इति समासान्तप्रतिषेधे भ्यामि सत्यपि तदन्तग्रहणे "निर्दिश्यमानस्याऽऽदेशा भवन्ती"त्यप एवाऽऽदेशः । अब्भक्ष इति "शीलिकामि०" इति णः ।

' आ रायो व्यञ्जने ' । २ । १ । ५ ॥ आकारस्यैकवर्णत्वात् "षष्ठ्यान्तस्य" इति, रैशब्दस्यैव भवति । स्भीत्येव सिद्ध इति—आमि तु रायमतिक्रान्तानि यानि तेषां "क्लीबे" इत्यनेन ह्रस्वत्वे सति "सन्निपात लक्षण" न्यायादिकाररूपं ह्रस्वमाश्रित्य समुत्पन्नो नाम् तद्विघाताय नोत्सहते । तर्हि "दीर्घो नामि" इत्यपि न प्राप्नोति ?

१ २-१-२ । २ १-४-६१ । ३ ७-३-१७५ । ४ ७-३-१७१ । ५ उणा० २६ । ६ ६-३-१६० । ७ ६-१-७१ । ८ ७-३-७२ । ९ ५-१-७३ । १० ७-४-१०६ । ११ २-४-९७ ।

सत्यम्, तदाऽनित्यत्वादस्य न्यायस्य भवत्येव दीर्घः, "न्याया हि स्थविरयष्टिन्यायेन प्रवर्तन्ते"। उत्तरार्थमिति–यद्यैव तत्रैव क्रियतां किमत्राऽनेन सन्देहास्पदेन ? नैवम्, केचित् सन्निपातन्यायमनित्यमाश्रित्याऽतितराणामित्यत्राऽऽकारमपीच्छन्ति, तन्मतसंग्रहार्थं व्यञ्जनग्रहणमिहाऽर्थमपि तेन स्वमतेऽपि सम्मतम्।

'युष्मदस्मदोः'। २। १। ६॥ अत्राऽविवक्षितार्थयोर्युष्मदस्मदोरेतावनुकरणे इति त्यदादिकार्यमेकशेषः, "टाङ्योसि०" इत्यनेन युष्मदस्मदादिकार्यं च यत्वादि न प्रवर्तते। अतित्वामिति–नामाधिकारात्तदन्तप्रतिपत्तौ तदन्तमुदाहरति, युष्मयतेरिति–युवां युष्मान्वेति विधेयं न तु त्वामिति, णिजि सति त्वमौ स्याताम्। अमौभ्यांस्त्विति–अयमर्थः–द्वयोरन्यत्र सावकाशत्वात् शब्दान्तरप्रवृत्त्या चाऽनित्यत्वात्परत्वात् पूर्वं त्वमाद्यादेश इति। प्रथममात्वे तु सति मन्तत्वाभावात्त्वमादयो न स्युः। णिज्वाक्यावस्थायां यद्बहुवचनं तत्क्विब्वृत्तौ गौणं बभूवेति त्वमौ भवतः। व्यञ्जन इत्येवेति–ननु व्यञ्जनग्रहणं विनाऽपि युष्मभ्यमस्मभ्यमित्यादयः प्रयोगा अनेनाऽऽत्वे कृते "लुगातोऽनापः"[1] इत्याकारलोपे सिध्यन्ति, किं व्यञ्जनाधिकारेण ? सत्यम्, सूत्रस्य व्यक्त्या प्रवर्तनादात्वे कृते लुबादिकं न प्रवर्तत इति व्यञ्जनग्रहणम्। तथा व्यञ्जनाभावे युष्माकं युपाकमित्यादौ अनेन सूत्रेणाऽऽकार एव स्यात्, न तु "[2]मोर्वा" इति मकारलोपः। युष्मभ्यमिति–ननु लुगस्येत्यलोपे मोर्वा कथं न ? उच्यते–स्वरस्य स्थानित्वात्। तर्हि युष्मशब्दाद् भ्यसोऽभ्यमादेशे लुग् न प्राप्नोति ? नैवम्, प्रत्यासत्त्या यस्मिन् प्रत्यये लुग्भवति, तस्मिन्नेव प्रत्यये पूर्वस्य यदि कार्यं भवति तदा स्थानित्वमत्र तु प्रत्ययान्तरे लुग् अतः स्थानित्वाभावः। मोर्वेति सूत्रस्याऽनवकाशत्वाद्वा स्थानित्वाभावः।

'टाङ्योसि यः'। २। १। ७॥ ओश्च ओश्च ओसौ "स्यादावसंख्येयः"[3] इत्येकशेषः, ततष्टाश्च ङिश्च ओसौ चेति कार्यं, तेन षष्ठीसप्तम्योरपि ग्रहः, अन्यथा ङिना साहचर्यात् सप्तम्या एव ओसो ग्रहणं स्यात्। अत्र ओसग्रहणाभावेऽपि "[4]शेषे लुग्" इति दलोपे "एद्बहुस्भोसि"[5] इत्यनेन एत्वे, "एदैतोऽयाय्"[6] इत्ययादेशे चाऽतियुवयोरित्यादि सिध्यति, सत्यम्; णिचि अन्त्यस्वरादिलोपे युवावादेशे "शेषे लुग्" इत्यकारलोपेऽकारस्याऽभावात्, युव्योरित्यादौ यत्वं न सिध्यतीति ओसग्रहणम्।

'शेषे लुक्'। २। १। ८॥ शेषग्रहणाभावे टाङ्योसीत्यधिकार आगच्छेत्। न च वाच्यं टाङ्योसीत्यधिकारो यदाऽभिप्रेतः स्यात्तदा टाङ्योसि यलुकावित्ये-

---

१ २-१-१०७। २ २-१-९। ३ ३-१-११९। ४ २-१-८। ५ १-४-४। ६ १-२-२३।

कमेव कुर्यात् । यतो लुगित्युत्तरार्थं पृथक्करणं कर्तव्यमेव, अन्यथा टाङ्योसि यलु-
कावित्यधिकारोऽग्रेतनेऽपि सूत्रे गच्छेत् इत्याशङ्कायां शेषग्रहणम् । स्त्रियामाप् न
भवतीति–केवलयोर्युष्मदस्मदोर्नन्ता संख्येति लक्षणेनाऽलिङ्गत्वभणनात् । अथ बहुव्रीहौ
तत्पुरुषे चाऽन्यपदार्थादिप्रधानत्वेन युष्मदन्तस्य स्त्रीत्वे आप् कथं न भवति? उच्यते–
5 सन्निपातलक्षणन्यायाद्लोपोऽभ्यमः सन्निधानव्यवधाने न निमित्तम् । तर्हि युष्म-
भ्यमित्यादिषु केवलेष्वप्यत एव न्यायादाप् न भविष्यति । किं लिङ्गानुशासनेऽनयो-
र्वर्जनेन ? सत्यम्, "न्यायानां स्थविरयष्टिन्यायेन प्रवृत्ते" विंश्वासः कर्तुमशक्यः ।

'मोर्वा'। २ । १ । ९ ॥ ननु युवामाचष्टे इति वाक्ये णिचि, क्विपि स्यादौ
युवादेशः कथं न भवति ? सत्यम्, यदा युष्मदस्मदी द्वित्वे तदा स्यादिर्न, यदा तु
10 स्यादिस्तदा न द्वित्वे इति न युवादेशः । शब्दान्तरेति–प्राक् मकारस्य पश्चात् अकारस्य
यप्राप्तिः । अथवा पूर्वं युष्मिति प्रकृतेः पश्चाच्चेति प्रकृतेः । अत्राऽसर्वादित्वसम्बन्धित्वा-
दिति–युष्मदस्मदी त्वमहंवाचके सर्वादिगणमध्ये दृश्येते । अत्र तु त्वां मां वक्ति यस्त-
द्वाचके इति न सर्वादिनी । अथ क्विबर्थमिति–क्विबन्तस्य युष्मच्छब्दस्य योऽर्थस्तदर्थं
क्विप्सहिता युष्मदस्मद्रूपा प्रकृतिरेवाऽऽह–न हि प्रकृतिं विना क्विब्भवति । स्मिन्नादेश
15 इति तेन त्वस्मिन् मस्मिन् सन्निपातन्यायस्याऽनित्यत्वे त्वास्मिन् मास्मिन्नित्यपि ।
सिजसिति–एतेन प्रक्रियागौरवं निरस्तं भवति, अन्यथाऽनेन मकारलोपेऽपि सिप्रत्य
यादिना सह त्वमहमाद्यादेशे सर्वेऽपि प्रयोगाः सिध्यन्ति ।

'मन्तस्य युवावौ द्वयोः'। २ । १ । १० ॥ द्वित्व इति द्वयोरिति, द्रव्य-
प्रधानत्वात् सामान्यवाचिनाऽपि युष्मदस्मदर्थ एव द्वित्वविशिष्टो निर्दिश्यते, अर्थान्तरे
20 तयोर्वृत्त्यभावात्तयोरेव विशेषणम् । स्यादिविशेषणत्वे तु गुणाभिधायित्वात् स्यादेर्गुण-
प्रधानतया द्वित्वे इति भावप्रत्ययान्तेन निर्दिश्येत । यथा "द्वित्वे वाम्नौ" इति
युवावादेशयोः सस्वरत्वे णिगि क्विपि तल्लोपे च युव्योराव्योरित्यादिषु फलं दृश्यम् ।
एवमुत्तरसूत्रे त्व्यि म्यि, परत्वात्त्वमहमादय इति । यदि परत्वेन त्वमहमादयः करि-
ष्यन्ते, तर्हि "परादन्तरङ्गं बलीय" इति न्यायाद् युवावादय एवाऽऽदेशाः प्राप्स्यन्ति,
25 न त्वमहमादयः, सत्यम्; परत्वाद्विशेषविहितत्वेन प्रकृष्टत्वादित्यर्थः ।

'त्वमौ प्रत्ययोत्तरपदे चैकस्मिन्'। २ । १ । ११ ॥ त्वदयतीति, अत्र
नित्यत्वादन्त्यस्वरादिलोपात् प्रागेव त्वमादेशौ पश्चादपि अन्त्यस्वरादिलोपो न लोपा-
त् स्वरादेश इति न्यायात्, लुगस्येत्येव प्रवर्तते । तस्मिन्नपि कृते न, "नैकस्वरस्य"

---

१ २–१–२२ । २ ७–४–४४ ।

इति निषेधात्, " ञ्णिति " इत्यनेन वृद्धिरपि न अधातुत्वात् । कश्चिच्चिति–शब्दान्तरप्रवृत्त्या द्वयोरनित्यत्वादन्यत्र सावकाशत्वात् परत्वादन्त्यस्वरादिलोप इत्यर्थः । अकारस्य वृद्धाविति–अतो " ञ्णिति " इत्यनेन सूत्रेण । ननु प्रत्ययोत्तरपदग्रहणं किमर्थं स्यादावित्येव सिद्धत्वात् । न च परत्वाद् " ऐकार्थ्ये " इति स्यादेर्लुपि प्रत्ययलोप इति न्यायस्य प्रतिषेधात् स्यादेरभाव इति वाच्यम्, यत ऐकार्थ्ये लुब् उच्यते– 5
ऐकार्थ्यं च प्रकृतिप्रत्ययौ पूर्वोत्तरपदे चाऽऽश्रित्य भवतीति तस्य बहिरङ्गत्वात्तदाश्रया लुबपि बहिरङ्गा । विभक्तिमात्रमाश्रित्य विधानात् त्वमादेशयोरन्तरङ्गत्वं, ततो'ऽसिद्धं बहिरङ्गमन्तरङ्गे' इति न्यायान्नित्यादप्यन्तरङ्गस्य बलीयस्त्वात् त्वमादेशयोः कर्तव्ययोर्लुपोऽसिद्धत्वात्ताभ्यामेव पूर्वं प्रवर्तितव्यं ततो लुबिति न किञ्चिदनिष्टमित्याह–अन्तरङ्गत्वादिति । ननु यदा स्यादिग्रहणमेव क्रियते न प्रत्ययोत्तरपदग्रहणं तदा त्वदीयो 10
मदीयस्त्वत्पुत्रो मत्पुत्र इत्यादौ प्रागेव परत्वाद् ङसा सह तव ममादेशौ प्राप्नुतस्तत्कथमन्तरङ्गत्वात्स्यादिद्वारेणैव सिध्यतीति, सत्यम्; यौ त्वमौ भवतस्तावल्पाश्रितौ यतः प्रकृतिमेवाऽऽश्रयतः यौ तु तवममौ तौ प्रकृतेः प्रत्ययस्य च स्थाने भवत इति बह्वाश्रितावित्यन्तरङ्गत्वात्त्वमौ प्रत्यये प्राप्नुत इति स्यादिद्वारेणैव सिध्यतीति । तव ममादेशे तु कर्तव्ये एकस्थानित्वेनाऽन्तरङ्गत्वात् परत्वाच्च ङसो लुबेवेति । 15

**'त्वमहं सिना प्राक् चाकः'** । २ । १ । १२ ॥ सिनेति किमिति–ननु साविति कृते "[3]दीर्घङ्याब्०" इति सेर्लुकि च सर्वे प्रयोगा निष्पद्यन्ते इति, न युष्मदस्मदोरित्यात्वं स्यात् । आदेशविधानसामर्थ्यान्न भविष्यतीति चेत्? सत्यम्, तदाऽऽत्वाभावेऽस्याऽपि सेः शेषत्वं स्यात्; तथा च–" [4]मोर्वा " इति वा लोपः स्यात् पक्षे च चरितार्थता सूत्रस्य स्यादिति । त्वकम् अहकमिति "युष्मदस्मदोऽसोभादि०" इति अक्, 20
पूर्वमकीति निरपेक्षत्वेनाऽन्तरङ्गत्वात् । त्वामादेशे वृद्धाविति–त्वादयतीति वाक्ये कृते क्विप्, त्वाहादेशविधानादिति त्वाहादेशौ न भवत इति शेषः । धातोरेव वृद्धिरिति मते तु त्वदयतीति वाक्यं, ननु तन्मते–त्वं, अहं, यूयं, वयमित्यादयः कथं सिध्यन्तीत्याह–ते हीति । प्रकृतिमात्रस्येति–विभक्तिरहितस्येत्यर्थः । आदेशानिति–तुभ्यमह्यौ ङयि, यूयवयौ जसि, त्वाहौ साविति तुभ्यादीनादेशान् ङेजस्सीनां ङे प्रथम- 25
योरमित्यमादेशं, ङसस्तु युष्मदस्मद्भ्यां ङसोसित्यकारं चेच्छन्तीत्यर्थः । स्वमते तु त्वमहमित्येव भवति ।

**'यूयं वयं जसा'** । २ । १ । १३ ॥ प्रियस्त्वं प्रियौ युवामिति वाक्यम् । एकत्वद्वित्वयोर्युष्मदस्मदोर्वर्तमानत्वात् । " त्वमौ [5]प्रत्ययोत्तरपदे च० " इति " म[6]न्तस्य

---

१ ४–३–५० । २ ३–२–८ । ३ १–४–४५ । ४ २–१–९ । ५ ७–३–३० । ६ २–१–११ । ७ २–१–१० ।

युवावौ० " इति च त्वमाद्यादेशानन्यत्र सावकाशान् बाधित्वा यूयं वयमित्यत्र सावकाशौ यूयं वयमादेशौ परत्वादुभयप्राप्तौ सत्यां तावेव भवतः। यूयकमित्यादौ कुत्सिताद्यर्थे "[1] युष्मदस्मदोऽसोभादि० " इत्यक्, एवमुत्तरत्राऽपि ।

'तव मम ङसा'। २। १। १५॥ कथं तवता ममता? सत्यम्, स्याद्यन्तप्रतिरूपकाण्यव्ययान्येतानीति शब्दान्तरत्वात् सिद्धम् ।

'अमौ म'। २। १। १६॥ औश्च औश्च आवौ "[2] स्योदावसंख्येयः" इत्येकशेषः, ततोऽम् च आवौ च अमौ तस्य अमौ; लुप्तषष्ठ्येकवचनान्तं पदम्। एकशेषाभावे तु अमा साहचर्याद्द्वितीयासत्कस्यैव ग्रहणं स्यात्। ननु अम् ग्रहणं किमर्थं यावता त्वामिति निष्पाद्यम्। तच्च युष्मदोऽमि निमित्ते त्वादेशे "[3]शेषे लुग्" इति दस्य लुकि "[4]समानादमोऽतः" इत्यमोऽस्य लुकि "[5]युष्मदस्मदोः" इत्यन्तस्याऽऽत्वे च सिद्धं? नैवम्, अन्तरङ्गेऽन्तस्याऽऽत्वे कार्ये वहिरङ्गोऽमोऽकारस्य लुगसिद्ध इति ।

'शसो नः'। २। १। १७॥ ननु युष्मानित्यादौ द्वयं प्राप्नोति। "[3]शेषे० " इत्यन्तलोपोऽनेन नकारश्च तत्र कृताकृतप्रसङ्गित्वेन नकारस्य नित्यत्वाल्लोपस्य च कृते नकारे शेषत्वाभावादप्रसङ्गित्वेनाऽनित्यत्वात् पूर्वं नकार एव भवतीति। यद्येवं किमनेन "[6]शसोऽता०" इत्यनेनैव सिद्धत्वात्, नैवम्; अलिङ्गे युष्मदस्मदी इति पुंस्त्वाभावान्नकारो न सिध्यतीति वचनम्। बहुव्रीह्यादावभ्युपगमे वा लिङ्गस्य स्त्रीनपुंसकार्थं प्रिययुष्मान् ब्राह्मणीः, प्रिययुष्मान् कुलानीत्यादि ।

'अभ्यम् भ्यसः'। २। १। १८॥ कार्यिणः प्रथमं निर्देशे प्राप्ते कार्यस्य प्रथममुपादानं प्रत्यासत्तिसूचनार्थम्। पाठापेक्षया चतुर्थ्येव प्रत्यासन्नेति तस्या एवाऽऽदेशः। यद्वा "[7]ङसेश्चाद्" इत्यत्र चकारो भ्यसोऽनुकर्षणार्थः। स च पञ्चमीसाहचर्यात् पञ्चमीसम्बन्ध्येव गृह्यत इति पारिशेष्यादिह चतुर्थीभ्यसो ग्रहणमित्याह–चतुर्थीबहुवचनस्येति ।

'ङसेश्चाद्'। २। १। १९॥ चकारेण भ्यसोऽनुकर्षणेऽपि भ्यसो ङसेश्चैकवचनान्तनिर्देशेन द्विवचनान्तनिर्दिष्टाभ्यां युष्मदस्मद्भ्यां सह वैषम्याद्यथासंख्याभाव इति ।

'आम आकम्'। २। १। २०॥ आमः कमिति कृते "[5]युष्मदस्मदोः" इत्यात्वे कृते युष्माकमित्यादि सिध्यति किमाकारकरणेनेत्याह–आकमित्यादि ।

---

१ ७–३–३०। २ ३–१–११९। ३ २–१–८। ४ १–४–४६। ५ २–१–६। ६ १–४–४९। ७ २–१–१९।

'पदाद्युग्विभक्त्यैकवाक्ये वस्नसौ बहुत्वे'। २। १। २१॥ पद्यते-गम्यते कर्तृकर्मविशिष्टोऽर्थोऽनेनेति पदम्, विभक्त्या सह सामानाधिकरण्यार्थम्। युनक्तीति युङ् इति, कर्तरि क्विप्, यद्वा योजनं युङ् सममविषमं संख्यास्थानम्; युग्ममिति यत् संख्यायते तेन परिच्छिन्नं वस्त्वपि युगित्युच्यते। ततः समसंख्या द्वितीयाचतुर्थीषष्ठीरूपा विभक्तयो युग्शब्देनोच्यन्त इति। धर्मो वो रक्षत्विति-अत्र पदादेशः पदवदिति वस् इत्यस्य पदत्वे "सोरुः"[1] रुत्वं बभूव। तथा "शसो नः"[2] "शेषे लुग्"[3] इत्यादीनि बाधित्वा नित्यत्वान्निरवकाशत्वाच्च वस्नसावेव भवत इति। एकवाक्य इति-एकं च तद्वाक्यं चेति "पूर्वकाल०"[4] इत्यनेन समासे एकस्य पूर्वनिपातः ततो विशेषणस्य व्यवच्छेदकत्वात् 'सर्वं वाक्यं सावधारणं भवतीति' न्यायाच्च एकस्मिन् वाक्य एव भवति, न तु पदे इति। अतियुष्मान् पश्यतीत्यादौ तु यथैकस्मिन् वाक्ये तथा वाक्यविभक्त्यपेक्षया एकस्मिन् पदेऽपि युष्मदस्मदी स्त इति। तथैकस्मिन्नेव वाक्य इत्यवधारणाद्यदि पदं युष्मदस्मदी चैकस्मिन्नेव वाक्ये भवतो, न तु वाक्यान्तरे; तदा सामर्थ्याभावादेवेति--परस्परव्यपेक्षालक्षणसम्बन्धाभावादेवेत्यर्थः। किमेकवाक्यग्रहणेनेति-किं सविशेषणेन वाक्यग्रहणेन वाक्यग्रहणमेव पदव्यवच्छेदाय कर्तुं युक्तं किमेकग्रहणेनेत्यर्थः। युक्तयुक्तादिति-युक्तेन युष्मदस्मत्सम्बन्धेन पित्रादिना यद्युक्तमिति स्मेत्यादि तस्मादित्यर्थः। इति स्मेत्यादि-अत्रेतिस्मेत्यादिपदं साक्षाद्युष्मदादिकं नाऽपेक्षते, किं तर्हि पित्रादिकमिति? एकवाक्यग्रहणात् सामर्थ्याभावेऽप्येकवाक्ये पदात् परस्य युष्मदादेरादेशः सिद्धः। तथा युग्बहुत्वे इति, अप्युक्ते द्वितीयाचतुर्थीषष्ठीबहुवचनानि लब्धानि। विभक्तिग्रहणं तूत्तरार्थं इह च क्लिष्टतापरिहारार्थमिति।

'द्वित्वे वाम्नौ' २। १। २२॥ द्वित्व इति भावप्रत्ययान्तेन संख्या निर्दिश्यते। संख्यायां च विभक्तिर्वर्तते न युष्मदस्मदी द्रव्यवृत्तित्वात् तयोरिति, द्वित्व इति विभक्तेरेव विशेषणमित्याह-द्वित्वविषयेति।

'ङेङसा तेमे' २। १। २३॥ दृष्टपूर्वेति-पूर्वं दृष्टः "नाम्नाम्ना०"[5] इति सः स्त्री चेत्।

'असदिवामन्त्र्यं पूर्वम्' २। १। २५॥ योऽर्थः स्वेन धर्मेण प्रसिद्धो धर्मान्तरसम्बन्धं प्रत्यभिमुखीक्रियते स आमन्त्र्यः। यथा देवदत्तो देवदत्तत्वेन प्रसिद्धो धर्मान्तरेऽभिमुखीक्रियते यथा पच पठेत्यादि, तत्राऽर्थे कार्यासम्भवादुपचा-

---

१ ३-१-७२। २ २-१-१७। ३ २-१-८। ४ ३-१-९७। ५ ३-१-१८।

रादामन्त्र्याभिधायि पदमामन्त्र्यं विज्ञायत इति। तथोत्तरत्र नित्यग्रहणादस्मिन् सूत्रे कथं विकल्पो न लभ्यत इति? उच्यते–नित्यं विधास्यमानत्वादिति भणनात्, यत्रैव वस्नसादयो विधीयन्ते तत्रैव विकल्प उपतिष्ठते न वस्नसादीनां निषेधे इति। अथवा यद्यत्राऽपि सूत्रे विकल्पः स्यात्तदा किमेतत्सूत्रकरणेन? यतोऽसदिवाऽऽमन्त्र्यं
5 पूर्वमिति कृतेऽपि वस्नसादयो विकल्प्यन्ते ते च "पदाद्युग्विभक्त्यै०" इत्यनेनैव विकल्पेन भविष्यन्ति। श्रवणं यथा स्यादिति–अन्यथा लोपः स्यात्, "ते लुग्वा" इत्यनेनैव। पादादिलक्षण इति–मुनिपुङ्गवा इत्यस्य पदस्याऽसत्त्वे पादस्याऽभावादित्यर्थः। मुनिषु पुङ्गवा इति सिंहादित्वात् समासः कर्मधारयो वा, व्यवहितेऽपीति–यथा मथुरायाः पूर्वं पाटलीपुत्रमिति। पूर्वशब्दो वर्तत इति–अयमर्थो यद्यव्यवहित-
10 स्यैव पूर्वस्याऽनेनाऽसद्भावो विधीयेत न व्यवहितस्य तदा पूर्वग्रहणमपनीय असदिवाऽऽमन्त्र्यादित्येव क्रियेत यतः पूर्वस्याऽविद्यमानवद्भावे वस्नसाद्यभावः प्रयोजनं, तच्चेत्थमपि कृते सिध्यति। तथोत्तरसूत्रेऽप्येतदानुगुण्येन जस्विशेष्यादित्येवं विधीयेतेति।

'जस्विशेष्यं वाऽऽमन्त्र्ये'। २। १। २६॥ तदतद्विषयमिति–शब्दप्रधानत्वात् स्याद्वादाश्रयणेन शब्दार्थयोरैक्याद्वाऽर्थाभावे त्यदादित्वाभावात् तच्छब्दा-
15 वयवयोगात् समुदायोऽपि तद् इत्यादि कृत्वा कर्मधारयकरणात् बाहुलकाद्वा नैकशेषः। तच्च अतच्च तदतदी इति द्वन्द्वे "औद्धेर" इति न, "नै सर्वादिः" इति निषेधात्। सामर्थ्यात्तद्विशेषणभूत इति–विशेष्यस्य विशेषणाकाङ्क्षिण एकवाक्योपात्तत्वेन सामर्थ्यात् सन्निहितत्वाद्विशेष्यत्वनिमित्तमामन्त्र्य इत्येतदेव विशेषणं विज्ञायत इति। जिनाः शरण्या–इत्यत्र शरणमिति सामान्यकर्म युष्मानिति विशेषकर्म। सिद्धाः शरण्या
20 युष्मानथो शरणं प्रपद्ये इत्यादौ "नित्यमन्वादेशे" इति वस्नसौ प्राप्तावनेन निषिध्येते, जसिति किं साधो! सुविहितेति–अत्र द्वयोरपि पदयोः "असदिवा०" इत्यसत्त्वे प्राप्ते "नाऽन्यत्" इत्यनेन साधो! इत्यस्याऽसत्त्वाभावः। "नित्यमन्वादेशे" इत्यनेन च वस्नसौ। शरण्याः साधवो युष्मानिति–अत्र द्वयोरपि "असदिवा०" इत्यसद्भावः। आचार्या युष्मान् शरण्या इति–अत्राऽऽमन्त्र्यस्य विशेष्यस्य व्यवहितत्वेन
25 परत्रोपश्लेषाभावान्न भवति। आचार्या उपाध्याया इति–अत्र भिन्नाधिकरणयोर्न पूर्वं विशेष्यं न परं विशेषणमिति सामर्थ्यात्तद्विशेषणभूत इति भणनान्न भवति।

'नाऽन्यत्'। २। १। २७॥ जस्विशेष्यमित्यस्य प्रधानतयाऽन्यदिति सम्बन्धेनेत्याह–जसिति।

---

१ २-१-२१। २ ३-२-१०८। ३ २-१-४१। ४ | ६ २-१-३१।

'पादाद्योः' । २ । १ । २८ ॥ मात्राश्च अक्षराणि च मात्राक्षराणि, नियतपरिमाणानि च तानि मात्राक्षराणि च तेषां पिण्डः यद्वा मात्राक्षराणां पिण्डः, नियतपरिमाणश्चाऽसौ मात्राक्षरपिण्डश्चेति । देशनाकाल इति–देशनं देशस्तं करोति "णिंब्बहुलं ना०" देश्यत इति "णिं वेत्त्यास०" इत्यनः ।

'चाऽहहवैवयोगे' । २ । १ । २९ ॥ योग इति–चादिद्योत्यसमुच्चयाद्यर्थस्य साक्षाद्युष्मदस्मदर्थसम्बन्धे इत्यर्थः । ज्ञानं च शीलं चेत्यत्र चशब्देन ज्ञानशीलयोः सद्वितीयता द्योत्यते, न तु युष्मदस्मदर्थयोरिति योगग्रहणमिति । अयमर्थः–योगग्रहणं विना अर्थात् प्रकरणाद्वा चादिषु गम्यमानेष्वपि स्यादिति ।

'दृश्यर्थैश्चिन्तायाम्' । २ । १ । ३० ॥ अत्राऽर्थे स्वरूपे वा किः । तत्र यदाऽर्थे तदा दृशिरर्थो येषाम्, स्वरूपे तु दृशेरर्थो दर्शनमालोचनं येषां धातूनाम् । जनो वो मन्यत इति नाऽयं दृश्यो, दृश्यर्थो नाम सः यश्चाक्षिसाधने विज्ञाने वर्ततेऽतो न निषेध इति ।

'नित्यमन्वादेशे' । २ । १ । ३१ ॥ नन्वत्र निषेधाधिकारे कथमिदं विधायकमभूत् ? सत्यम्, नित्यं निषेधाधिकारे यन्नित्यग्रहणं तदेवं बोधयति विधानसूत्रमिदमिति । न चेदं वाच्यमत्र नित्यग्रहणाभावे "पदात्०" इति सूत्रे कथं विकल्प इति । तदा हि तत्रैव नवेति कुर्यादिति । कस्यचिद्द्रव्यस्य काञ्चित्क्रियां जातिं गुणं द्रव्यं वा प्रतिपादयितुं कथितस्य तेन तदितरेण वा शब्देन पौनरुक्त्यं मा भूदिति विशेषान्तरं प्रतिपादयितुं पुनः कथनमन्वादेश इति यावत्, तेनाऽन्येन वेति–युष्मदस्मच्छब्दाभ्यां कृत्वा विनीतत्वादिकं विधाय पुनर्युष्मदस्मद्भ्यां गुरुमाननादिकं विधीयते । अत्र सूत्रे तेनैव शब्देन कथनमस्ति, अन्येन तु कथनमुत्तरत्रैव ज्ञेयम् । पुनरन्यद्विधातुमितिपुनः शब्दोपादानात्तस्यैव कथनं यदि भवति तदैवाऽन्वादेशः । नह्यन्यस्य कथने पुनः शब्दार्थो घटते, तेन यत्राऽन्यस्य कथनं तत्र नाऽन्वादेशः । ततश्च जिनदत्तमध्यापय एतं च गुरुदत्तमित्यत्र तस्यैव जिनदत्तस्य पुनः कथनाभावादन्वादेशाभावे "त्यदामेन०" इत्यनेनैनदादेशो न भवति । यूयं विनीता इति–अन्वादेशदर्शनार्थं वाक्यान्तरमिदमुपदर्शितम्, न तूत्तरपदसम्बन्धं बोद्धव्यम्, तेन तदित्यस्य पदस्य सपूर्वत्वाभावादुत्तरेण न विकल्पः । तदित्यव्ययं तस्मादित्यर्थे । विनीततामात्रमत्राऽनूद्यते नाऽपूर्वं किञ्चिद्विधीयते । यूयं विनीता इति प्रथमादेशः, उत्तरस्याऽन्वादेशख्यापनार्थम् । विनीता इति विनीतत्वं प्रदिपादयितुं यूयमित्युक्तम् । तद्वो गुरवो मानयन्ति इति–

---

१ ३-४-४२ । २ ५-३-१११ । ३ २-१-२१ । ४ २-१-३३ ।

अन्वादेशः । यूयमिति यत्प्रथममुक्तं तस्यैव च गुरवो मानयन्तीति प्रतिपादयितुं द्वितीयं कथनं तत्र वसादेशः । एवं सर्वत्र ।

'सपूर्वात् प्रथमान्ताद्वा' । २ । १ । ३२ ॥ सहशब्दो विद्यमानवचनः । पूर्वशब्दो व्यवस्थार्थः । सह विद्यमानं पूर्वपदं यस्माद् "एकार्थं चा०" इति समासः । 5 प्रथमान्ताद्वेति–प्रथमायाः प्रत्ययत्वात् प्रत्ययः प्रकृत्यादेरित्यादिनाऽन्तस्य लब्धत्वादन्तग्रहणं न्यायानुवादार्थमिति । धनवानसीत्यादि–अत्राऽन्येन कथनमन्वादेशः । यतो धनवानसीत्यस्मिन्नन्वादेशदर्शके वाक्यान्तरे प्रथममसीत्युक्तम् । अथो ग्रामे कम्बलस्ते स्वमित्यत्र तु ते इत्युक्तम् । गम्येऽप्यन्वादेशे भवतीति–यूयं धनवन्त इत्यादिपदोपादाने हि साक्षादन्वादेशो भवति । अथो इत्यादेस्तु द्योतकमात्रस्योपादाने 10 गम्य एव । माणवक ! जटिलक ! ते स्वमथो इत्यादौ तु विशेषणपदस्य जटिलक इत्यस्य "असदिवा०" इत्यसत्त्वं, माणवक इत्यस्य तु विशेष्यपदस्य "असदिवाऽऽमन्त्र्यं०" इति नाऽसद्वत्त्वं "नाऽन्यत्" इति निषेधात् ।

'त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते' । २ । १ ३३ ॥ त्यच्च त्यदश्च त्यदः । "त्यदादिः" इत्येकशेषः । "औद्वेरः" इति तु न भवति, सूत्रत्वात् । शब्दार्थयोर्भेद- 15 विवक्षायां निरर्थकत्वेन त्यदादित्वाभावाद्वा । एताभ्यां रात्रिरधीतेति–अत्राऽविवक्षितकर्मण इङ्धातोर्योगे रात्रिलक्षणस्याऽऽधारस्य "कालाध्वभावदेशं०" इति कालस्य कर्मत्वे ततश्चाऽधीतेत्यत्र कर्मणि क्ते सति कर्मण उक्तत्वात् रात्रिशब्दात्प्रथमा । यदि वा रात्रिसहचरितमध्ययनमपि उपचारात् रात्रिशब्देनोच्यते । ततः साऽधीतेति । अर्थात्प्रकरणाद्वेति–प्रथमादेशसापेक्षत्वादन्वादेशस्य । तत्राऽसामर्थ्यात् ऋद्धस्य राज्ञः 20 पुरुष इत्यादिवत्समासाभावः । सामर्थ्यात् समासश्चेत्पूर्वकथनसापेक्षस्याऽन्वादेशस्याऽभाव इति परस्परविरोधादुभयाभावादन्वादेशाभाव इत्याह–अर्थादित्यादि । अर्थो वा तादृशो भवति प्रकरणं वा येन ताभ्यामेवाऽपेक्ष्यस्य प्रथमादेशस्य निश्चितत्वाद्वृत्तावेवाऽन्तर्भावान्निरपेक्षत्वात्समासो भवति । यथा देवदत्तस्य गुरुकुलम्, वस्तुमात्रनिर्देशं कृत्वेति–अनुवादमात्रं कृत्वेत्यर्थः । तत्राऽपि न भवति–यथा एतमातं 25 ङितमित्यत्र ।

'इदमः' २ । १ । ३४ ॥ "टौस्यनः" इति, "दोर्मः०" इति च प्राप्तेऽयमपवादः । मत्पुत्रकाविति–कृत्रिमौ मत्पुत्रौ न तु पुत्राविति कः । अनुकम्प्यौ वा

१ ३-१-२२ । २ २-१-२५ । ३ २-१-२७ । ४ ३-१-१२० । ५ २-१-४१ ।
६ २-२-२३ । ७ २-१-३७ । ८ २-१-३९ ।

मत्पुत्रौ "अनुकम्पा०" इतिकः(कप्), शीलवन्ताविमकौ तिष्ठत इति। अत्राऽपि पूर्ववद्व-क्ष्यमानोऽन्वादेशः। अथो इत्यादि तु द्योतकत्वात् क्वाऽपि प्रयुज्यते क्वाऽपि न। अयं दण्डो हराऽनेनेति-अत्र ह्यनुवादमात्रमेव न तु निभाल्यतामित्यादि विधीयते। अथो एनं परिवर्तयेत्येव भवतीति-न तु कुण्डशब्दस्य नपुंसकस्य विशेषणत्वे एनदिति।

'अक्व्यञ्जने'। २। १। ३५॥ तकार उच्चारणार्थः, अन्यथा सौ "सोरुः" इत्यादिकृते ओ इत्यनिष्टं स्यात्। प्रथमान्ततयेह विपरिणम्यत इति-अत एव कार्यी निमित्तं कार्यमिति निर्देशक्रमे प्राप्ते निमित्तात्पूर्वं कार्यनिर्देशः। उत्तरत्राऽनगिति प्रथ-मान्तविशेषणोपादानाद्वा। शैक्षकाभ्यामिति-शिक्षेते इति शिक्षकौ, ततः स्वार्थे प्रज्ञाद्यण्। शिक्षणं शिक्षा "क्तेटो०" इत्यप्रत्ययः शिक्षां वित्तोऽधीयाते वा "पदक्रमशिक्षा०" इत्य-कः। ततः शिक्षकावेव प्रज्ञाद्यण्। अथवा शिक्षायां भवौ "शिक्षादेश्चाऽण्" ततो यावादि-त्वात्कः। अथ सावपि व्यञ्जनत्वात्कथं नाऽयमादेश इत्याह-सौ तु परत्वादिति। साक एव विधिरिति-विश्रान्तादावन्वादेशे साको निरकश्चाऽदादेशविधानादिहैवं व्याख्या। साको यद्यादेशस्तदाऽन्वादेश एवेति। तेन निरकोऽन्वादेशेऽनन्वादेशे चोत्तरेणाऽदादेशः सिद्धः।

'अनक्'। २। १। ३६॥ पृथग्योगादिति-पृथग्योगारम्भादिति भावः, अन्यथा साकोऽप्यनकोऽप्यन्वादेशे पूर्वसूत्रेणैव सामान्यविधानेन सिद्धत्वात् सूत्रारम्भ-वैयर्थ्यमिति। अन्वादेशनिवृत्तौ तत्सम्बद्धमवृत्त्यन्त इति च निवृत्तम्। अत्र पूर्वोत्तरयो-रिति, ननु परमाभ्यामित्यादौ परादप्यदादेशात्समासे सति स्याद्युत्पत्तिसापेक्षत्वेन बहिरङ्गादन्तरङ्गेऽवर्णस्येत्वे कृते इदंरूपाभावाददादेशाभावः प्राप्नोतीत्याह-अत्रेति। किञ्च परमपदसम्बन्धिनाऽकारेण सह एत्वलक्षणः सन्धिः प्रथममेव क्रियते तदोभयोः स्थाने यः समुत्पद्यते स लभते, अन्यतरव्यपदेशमिति न्यायाद्यदा एकारस्य इदम् शब्दसम्बन्धिता तदा एकारेण सह इदमोऽत्वं स्यात्ततः पूर्वस्य व्यञ्जनान्ततायामनिष्ट-रूपापत्तिः। यदा तु एत्वस्य इदं सम्बन्धिता न भवति तदैकारस्य स्थितिः स्यादित्यु-भयथाऽप्यनिष्टापत्तिः। एतच्चेति-कथं आग्नेन्द्रमित्यत्र प्रयोगे आकारादिन्द्रवरुणस्थ-स्य स्वरस्य वृद्धिर्न भवतीत्युक्तं, ततश्च यदि पूर्वमेव सन्धिकार्यं स्यात्तदा निषेधोऽनेन व्यर्थ एवेत्यर्थः।

'अयमियं पुंस्त्रियोः सौ'। २। १। ३८॥ पूर्ववदलौकिको निर्देशः। लुप्तप्रथमाद्विवचनान्तं पदम्। पुंस्त्रियोरिति किं? पुंसि इयं स्त्रियां अयं मा भूत्। ननु कथमिदमुक्तं यावता नपुंसकेऽयमियमादेशनिवृत्त्यर्थं पुंस्त्रियोरिति वचनं स्यात् तत्राऽऽह-नपुंसके तु नित्यत्वादित्यादि।

---

१ ७-३-३४। २ २-१-७२। ३ प्रज्ञादिभ्योऽण् ७-२-१६५। ४ ५-३-१०६। ५ ६-२-१२६। ६ ६-३-१४८।

'किमः कस्तसादौ च'। २। १। ४०॥ नन्वत्र तसादाविति किमर्थं तसि तावत् "इतोऽतः कुतः" इति निपातनं वक्ष्यते ? सत्यम्, उत्तरार्थमिदम्। अथवा थमन्तार्थं तसादिग्रहणमन्यथाऽनवधिकं ज्ञायेत, अत्र पूर्वसूत्रात्स्यादावित्यनुवर्तमानेन तसादावित्यस्य समुच्चयार्थश्चकारः। यथा "विशेषणं विशेष्येणै०" इत्यत्र। अत एव 5 "आद्वेर" इत्यत्र स्यादावित्यस्याऽनुवृत्तिरन्यथा चानुकृष्टत्वान्नाऽनुवर्तेत। थमवसाना इति-तेन किन्तरामित्यादौ तदुत्तरेषु न भवति।

'आद्वेरः'। २। १। ४१॥ द्वाविच्छति क्यनि क्विपि तयोर्लोपे सौ "आद्वेर" इत्यनेनेकारस्याऽत्वं न त्यदादिसम्बन्धिस्याद्यभावात् द्वीरित्येव भवति। एक इति-रूपनिर्णयार्थमिदं दर्शितं न तु किञ्चित्फलम्।

10 'तः सौ सः'। २। १। ४२॥ भवतीति 'नामग्रहणे०' इति न्यायादत्राऽपि सत्त्वे भवसीति स्यात्। नपुंसके सेरभावात् पुंलिङ्गे तु सेः स्थानित्वेन सत्वे कृतेऽपि "पैदस्य" इति सलोपे विशेषाभावात् स्त्रियामुदाहृतम्।

'अदसो दः सेस्तु डौः'। २। १। ४३॥ असाविति-सेरनेन डौ "डित्यन्त्यस्वरादेः" इत्येवं कार्यं, न तु "आद्वेरः" इति प्रक्रियालाघवार्थं डित्कार्यस्य सर्वकार्य-15 बाधकत्वेन व्याख्यास्यमानत्वाच्च। हे असौ, हे असकौ विद्वन्निति-अत्र औरित्यपि कृते तदादेशा इति सेः स्थानित्वेऽपि "अदेतः स्यमोः०" इत्यस्य न प्रसङ्गः। सिद्धाराऽमोऽपि लुपि सिद्धायां यदम् ग्रहणं तदन्यस्य स्यादेशस्य लुगतोऽमिति तत्र व्याख्यानात्। कार्याणि न भवन्तीति-एतानि च स्त्रियां प्राप्नुवन्ति। तथाहि-अदस्शब्दात् सौ अनेन औकारे "आद्वेरः" इत्यत्वे आपि औव्यपदेशे औतेत्यस्य सिव्यपदेशे 20 तु आमन्त्र्ये "ऐदापः" इत्यस्य औ, अनामन्त्र्ये तु "दीर्घङ्याब्०" इत्यस्य, अकि तु "अस्यायत्तत्०" इत्यस्य प्राप्तिः। अथ औतेत्यत्र प्रथमाद्वितीयाद्विवचनेनेति व्याख्यानात्कथं सिः स्थानौकारस्य प्राप्तिः ? सत्यम्, अत्रैवं स्थिते तत्रैवं व्याख्यातमिति औतेति प्राप्नोत्येव।

'असुको वाऽकि'। २। १। ४४॥ असुक इति-अत्र परत्वान्नित्यत्वाच्च 25 "अभ्वादेः" इति बाधित्वा सस्य "आद्वेरः", "लिंगस्या०", "सोरुः", केचित्वसुकसिति तन्मते-सम्बोधने स्त्रियां चाऽसुक इति विसर्गान्त एव; स्वमते तु स्त्रियामसुका इति। स्त्रीसम्बोधने तु हे असुके ! इति।

---

१ ७-२-९०। २ ३-१-९६। ३ २-१-८९। ४ २-१-११४। ५ १-४-४२। ६ १-४-४५। ७ २-४-१११। ८ १-४-९०। ९ २-१-४१। १० २-१-११३। ११ ३-१-७३।

'मोऽवर्णस्य'। २। १। ४५॥ नन्वदः कुलमिच्छतीत्यस्मिन् वाक्येऽदस-शब्दान्नपुंसकात् सेर्लुपि "सोरुः"[1] इति रुत्वे, "रोर्यः"[2] इति यत्वे, "स्वरे वा"[3] इति यलोपेऽवर्णान्तत्वान्मत्वप्रसङ्ग इति; सत्यं, पदान्तरापेक्षत्वेन यलोपस्य बहिरङ्गत्वा-त्तदनपेक्षत्वेन मत्वविधेरन्तरङ्गत्वादसिद्धं बहिरङ्गमिति लोपस्याऽसिद्धत्वेऽनवर्णान्त-त्वान्मकाराभावः। 5

'वाद्रौ'। २। १। ४६॥ अदसोऽवयवस्याद्र्यागमस्य तद्ग्रहणेन ग्रहणात्तस्मिन् सत्यदस इकारान्तत्वेनाऽवर्णान्तत्वाभावादप्राप्तेऽयं योगः। अमुमुयङिति–समुदाये प्रवृत्ता अपि शब्दा अवयवेऽपि वर्तन्ते इति। मात्रा शब्दोऽर्धमात्रायामपि तेनाऽमुमुय-ङित्यत्राऽर्धमात्रिकस्याऽपि रः स्थाने एकमात्रिक उकारादेशो भवति। अत्र वा व्यवस्थितविभाषार्थो न विकल्पार्थस्तेन क्वाऽपि कथञ्चिद्विकल्पः प्रवर्तते यदि तु विक- 10 ल्पार्थः स्यात्तदा प्रथममेव प्रयोगद्वयं स्यात्। तावतैव विकल्पस्य चरितार्थत्वात्। अदसो दकारस्येति–अद्रेरागमत्वाददसूग्रहणेन ग्रहणाददसो दकारस्येत्युक्तेऽपि अदसो ऽद्रेश्च दस्य मः सिद्धः, दकारस्येत्यत्र एकवचनान्तत्वादेकस्यैव दस्य म इति तु न वाच्यम् अजात्याश्रयणात्; चातूरूप्यमिति स्वार्थे भेषजादित्वात् ट्यणे चतुर्णां रूपाणां भावः "पतिराजान्त०"[4] इत्यनेन वा। 15

'मादुवर्णोऽनु'। २। १। ४७॥ अनु पश्चादिति, अत्राऽनुना पूर्वं सम्बन्ध-स्तस्य च पश्चादर्थत्वात् "प्रभृत्यन्यार्थ०"[5] इति दिग्योगलक्षणा पञ्चमी। यदि पूर्वं पश्चादित्यनेन योगो विवक्ष्यते, तदा "रिरिष्टात्०"[6] इत्यनेन कार्यान्तरेभ्य इत्यत्र षष्ठी स्यात्; पश्चादित्यखण्डमव्ययं वा। अथाऽत्रानुग्रहणं किमर्थं यतो यदि कार्यान्तरात् प्रागुवर्णो भवति तदा इनादेवेत्युत्तरसूत्रे नियमार्थे व्याख्यायमानेऽन्वर्थस्य लब्धत्वात्, 20 सत्यं, एवमपि नियमाशङ्का स्यात्, इनादेशस्तावत्प्रत्ययादेशस्ततोऽन्यस्मादपि प्रत्य-यादेशादेव पश्चादुवर्णः; प्रकृत्यादेशात् परत्वात् पूर्वमपि भवेत्तथा च अमुया अमुयोरि-त्यादयो न सिध्येयुः। अमुष्मै–नन्वत्र "ङित्यदिति" इत्योत्वं स्मै आदेशे कृते कथं न भवति ?, उच्यते–अदितीत्यत्र नञः पर्युदासाश्रयणात्, स हि सदृशग्राही ततो यत्र साक्षात् स्वरोऽग्रे भवति तत्रैव पूर्वस्योकारस्य ओकारस्तत्राऽदितीति साक्षा- 25 त्स्वरवर्जनात्।

'बहुष्वेरी'। २। १। ४९॥ अमुकेभ्यः अत्राऽकस्तन्मध्यपतितस्य तद्ग्रह-णेन ग्रहणेऽप्युकारेण व्यवधानादनेन ईत्वाभावः।

---

[1] १-३-२६। [2] १-२-२४। [3] ७-१-६०। [4] २-२-७५। [5] २-२-८२। [6] १-४-२३।

'धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये' । २ । १ । ५० ॥ युवर्णस्येति कर्तव्ये यदिवर्णोवर्णस्येति कृतं तद्विचित्रा सूत्रकृतिरिति दर्शनार्थम् । प्रत्यये इति 'प्रत्ययाप्रत्यययोरिति' न्यायेन प्रत्यय एव भविष्यति किं तद्ग्रहणेन ? सत्यं, 'न्यायानां स्थविरयष्टिन्यायेन प्रवृत्तिः' । नियौ, निय इति, ननु गौणमुख्ययोरिति मुख्यस्यैवेयुवौ 5 प्राप्नुतः ? नैवम्, "[1]स्यादौ वः" इति सूत्रस्यैतदपवादत्वाद् गौणस्याऽपि भवति । स्त्रियाविति–ननु "स्त्रियाः" इत्यनेनाऽपीय् सिद्धः किमत्रोदाहरणेन ? सत्यं, तेन नाम्न इय् भवति अनेन तु धातोः, अत एव यत्र क्विबन्तः स्त्रीशब्दो भवति तत्राऽनेन "वाऽम्शसिः" इति विकल्पो बाध्यते ।

'इणः' । २ । १ । ५१ ॥ अत्र व्यभिचाराभावेऽपि धातोरित्युत्तरार्थमनुवर्तनी-10 यम् । यत्वापवाद इति–"[2]योऽनेकस्वरस्य" इति प्राप्तस्य । परत्वेनेति–शितीति विशेषविहितत्वात् प्रकृष्टत्वेनेत्यर्थः । परत्वं तु स्पर्धाभावान्न घटते । परत्वादिति–'पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति', "[2]योऽनेकस्वरस्ये" ति प्राप्तं यत्वं बाधते न तु गुणवृद्धी । ईयतुरित्यत्र द्वित्वे कृते 'वार्णात्प्राकृतं बलीय' इति न्यायात्प्रथममियादेशस्ततो दीर्घः ।

15 'संयोगात्' । २ । १ । ५२ ॥ द्वयोरपवादौ इति "[3]क्विब्वृत्तेः०" "योऽनेकस्वरस्य" इति विहितयोः ।

'भ्रूश्नोः' । २ । १ । ५३ ॥ संयोगात् परस्येति विशेषणं श्नोर्न तु भ्रूशब्दस्याऽव्यभिचारात् ।

'स्त्रियाः' । २ । १ । ५४ ॥ स्त्रियामित्यत्र 'निरबन्धनुग्रहणे' इति न्यायात् 20 "[4]ह्रस्वापश्च" इति नाम् न परमस्त्रियाविति–ग्रहणवतेति नोपतिष्ठते, "[5]वेयुवो०" इत्यत्राऽस्त्रिया निर्देशात् । यद्वा स्वरादिप्रत्ययेन प्रकृतेराक्षेपात् स्त्रिया इति तस्या विशेषणत्वेन तदन्तसंप्रत्ययात्तदन्तस्याऽप्युदाहरणं । तर्हि शस्त्रीशब्दस्याऽपि ङ्यन्तत्वादियादेशः प्राप्नोतीत्याहाऽनर्थकत्वादिति । एतच्चेति–अस्त्रिया इति निर्देशात् परादपीयुव्यत्वादिकार्यात् प्रथममेव ईदाश्रितं कार्यं भवतीत्याद्युक्तं तत्रेत्यर्थः ।

25 'वाऽम्शसि' । २ । १ । ५५ ॥ अत्र षष्ठीबहुवचनस्य नामविषयत्वेन स्वरादित्वाभावात् शस्साहचर्याच्च तुल्यायामपि संहितायां द्वितयैकवचनस्यैव ग्रहणम् । स्त्रीशब्दस्य संख्यैकार्थत्वाभावात्तद्धितशसोऽनुत्पत्तेः संख्यैकार्थत्वयोगादुत्पत्तौ वा

---

१ २-१-५७ । २ २-१-५६ । ३ २-१-५८ । ४ १-४-३२ । ५ १-४-३० ।

स्वरादित्वाभावाद्द्वितीयाबहुवचनस्यैव शसो ग्रहणात्तस्याऽव्यभिचारात्तेन साहचर्यम् क्यन्नाद्यन्तस्येति, अथ धातुरूपस्यैव स्त्रीशब्दस्य विकल्पार्थमिदं कस्मान्न भवति, कथमुक्तं "धातोरिवर्ण०" इत्यादिना नित्यमियादेश इति ? उच्यते–स्त्रिया इति प्रागारम्भादधातोरेव स्त्रीशब्दस्य ग्रहणम् । स एव चाऽनुवर्तते न चाऽनुवर्तमानस्याऽन्यथात्वं भवति, यदाह श्रीशेषराजः "नहि गोधा सर्पन्ती सर्पणादहिर्भवतीति" 5 तस्माद्युक्तमुक्तं "धातोरिवर्णो०" इत्यादिना इयादेश इति ।

'योऽनेकस्वरस्य' । २ । १ । ५६ ॥ धातोरित्युनुवर्तत इति, 'विशेषातिदिष्टः प्रकृतं न बाधत' इति न्यायात्, इय्बाधकमिदम् ।

'स्यादौ वः' । २ । १ । ५७ ॥ उव्बाधनार्थमिदं, वसुमिच्छतीति देवमग्निं राजानं वेत्यर्थः । द्रव्यवृत्तिस्तु नपुंसकः । 10

'क्विब्वृत्तेरसुधियस्तौ' । २ । १ । ५८ ॥ क्विबन्तेनैवेति, नन्वत्राऽवधारणं कस्माल्लब्धम् ? उच्यते–वृत्तिस्थस्य धातोः स्यादौ कार्यविधानात्तस्य च केवलस्य वृत्त्यसम्भवाद्वृत्तिग्रहणादेव क्विपि लब्धे क्विब्ग्रहणमवधारणार्थमत एवाऽवधारणस्य शब्दाश्रयत्वादसामर्थ्यमपि नाऽस्तीत्याह क्विब्वृत्तेरिति । सेनानीरिति–सेनां नेतेत्यर्थकथनं यावता सेना शब्दस्य षष्ठ्यन्तस्य 'गतिकारकेति' न्यायेन नीशब्देन क्विबन्तेन 15 "कृति" इति समासः, न च वाच्यं "नैं नाम्येक०" इति नियमेन द्वितीयैव प्राप्नोति न षष्ठी तत्कथं कृतीति समासः ? उच्यते–"ङस्युक्तं कृता" इत्यस्यैव विषयेऽयं नियमो न कृतीत्यस्य, यदाऽपि नयतीति नीः पश्चात् परमशब्देन कर्मषष्ठ्यन्तेन कारकत्वात् स्याद्युत्पत्तेः पूर्वं क्विबन्तेन समासस्तदाऽपि यत्वं भवतीत्याह यद्वेत्यादि, उभयत्राऽप्यर्थभेदाभावात् प्रक्रियाभेदमात्रमेतदुपदर्शितमिति, परमार्थतस्तु सोपपदादेव क्विप् । 20 ननु बहवः सेनान्यो यस्येति कृते यत्वं भवति वा नवा ? भवत्येव, यतः सेनानीशब्दस्य क्विबन्तेन वृत्तिरस्ति । परमनीरिति–परमशब्दस्याऽकारकत्वात् क्विबन्तेन समासाभावात् क्विब्ग्रहणादिह यत्वं न भवति ।

'दृन्पुनर्वर्षाकारैर्भुवः' । २ । १ । ५९ ॥ दृन् हिंसन्निति दृह्, दृहु इति धातुः दंहतीति क्विपि, तल्लोपे, सिलोपे च "पदस्य" इति हलोपे दृन् इति रूपम् । वर्षा- 25 भूरिति–भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दुर्दुरे नपण ( नपस्त्रीण् ) इति वैजयन्तीकारः । कारेति–क्रियत इति कारो राजलभ्यो भागः । करभ्वौ उभयं शाकटायनः । स हि करशब्दं

१ २–१–५० । २ ३–१–७७ । ३ ३–२–९ । ४ ३–१–४९ । ५ २–१–८९ ।

पठित्वा करकारशब्दयोरेकार्थत्वादेकदेशविकृतं तदेवेति कारशब्देनाऽपीच्छति । स्वयम्भुवाविति—अत्राऽपि "दिद्युद्दृद्दज्ज०" इत्यादिना क्विप् । न तु "शंसंस्वयं०" इत्यादि डुः । तदा हि धातुत्वं न स्यात् । एतैरेवेति—प्रकृतिनियमोऽयम् । एतैर्योगे भुव एव नाऽन्यस्य, धातोरिति तु उपपदनियमो न भवति । "अस्वयम्भुवोऽव्" इति सूत्रनिर्देशात् । एवंविधे हि नियमे क्रियमाणे एतैर्भुव एव नाऽन्यस्येत्यन्ये धातवो नियन्त्रिताः स्युः । भुवस्तु एतैरन्यैश्च योगे वत्वं स्यात्तथा चाऽस्वयम्भुव इति न स्यात् ।

'णषमसत् परे स्यादिविधौ च' । २ । १ । ६० ॥ णो विधीयमानत्वेनैष्वस्तीत्यश्राद्यकारे णशब्देन णत्वविधायकानि सूत्राण्युच्यन्ते, एवं षशब्देनाऽपि षत्वविधायकानीति । एतत्सूत्रनिर्दिष्टयोरिति—यदि तु सप्तमपादोक्तक्रमेण षण इति क्रियते तदा णत्वमसद् द्रष्टव्यमिति पूर्वं कृतस्य णत्वस्यासत्त्वात् प्रनष्ट इति सिद्धम् । न च श इति व्यावृत्त्या पूर्वमेव न भविष्यति । धातोः पश्चादुपसर्गसम्बन्ध इति मते व्यावृत्तेश्चरितार्थत्वात् अभिषुणोतीत्यादि न सिध्यति । "उपसर्गात्सुग्०" इत्यनेन विहितस्य षत्वस्य णत्वे परेऽसत्त्वात् । "रषृवर्णान्नोण०" इत्यनेन षकाराद्विधीयमानं णत्वं न स्यात् । णषशास्त्रं वेति—अयमभिप्रायः, शास्त्रस्यैवाऽसिद्धत्वं युक्तम् । कार्यासिद्धत्वाश्रयणे हि यथा देवदत्तस्य हन्तरि हतेऽपि न पुनर्देवदत्तस्य प्रादुर्भावो भवति तथा कार्येऽसिद्धत्वमापादितेऽपि न प्रकृतेः पुनः प्रत्यापत्तिर्भवति । ततः पुष्ण इत्यत्र णत्वस्याऽसिद्धत्वेऽपि नकारप्रत्यापत्तेरभावान्नाऽनन्ता प्रकतिरिति तन्निबन्धनोऽनोऽकारलोपो न स्यात् । शास्त्रासिद्धत्वे त्वकारलोपशास्त्रमेव तावत्प्रवर्तते न णत्वशास्त्रमिति । अधिकार इति—अधि उपरि क्रियतेऽनुवर्त्यत इत्यधिकारः घञि ।

'क्तादेशोऽषि' । २ । १ । ६१ ॥ ककारेणोपलक्षितस्त इति व्युत्पत्तिकरणात् क्तक्तवतुक्तित्वानां ग्रहणं सिद्धं, ककारोपलक्षितस्य तकारस्य सर्वेष्वेषु विद्यमानत्वात् । परे कार्ये इति—परत्वमेतत्सूत्रापेक्षं विज्ञायते, न क्तादेशविधायकसूत्रापेक्षम्, अषीति प्रतिषेधात् । एतत्सूत्रापेक्षे हि परत्वे "यजसृज०" इति षत्वमपि परम् । तस्मिन्नप्यसत्त्वे प्राप्तेऽषीति प्रतिषेधो युज्यते । क्षामिमानिति—क्षामस्याऽपत्यं "अत इञ्" ततो मतुः । यद्वा क्षामोऽस्याऽस्ति इन् ततः क्षाम्यत्राऽस्ति मतुः । लून्युः पून्युरिति, लूनं पूनं चेच्छति क्यन् "क्यनि" इति ईकारस्ततो डस् । यदाऽपि लवनं लूनिस्तामिच्छति या स्त्री क्यन् लूनीयतीत्यादि प्रक्रिया क्रियते तदाऽपि ग्रामणीशब्दवत् विशेषणशब्दत्वेन नित्यस्त्रीत्वाभावात् "योऽनेकस्वरस्य" इति यत्वे लून्युः पून्युरित्येव

---

१ ५-२-८३ । २ ५-२-८४ । ३ ७-४-७० । ४ २-३-३९ । ५ २-३-६३ । ६ २-१-८७ । ७ ६-१-३१ । ८ १-४-३९ ।

भवति। यदा तु लूनिमिच्छति यः पुमानित्यादि क्रियते, तदा यो लूनिशब्दः स्त्रीलिङ्गः स ईदन्तो न भवति, यस्तु क्यन्नन्तः स नेदन्तः स न स्त्रीलिङ्ग इति "स्त्रीदुतः" इत्यस्य प्राप्तिरेव नाऽस्ति, यत्वे लून्युः पून्युरित्येव। यदा तु क्यन्तादेव ङस् तदा "स्त्रियां ङितां वा०" इति दासि तत्पक्षे तु "ङित्यदिति" इत्येत्वे लून्या लूनेरिति रूपद्वयं पश्चाद्भागे ज्ञातव्यम्। नन्वपीति किमर्थं यतः षत्वरूपे परे कार्ये कर्तव्ये क्तादेशस्याऽसत्त्वं प्राप्तमनेन निषिध्यते, तच्च परे कार्ये इति भणनान्न प्राप्नोति, णत्वषत्वयोः पूर्वसूत्रे ग्रहणादिति? सत्यं, अत एव प्रतिषेधात् पूर्वत्र णत्वसहचारितं सप्तमपादनिर्दिष्टं षत्वं गृहते तेन अद्राक्षीदित्यादि सिद्धम्, अन्यथा यदि पूर्वसूत्रे सामान्येन षत्वमङ्गीक्रियते तदा "षढोः कस्सि" इति परे कार्ये कर्तव्ये षत्वस्याऽसत्त्वात् कत्वं न स्यादिति। मग्न इति–"मस्जेः सः" इति सस्य नः। "नो व्यञ्जन०" इति लुप्।

'षढोः कस्सि'। २। १। ६२॥ निघोक्ष्यति स्यतिप्रत्यये गुणे "हो धुँट्पदान्ते" इति ढत्वे नित्यस्याऽपि कादेशस्य परेऽसत्त्वाद् "गडदबादेः" इत्यादेश्चतुर्थत्वे ततोऽनेन कत्वे सिद्धम्। कश्चिच्छासेरपि सौ विकल्पेन ककारमिच्छति तन्मते–शाक्षि, शास्सि।

'भ्वादेर्नामिनो दीर्घोर्वोर्व्यञ्जने'। २। १। ६३॥ "रदादऽमूर्च्छ०" इति सूत्रे मूर्च्छ इति निर्देशात् प्रत्ययाप्रत्यययोरिति नाऽऽश्रीयते। भ्वादेरिति आवृत्त्या नामिन इत्यनेन वोरित्यनेन च सम्बध्यते। हूर्च्छेति–अत्राऽच्, मूर्च्छेति–अत्र भिदाद्यङ्, वुवूर्षति–"इवृध०" इति वेट्, दीव्यात् अत्राऽऽशीःक्यात्; सप्तम्यां तु दीव्येत् सीव्येत्। असद्विधाविति–अथाऽत्र दीर्घद्वारेणैव स्थानिवद्भावप्रतिषेधो भविष्यति, किमनेन सूत्रेणाऽसदधिकारविहितेन? नैवं, ओर्मा मोर्मा इत्यत्र सार्थकत्वात्। तथाहि ऊर्ध्वतीति मूर्च्छतीति मनि "राल्लुक्" इति वकारछकारयोर्लोपे एतत्सूत्रविहितदीर्घस्याऽसद्विधित्वेनासत्त्वे "लघोरुपान्त्यस्य" इति गुणो भवति, अन्यथा लघ्वभावात् स न स्यात्। दिव्ना दिव्ने इति, यलवानां सानुनासिकनिरनुनासिकत्वेऽप्यत्र निरनुनासिकत्वं विवक्षितमिति "अनुनासिके च०" इत्यूट् न भवति। "मन्वन्क्वनिप्" इति क्वनिब्विधायके सूत्रे क्वचिद्ग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात्क्वचिदयं

---

१ २-१-५६। २ १-४-२८। ३ १-४-२३। ४ २-१-६२। ५ ४-४-११०। ६ ४-२-४५। ७ २-१-८२। ८ २-१-७७। ९ ४-२-६९। १० ४-४-४७। ११ ४-१-११०। १२ ४-३-४। १३ ४-१-१०८। १४ ५-१-१४७।

स्वरूपेण न भवति । क्वचित् पानुबन्धो न भवतीति नागमाभावः । प्रत्यासत्त्येति–अत्रैकेन प्रयत्नेन द्वयोरुपादानं प्रत्यासत्तिः । शब्दान्तरं प्रतीत्य शब्दान्तरस्याऽऽसत्तिरिति व्युत्पत्तेः । इयमेव हि शब्दस्य शब्दान्तरेण प्रत्यासत्तिः । यदेकप्रयत्नेनोच्चारणं नामैकवाक्योपात्तलक्षणप्रत्यासत्तिर्नेहोपयुज्यते ।

5 ‘पदान्ते’ । २ । १ । ६४ ॥ पिपठीरिति, ननु भ्वादेः सम्बन्धिनो नामिनो दीर्घ इत्युक्तं, तत्कथमत्र पिपठिष् इत्यस्याभ्वादिरूपस्य सम्बन्धिनो नामिनो दीर्घ इति ? सत्यम्, भ्वाद्यवयवेन पठ् इत्यनेन योगात्समुदायोऽपि पिपठिष इत्येवंरूपो भ्वादिः । यद्येवं पूर्वसूत्रेषूदाहृतेषु चतुर्भिः, चतुर्थ इत्यादिष्वप्यनेन प्रकारेण भ्वादिसम्बन्धित्वमस्त्येव तत्कथं न दीर्घः सत्यम्, धातुत्वे सति भ्वाद्यभ्वादिचिन्ता क्रियते, 10 अत्र तु धातुत्वस्याऽप्यभावः । तर्हि कुर्कुरीयति, चतुर्यति, दिव्यतीत्यादिषु धातुत्वमस्ति ततोऽनेन प्रकारेण भ्वादित्वमप्यस्ति ततो दीर्घः स्यात्; सत्यं, यद्यप्येवं प्रत्ययान्तानां धातुत्वमस्ति पिपठीरित्यादिवदेतेषु न भ्वाद्यवयवात् प्रत्ययो विधीयते, किं तर्हि नाम्न एव ? ततो भ्वाद्यवयवयोगाभावात् कुर्कुरीय इत्यादेः समुदायस्य न भ्वादित्वम् । आशीरिति अत्र नित्यमपि विसर्गं बाधित्वा “नित्यादन्तरङ्ग”मिति 15 न्यायात् प्रथममनेन दीर्घस्ततो विसर्गः ।

‘न यि तद्धिते’ । २ । १ । ६५ ॥ नाम्युपान्त्य इति, अयमर्थः । यदा दिवु इत्यादेः क्विप् तदा ऊटा भाव्यं, इति न वकारान्तत्वम्; यदा तु विच् तदा गुणे कृते एकारस्य दीर्घरूपस्य दीर्घकरणं व्यर्थम् । ननु दिव्यमित्यत्र सम्भवति वान्तो नाम्युपान्त्यश्च धातुः, सत्यं, अत्राऽपि डिवप्रत्ययान्तस्यौणादिकत्वाद्दिवो न धातुत्व-20 मिति न वान्तो नाम्युपान्त्यश्च धातुः सम्भवति । पुर्यामिति–पुरशब्दाज्जातित्वाद् ङ्यां, ‘पृश्’ पालनपूरणयोरित्यस्मात् “कॄगॄपॄ०” किति इप्रत्यये वा । एवं गिर्योः किर्योरिति । बहिरङ्गलक्षणस्येति–प्रत्ययाश्रितत्वेन यत्वं बहिरङ्गं, दीर्घत्वं तु प्रकृतिमात्राश्रितत्वेनाऽन्तरङ्गम् । कुरु–कुर्वित्युकारः किमिति, अन्यथा प्रतिपदोक्तत्वात् कुरत् शब्दे इत्यस्यैव ग्रहणं स्यात्तर्हि कृच्छुर इति निर्विवादं क्रियताम् । न 25 च वाच्यं कृच्छुर इति कृते ‘कृंगट्’ हिंसायामित्यस्याऽपि ग्रहणं स्यात्, कृणोतीत्यादौ रेफाभावात् करिष्यन्तीत्यादौ तु नाम्यभावेन दीर्घत्वप्राप्तेरभावाच्चेति । उच्यते–एवंविधे सूत्रे कृते चिकीर्षतीत्यादौ दीर्घनिषेधः स्यात् । संविव्याय, विव्याधेति ‘व्येंग्’, व्यधंच् आभ्यां णवि, “व्येस्थवृणवि” इत्यात्वप्रतिषेधे द्वित्वेऽनादिव्यञ्जनलोपे

१ उणा० १८८ । २ ४-२-३ ।

" ह्रस्वः " इत्यनेन ह्रस्वत्वे, तस्य च कार्यान्तरबाधनार्थं " ङेयाव्येऽयधि " इति इकारस्याऽपीत्वे प्रथमे प्रयोगे " नामिनोऽकलिहले: " इति एत ऐत्वे आयि च सिद्धम्। असिद्धत्वादिति–द्वित्वे कृते प्रत्ययाश्रितत्वेन बहिरङ्गस्य प्रकृत्याश्रितत्वेनाऽन्तरङ्गे दीर्घत्वे कर्तव्ये " ह्रस्वः " इत्यनेन कृतस्य इकारस्येत्यर्थः । न तु य्वृद्धाधनार्थं, " ज्याव्येऽयधि० " इति कृतस्येकारस्याऽपि मध्ये इकारस्याऽसिद्धत्वं यतस्तस्याऽ- 5
सिद्धत्वे " ह्रस्वः " इत्यनेन कृत इकारः सिद्धः स्यात्तस्य च नामित्वात्ततो नामिनोऽसिद्धत्वादिति यदुक्तं तद् व्याहतं स्यात् । ननु नामिनोऽसिद्धत्वादिति किमित्युक्तं यावता यद्यप्यत्राऽनेन दीर्घो भविष्यति, तथापि " ह्रस्वः " इत्यनेन ह्रस्वे कृते संविव्यायेत्यादि सेत्स्यति; सत्यम्, ह्रस्वरूपे परस्मिन्कार्ये विधेये दीर्घत्वं दीर्घत्वशास्त्रं वाऽसिद्धं भवतीति । यदाऽपि नित्यत्वाद्विशेषविधानाद्वा " ह्रस्वः " इति बाधित्वा 10
" ज्याव्येऽयधि० " इति प्रवर्तते तदाऽपि तस्याऽपि प्रत्ययाश्रितत्वेन बहिरङ्गेनाऽसिद्धत्वान्नामिनोऽभावाद्दीर्घाभावः । कुर्दते, कुर्दनेत्यादिषु द्वोस्फूर्जेति ज्ञापकाद्दीर्घत्वं न भवति, कथं यदि रेफोपान्तानां दीर्घः स्यात्तदा द्वोः स्फूर्जा वज्रनिर्घोष इत्यस्याऽपि दीर्घः सिद्ध इति दीर्घोच्चारणं न कर्तव्यम् । तस्मादत्र दीर्घं कुर्वन् ज्ञापयति भ्वादेरित्ययं विधिरनित्यः । 15

'**मो नो म्वोश्च**' । २ । १ । ६७ ॥ पदान्त इत्यनुवर्तमानेन समुच्चयार्थश्चकारो न तु पदान्त इत्यस्याऽनुकर्षणार्थः । विधानसामर्थ्याल्लोपाभावो नाऽऽशङ्कनीय इत्याह–न त्वस्याऽसत्त्वादिति । खल्वपीति–अप्यर्थेऽखण्डमव्ययम् ।

'**स्रंस्ध्वंस्क्वस्सनडुहो दः**'। २ । १ । ६८॥ उखास्रदिति, उखया युतेन स्थाल्या वा स्रंसते। ननु दकारकरणं किमर्थ ? तकार एव क्रियताम्, यतस्तकारेऽपि कृते 20
" धुटस्तृतीयः " इत्यनेन दकारो भविष्यति। नैवम्, तकारे विधीयमाने परेऽसदिति वचनात् " धुटस्तृतीयः " इति दत्वाभावाद्दकारश्रवणं न स्यात् । स्वनडुदिति–अत्र बहुत्वे वाक्यं कार्यमेकत्वे तु " पुंमनडुन्नौ० " इति कच् स्यात् । क्वसितीति–क्वसोः ककारो 'वसं' निवासे, 'वसिक्' आच्छादने अनयोर्व्युदासार्थः। तेन वसेः क्विपि यजादित्वात् य्वृति दीर्घत्वे ऊः । क्षौमं वस्ते क्विपि क्षौमवः । अथ वसतिवस्त्योः सकारान्तत्वा- 25
व्यभिचाराद्व्यभिचारे च विशेषणस्याऽर्थवत्त्वाद् व्यभिचारिणः क्वस एव ग्रहणं भविष्यति । कुतो क्वस्सिति सकारोपादानात्? नैवम्, अन्यथाऽपि प्रतीतिः स्यात्, यङ्लुबन्तयोरेतयोरेव ह्यस्तनीसिवन्तयोर्विशेषविहितत्वेन " सेः स्द्धां च० " सिव् लोपा-

---

१ ४-१-३९ । २ ४-१-७१ । ३ ४-३-५१ । ४ २-१-७६ । ५ ७-३-१७३ । ६ ४-३-७९

भावे कस्सिति द्विः सकाररूपाद्ग्रहणं स्यादितीह मा भूदिति ककारकरणम्। रुत्वढत्व-योरेव बाधकमिति–अनडुह्शब्दे " हो[१] धुट्पदान्ते " इत्यनेन ढत्वस्य शेषेषु रुत्वस्य प्राप्तिः। प्राप्ते चाऽप्राप्ते चेति क्लीबे विद्वत्कुलमित्यादिष्वप्राप्ते पुंस्त्वे तु विद्वानित्यादौ प्राप्ते इति तस्य न बाधकम्।

5 'ऋत्विज्दिश्दृश्स्पृश्स्रज्दधृषुष्णिहो गः'। २। १। ६९॥ ऋत्वि-गिति, ऋतुः प्रयोजनं प्रवर्तको यस्येति वाक्ये " मयूर० " इति प्रयोजनशब्दलोपः। अत एव निपातनाद्वा। ऋतु प्रयोजन इत्यर्थकथनं वा। तत्र पक्षे ऋतुना हेतुभूतेन यजते इत्यर्थः। ननु ऋत्विग्दिग्दृगिति गान्ता निपाताः क्रियन्तां किं गविधानेन? सत्यम्, गनिपातने गत्वसंनियोगशिष्टतैव ज्ञायेत ततो व्यावृत्तौ दधृषौ उष्णिहाविति 10 न स्याताम्। गत्वे तु विहिते निपातनं सर्वत्र भवति, गत्वं तु पदान्त एव भवतीति। स्रगिति–सरति मस्तकादिकमिति " ऋधि[३] पृथि० " इत्यनेन बहुवचनात्किद्ज्।

'नशो वा'। २। १। ७०॥ जीवतीति अच्। जीवस्य जीवतो नशनं " भ्यादिभ्यो वा " इति क्विप्।

'सजुषः'। २। १। ७३॥ रत्वापवादः, सभाव इति, अस्मादेव निर्देशात्।

15 'अह्नः'। २। १। ७४॥ लाक्षणिकत्वादिति अयमभिप्राय उणादयोऽव्युत्प-न्नानि नामानीत्यस्मिन्पक्षे नाम्नः प्रतिपदोक्तस्य सम्भवाल्लाक्षणिकस्य न ग्रहणमिति। व्युत्पत्तिपक्षस्तु इह नाऽऽश्रितः।

'रोलुप्यरि'। २। १। ७५॥ अहरधीते इति " कालाध्वनो[४] " द्वितीया। अहः काम्यतीति "रोः काम्ये[५]" इति नियमात् " प्रत्यये[६] " इत्यनेन न सकारः। हे दीर्घा-20 होऽत्रेति, अत्र वाक्ये विभक्तेर्लुबस्ति तत्कथं रो न भवति? सत्यं, लुपीति प्रत्यासत्त्या व्याख्येयम्। यदपेक्षया लुप् पदत्वमपि यदि तदपेक्षया भवति। अत्र तु वाक्य-विभक्त्यपेक्षया लुप्, साक्षाद्विभक्त्यपेक्षया तु पदत्वम्। वाक्यविभक्त्यपेक्षयैव पदत्वमपि न वाच्यम् " वृत्त्यन्तोऽसषे[७] " इति प्रतिषेधात्। रथन्तरमिति–रथं रथस्थं तरत्यतिक्रा-मति " भृवृजि[८]० " इति खः, सामविशेषः। यातमिति कर्मणि क्तः।

25 'धुटस्तृतीयः'। २। १। ७६॥ अब्भिरिति अत्र संज्ञाशब्दत्वात् " चजः[९] कगम् " इति न भवति। अलाक्षणिकयोरिति " रः[१०] कखपफ० " इत्यादिलक्षणेनाऽकृत-

---

१ २-१-८२। २ ३-१-११६। ३ उणा ८७४। ४ ५-३-११५। ४ अ २-२-४२। ५ २-३-७। ६ २-३-६। ७ १-१-२५। ८ ५-१-११२। ९ २-१-८६। १० १-३-५।

योरित्यर्थः । दुःखयतेर्दु ᳲखयतेर्वेति सुखदुःखणित्यत्र दुःखधातुर्विसर्गान्वितो मतान्तरेण जिह्वामूलीयान्वितश्च पठ्यते । संयोगान्तलोप इति–ननु व्यञ्जननैरन्तर्यं संयोगः, न च विसर्जनीयजिह्वामूलीययोर्व्यञ्जनसंज्ञाऽस्ति । तत्कथं “पदस्य”[1] इत्यन्तलोपः ? सत्यं, कस्याऽऽदिः कादिरिति व्युत्पत्त्या अं अः इत्येतयोर्व्यञ्जनत्वे ततश्च “अं[2] अः ᳲक ᳲप०” इति सूत्रे अं अः इति साहचर्यात् ᳲक इत्यस्याऽपि व्यञ्जनत्वे संयोगान्तलोपो भवति । कण्ठ्यत्वाच्च स्थान्यासन्नो गकारः । न तु ᳲप इत्यनेन साहचर्यम् । कुतः अं अः ᳲप ᳲकेत्यकरणात् । कश्चरतीति–यद्यप्यत्र रुत्वस्य परेऽसत्त्वात्तृतीयस्याऽप्राप्तिस्तथापि मातश्चरतीत्यादिषु प्राप्नोतीत्याह–विधानसामर्थ्यादिति ।

‘**गडदबादेश्चतुर्थान्तस्यैकस्वरस्यादेश्चतुर्थः स्ध्वोश्च प्रत्यये**’ । २ । १ । ७७ ॥ धातुरूपावयवस्येति, अत्र धातुरूपावयवस्येति विशेष्यम्, अस्य च समासद्वयं, पर्णघुडित्यादौ सिसाधयिषिते धातुरूपश्चाऽसावयवश्च गुह इत्यादिः । अवयवश्चावयवव्यपेक्षयाऽभिधीयत इति पर्णगुह् इत्यादिः, समुदायोऽवयवी । तुण्ढिप् इत्यादौ तु साधयितुमिष्टे धातुरूपस्याऽवयव इति षष्ठीसमासः । धातुरूपं तुण्डिभ् इत्यादि, तस्याऽवयवो डिभ् इत्यादिः । समासद्वयेऽपि च कुण्डमुम्भति कुण्डोप् इति निरस्तम्, नहि कुण्डोप् इत्यस्य समुदायस्य मध्ये डोप् इति धातुरूपोऽवयवो नाऽपि धातुरूपस्याऽवयव इति आदिचतुर्थत्वाभावः । यद्वा धातुरूपस्याऽवयव इत्येवं षष्ठीसमास एव क्रियते, एवं च क्रियमाणे तुण्ढिप् इत्यादीनि आद्यन्तवदेकस्मिन्निति न्यायनिरपेक्षाणि सिध्यन्ति । पर्णघुडित्यादीनि तु आद्यन्तवदेकस्मिन्निति न्यायेन । न्यघूढ्वमिति–अद्यतन्या ध्वमि, सकि, “दुहदिह०”[3] इति तस्य लुकि, अटि ढत्वे घत्वे “तवर्गस्य०”[4] इति धस्य ढत्वे; “ढस्तड्डे”[5] इति ढलोपे रूपमिदम् । वर्णविधित्वेनेति–वर्णे सकाररूपे परतो विधिः । सिज्लुकि न भवतीति–ननु सिज्लोपात् पूर्वमेव किमिति नाऽऽदिचतुर्थत्वम् ? नैवम्, परस्मिन् लोपरूपे कार्ये विधेये आदिचतुर्थत्वस्याऽसदधिकारविहितत्वेनाऽसत्त्वात् । प्रत्यय इति किमिति–‘ननु प्रत्ययाप्रत्यययोः प्रत्ययस्यैवेति’ न्यायेन प्रत्यये एव भविष्यति किं प्रत्ययग्रहणेन ? सत्यम्, दधूध्वः दधूध्वहे इत्यत्र यदा उभयोः स्थाने इति न्यायेन ध्व इत्यस्य प्रकृतिप्रत्ययस्थाननिष्पन्नस्य प्रत्ययव्यपदेशः स्यात्तदा आदिचतुर्थत्वं भवेत् । सति तु प्रत्ययग्रहणे न्यायनिरपेक्षो यः प्रत्ययस्तस्मिन्नेव भवति नेतरस्मिन् प्रत्ययग्रहणसामर्थ्यात् ।

‘**धागस्तस्थोश्च**’ । २ । १ । ७८ ॥ नन्वत्र चकारकरणं किमर्थं स्ध्वोः पूर्वेणैव

---

१ २–१–८९ । २ १–१–१६ । ३ ४–३–७४ । ४ १–३–६० । ५ १–३–४२ ।

सिद्धत्वात् ? सत्यम्, यङ्लुपि " क्रियाऽव्यतिहार " इत्यात्मनेपदे से व्यतिधात्से इति स्यात्; कृते च चकारे व्यतिदात्से इत्येव न त्वादेश्चतुर्थः 'तिवा शवे'ति न्यायात् ।

' अधश्चतुर्थात्तथोर्धः ' । २ । १ । ७९ ॥ अध इत्यत्र नञ् पर्युदासस्तेनाऽन्यस्मादपि शुद्धधातोरेव । पूर्वसूत्रे निमित्तत्वेनोपादानात्, इह तयोरित्यस्य पुनरु-
5 पादानं कार्यित्वार्थम् । चतुर्थादिति–ननु गडदबादेरित्यतश्चतुर्थान्तस्येत्यधिकारोऽनुवृत्त्यर्थः । अर्थवशादिति पञ्चम्यन्तं कृत्वा रूपाणि साधयिष्यन्ते किं चतुर्थादित्यनेन ? सत्यम्, क्लिष्टप्रतिपत्तिरियमिति सुखार्थम् । यङ्लुबन्तधयतेश्चेति, केवलस्य तु शवा व्यवधानाच्चतुर्थान्तत्वाभावात् । नामविहिते इति 'क्विबन्ता धातुत्वं न त्यजन्तीति' न्यायादपि न भवत्यध इति वर्जनाच्छुद्धधातोरेव परिग्रहात् ।

10 ' नाम्यन्तात् परोक्षाद्यतन्याशिषो धो ढः ' । २ । १ । ८० ॥ नामीति विशेषणाद्विशेषणे तदन्तविधेर्भावात्तदन्तत्वे लब्धेऽन्तग्रहणं सुखार्थम् । रान्तादनिट्परोक्षा न सम्भवति, सेटस्तु तत्वरिढ्वे इत्यादि परेण विकल्प एव, तथाऽत्र रग्रहणाभावेऽपि नाम्यन्तादित्यत्र विहितव्याख्याने क्रियमाणे परत्वात् " ॠतां क्ङितीर् " इत्यनेन इरादेशे सत्यपि अतीर्ढ्वमित्यादीनि सिध्यन्ति किन्तु अदिढ्वं, अधिढ्वमित्यादीनि न
15 सिध्यन्तीति रग्रहणमिति । तरतेः परस्मैपदिनोऽपि कर्मण्यात्मनेपदं, अतीर्ढ्वमित्यत्र " ऋवर्णात् " इति सिचः कित्वम्, अदिढ्वमित्यादौ " इश्च स्थादः " इत्यनेनेत्वं सिचः कित्वंच । इत्वविधानादेव गुणो न भविष्यति किं कित्वेनेति न वाच्यं विधानस्य । अदितेत्यादौ ह्रस्वद्वारेण सिचो लुपि चरितार्थत्वादिति । अकृढ्वं, कृषीढ्वमित्यनयोः " ऋवर्णात् " इत्यनेन सिच् सीध्वमोः कित्वाद्गुणाभावः । अपग्ध्वमिति " सो धि वा "
20 इति विकल्पेन सिचो लुप्प्रवृत्तेः पक्षे अपग्ड्ढ्वमित्यत्राऽद्यतनीध्वमि सिचि, धातुचकारस्य " चजः कगम् " इति कत्वे, "नाम्यन्तस्था०" इत्यनेन सिचः षत्वे, " तृतीयस्तृतीय० " इति षस्य डत्वे; " तवर्गस्य० " इति ध्वमो धस्य ढत्वे च सिद्धिः ।

' हान्तस्थाञ्जीड्भ्यां वा ' । २ । १ । ८१ ॥ जिटः स्वतन्त्रत्वादिटस्तु प्रत्ययाद्यवयवत्वेन प्रत्ययत्वाद्धातोर्नाम्यन्तत्वाभावे पूर्वेण न प्राप्नोतीत्यप्राप्ते विभाषेयम् ।

25 ' हो धुट्पदान्ते ' । २ । १ । ८२ ॥ मधुलिहाविति–यदा 'गतिकारक०' इति न्यायान्मधुशब्दस्य लिह इत्यनेनाऽविभक्त्यन्तेन समासस्तदाऽन्तर्वर्तिविभक्त्यभावात् पदत्वप्राप्तिरेव नाऽस्ति । यदाऽपि लीढ इति कृत्वा मधुनो लिहाविति विभक्त्यन्तेन

---

१ ३-३-२३ । २ ४-४-११६ । ३ ४-३-३६ । ४ ४-३-४१ । ५ ४-३-७२ ।
६ २-१-८६ । ७ २-३-१५ । १८ १-३-४९ । ९ १-३-६० ।

समासस्तदाऽपि "[1] वृत्त्यन्तोऽसषे" इति पदत्वाभाव इत्युभयथाऽप्यपदत्व लिह् इत्यस्येति। औजढदिति–द्वित्वे स्थानित्वादिति–ननु कथमत्र स्थानित्वम्। अकारेण सह क्तेति द्विर्वचने कर्तव्ये पूर्वविधित्वाभावात्? सत्यम्, निमित्तापेक्षयाऽपीह प्राग्विधिरिष्यते। यद्वा ह्‌त् इत्यनयोः स्थानित्वमस्त्येव। अवयवयोश्च समुदायोपचारात् ह् त् इत्यस्याऽपि स्वरादेशः स्थान्यन्तस्य प्राग्विधित्वमिति। यदि निमित्तापेक्षया 5
प्राग्विधिरिष्यते, तर्हि नयनमित्यत्र स्वरादेशस्य गुणस्य स्थानित्वेऽयादेशो न प्राप्नोति? सत्यम्, निमित्तापेक्षया प्राग्विधित्वं प्रायिकमिति।

'भ्वादेर्दादेर्घः'। २। १। ८३॥ यदि भ्वादेरित्यस्य दादेरिति समानाधिकरणं विशेषणं भवेत् तदाऽदुग्धेत्यादयोऽडागमे कृते दादित्वाभावान्न सिध्येयुरिति भ्वादेरित्यस्य दादेरिति व्यधिकरणं विशेषणं व्याख्यातम्। नन्वत्र सर्वेष्वपि प्रयोगेषु 10
घस्य गः क्रियते ततो ग एव क्रियतां, किं घकरणेनेति? सत्यम्, गकारे क्रियमाणे चतुर्थान्तत्वाभावादधोगित्यादौ "[2] गडदबा०" इत्यादिचतुर्थत्वं न स्यात्।

'मुहद्रुहष्णुहष्णिहो वा'। २। १। ८४॥ चेलस्निक्–चेलं स्निह्यति सिञ्चतीत्यर्थः। सेचनार्थत्वं त्वस्य "[3] स्वस्नेहना०" इति सूत्रे स्निह्यतेऽनेनेति स्नेहनमुदकादीति दर्शनाद्विज्ञायत इति। ननु किं मुहादयः स्वरूपेणोपादीयन्ते 15
मुहादेरित्येवोच्यताम्? न चैवं कृतेऽधिकानां प्रसङ्गस्तदनन्तरं वृत्करणात्, तद्धि पुषादिवन्मुहादिपरिसमाप्त्यर्थमपि भविष्यतीत्याह–मुहादेरिति।

'नहाहोर्धतौ'। २। १। ८५॥ भूस्थानस्येति–अन्यस्याऽसम्भवात्, आत्थेति–नन्वाहेरपि धकारे "[4] अघोषे प्रथम०" इति तकारे कृते आत्थेति सिध्यतीत्युभयोरपि धकार एव क्रियतां किं तकारकरणेन? न च सिवस्थवृविधानादेव धत्वं न 20
भविष्यति, अन्यथा सिवो धत्वमेव विदध्यादिति वाच्यम्, यतो लाघवार्थं तद्भवेत्, अन्यथा "[5] भूगः पञ्चानां०" इत्यत्र सिवो ध इति सूत्रान्तरे कृते गौरवं स्यात्तस्मात् सूक्तं धत्वनिवृत्त्यर्थमिति।

'चजः कगम्'। २। १। ८६॥ धुट्पदान्त इत्यस्य चजाभ्यां कगाभ्यां च प्रत्येकमभिसम्बन्धाद्यथासंख्याभावः, प्रत्येकमभिसम्बन्धश्च "[6] प्रागिनात्", "[7] स्त्यादिर्विभक्तिः" इति सूत्रनिर्दिष्टकत्वगत्वरूपज्ञापकात्। "[8] धार्ष्यापाय्य०" इति सूत्रे ऋक् इति निर्देशात्, "[9] रागाट्टो रक्ते" इति रक्तनिर्देशाच्च यथासंख्याभावः। किञ्च यदि 25

१ १-१-२५। २ २-१-७७। ३ ५-४-६५। ४ १-३-५०। ५ ४-२-११८। ६ २-१-४८। ७ १-१-१९। ८ ५-१-२४। ९ ६-२-१।

धुट्पदान्त इत्यनेन सह यथासंख्यमभिप्रेतं स्यात्तदा "ऋत्विज्०" इत्यधिकारे जग्रहणं कृत्वा गत्वं विदध्यादिति। अथाऽत्र सूत्रे किमर्थमादेशद्वयविधानं यावता कविधानं गविधानं वा क्रियतां, यथालक्षणं कस्य गत्वे गस्य कत्वे च सर्वकार्यसिद्धेः। सत्यम्, गाभावे लग्नादयः काभावे पक्कादयो न सिध्येयुरिति कगग्रहणम्।

5 'यजसृजमृजराजभ्राजभ्रस्जव्रश्चपरिव्राजः शः षः'।२।१।८७॥ क्विरेव धुडिति—"तेर्ग्रहादिभ्यः" इति नियमात् क्वौ इडभाव इत्यर्थः। ननु यङ्लुबन्तयोरनयोरन्योऽपि तिवादिधुट् सम्भवति तत्कथं क्विरेव धुडिति? सत्यम्, यङ्लुबन्तयोरनयोर्धातुपारायणिकानामेव मते प्रयोग इष्यते न वैयाकरणानामिति क्विरेवेत्युक्तम्। साहचर्यार्थमिति—न चाऽऽत्मनेपदानित्यत्वज्ञापनार्थं पुनः पाठ इति वाच्यं,
10 तदा ह्यात्मनेपदिष्वेव पुनः पठ्येत। नाऽप्येकस्य ङ्वनुबन्धत्वादथुर्भवत्यन्यस्य नेति वाच्यं यतः ङ्वनुबन्धादपि "असरूपो०" इति सूत्रादुत्सर्गः प्रवर्त्तिष्यते तस्मादेकेनाऽपि धातुनाऽर्थभेदेन प्रयोगद्वयं सिध्यति परं साहचर्याय द्विः पाठ इति। कथमसृगिति—नञ्पूर्वस्य सृजेः क्विबन्तस्य षत्वेन भाव्यं तत्कथं गत्वमित्याह—औणादिकस्येति—अस्यत इति न सृज्यत इति वा "ऋधिपृथि०" इति क्विदजि बाहुलकादेकत्राऽस्य
15 ऋत्वेऽन्यत्र जकाराकारयोर्लोपे चाऽसृज्शब्दसिद्धिः। पथिप्राच्छाविति—पन्थानं पृच्छतः "दिद्युद्०" इति क्विब्, धुटि पदान्ते च पूर्वाण्येवोदाहरणानि व्यावृत्तौ तु विशेषः। स्वमते तु पथिप्राशावित्याद्येव भवति।

'संयोगस्यादौ स्कोर्लुक्'।२।१।८८॥ संयुज्यन्ते वर्णा अत्रेति व्यञ्जनाद् घञि संयोगः। स च वैयाकरणसम्प्रदायाद् व्यञ्जननैरन्तर्यमुच्यते। 'दन्त्यापदिष्टमिति'
20 न्यायात्तालव्यशस्य लुग्दर्शितः दन्त्यस्य तु सस्याऽव्रावगित्यत्र ककुङ् श्वकुङिति पठितस्य वस्केर्ज्ञेय इति। समुदायस्यैव लोपं विदध्यादिति—कया युक्त्या संयोगेति प्रथमं, पदस्येति द्वितीयं अन्ते चेति तृतीयं सूत्रं कुर्यात्। तत्राऽऽद्यस्याऽर्थः—धुटि प्रत्यये संयोगादिस्थयोः सकारककारयोर्लुग् भवति। द्वितीयस्याऽर्थः पदान्ते वर्तमानस्य सकारककारादिसंयोगस्य सकलस्याऽपि लुक्। तृतीयस्याऽर्थः—पदस्येत्यतः
25 पदान्ते इत्यनुवर्तते। ततः पदान्ते संयोगसम्बन्धिनोऽन्तस्य लुग्भवतीत्यकरणाल्लुकः स्थानित्वं न भवति। अन्ये तु अतिटिमिति—तन्मतस्वमतयोः "न वंदनं०" इत्यत्र विशेषः, तन्मते अतिट्टिपते, स्वमते तु अट्टिटिषत इति। पृथक्स्थातेति—पृथक्शब्दः कान्तोऽव्ययम्। न तु "ऋधिपृथि०" इत्यनेनाऽजप्रत्ययान्तो जन्तः। तदा "चजः०"

१ २–१–६९। २ ४–४–३३। ३ ५–१–१६। ४ उणा ८७४। ५ ५–२–८३। ६ ४–१–५
७ उणा ८७४। ८ २–१–८६।

इति गत्वस्य परेऽसत्त्वात्तदादेशस्य कत्वस्याऽप्यसत्त्वे द्व्यङ्गविकलता स्यात् । मांसपिपकिति–नन्वत्र "[1]स्वरस्य०" इति स्थानिवद्भावेन पदान्ते संयोगस्याऽभावात् ककारलोपो न प्राप्नोति । न चाऽसद्विधौ स्थानित्वनिषेध इति वाच्यम् । अस्कूलुगिति वचनात् ? सत्यम्, अस्कूलुकीति नञ्निर्दिष्टस्याऽनित्यत्वेन स्थानित्वाभावात् प्राप्तिर्विद्यते; यथा मधुगित्यत्र ।

'**पदस्य**' । २ । १ । ८९ ॥ पदान्ते वर्तमानस्येति–पदस्य विशेष्यस्य "[2]विशेषणमन्तः" इति परिभाषया पदान्ते इति व्याख्यातम् । भूयानिति–अपदसंज्ञकेऽपि तद्धिते "[3]अस्वयम्भुवोऽव्" न, "[3अ]भूर्लुक् च०" इत्यत्रोकारप्रश्लेषात् । विधानं भूमेत्यत्र पदसंज्ञके चरितार्थम् सामर्थ्यान्न भवतीति, अन्यथा प्रक्रियालाघवार्थं ऊकारमेव विदध्यादित्यर्थः ।

'**रात्सः**' । २ । १ । ९० ॥ रात्परस्य सस्यैवेति–यद्येवं अबिभः अजाग इत्यादि बिभर्तेर्जागर्तेश्च ह्यस्तन्या दिवि, "[4]ह्वःशिति" इति द्वित्वे अत्वे "[5]पृभृ०" इतीत्त्वे, "[6]द्वितीय०" इति बत्वे, गुणे च नियमाल्लोपो न प्राप्नोतीति । नैवम् प्रकरणात् पूर्वसूत्रविहितस्यैवाऽयं नियमो न व्यञ्जनादेरित्युत्तरसूत्रविहितस्य, यद्वा सूत्रे द्वितकारनिर्देशो ज्ञातव्यः । द्वितकारनिर्देशेऽपि न कोऽप्युच्चारणकृतो भेदोऽस्ति ततश्च रात्परस्य तकारसकारस्यैव लुब् नाऽन्यस्येति सूत्रार्थः समजनि । यद्येवं तर्हि कीर्तयतेः क्विपि कीरिति प्राप्नोति । अत्र भाष्यं–लोके प्रयुक्तानामिदमन्वाख्यानं लोके च कीर्त् इत्येव दृश्यते न कीरिति । अजघा इति–नन्वत्र "[7]सेः स्द्धां०" इति सेर्लुकि रुत्वे च कर्तव्ये "[8]गडदबा०" इति घत्वस्याऽसत्त्वात् कृते रुत्वे चतुर्थान्तत्वाभावात् कथं घकारः ? सत्यम्, '<u>असिद्धं बहिरङ्गं</u>' इति भविष्यति ।

'**नाम्नोनोऽनह्नः**' । २ । १ । ९१ ॥ अत्र रेफेति, नन्वत्र विशेषविधानात् "[9]रो लुप्यरि" इति "[10]अह्नः" इति च रेफरुत्वे एव भविष्यतः किमहन्प्रतिषेधेनेत्याह–असत्त्वादिति । न चैवं, तयोरनवकाशतेत्याह–सावकाशमिति । रेफरुत्वलक्षणं । सम्बोधने इति–"[11]नाऽऽमन्त्र्ये" इति नलोपप्रतिषेधात् । अहन्नहितमिति–लक्षणप्रतिपदोक्तयोरिति प्रतिपदोक्तस्यैवाऽहन्शब्दस्य निषेध इत्यत्र प्राप्तिः । परं नाम्न इति व्यावृत्त्या निषिध्यते । वृत्रहभ्यामिति–धातुमात्राश्रितत्वेन तोऽन्तोऽन्तरङ्गो बाह्यस्याऽऽद्यपेक्षणान्नलोपो बहिरङ्गः ।

---

१ ७–४–११० । २ ७–४–११३ । ३ ७–४–७० । ३अ ७–४–४१ । ४ ४–१–१२ । ५ ४–१–५८ । ६ ४–१–४२ । ७ ४–३–७९ । ८ २–१–७७ । ९ २–१–७५ । १० २–१–७४ । ११ २–१–९२ ।

'**नाऽऽमन्त्र्ये**' । २ । १ । ९२ ॥ आमन्त्र्य इत्येकवचनाद्यत्रैक एवाऽऽमन्त्र्यस्तत्रैवाऽनेन नलोपनिषेधो यत्र बहवस्तत्र न, यथा–हे पञ्च पुरुषाः ! इत्यादौ ननु राजन्नित्यादौ सिलुकः स्थानिवद्भावेन । "अधातुविभक्ति०"[1] इत्यनेन नामत्वाभावे पूर्वेण प्राप्तिरेव न किं प्रतिषेधेनेत्याह–एतदेवेति । न च वाच्यं सिलुकः स्थानित्वेन "नामसिद्०"[2] इति पदत्वं प्राप्नोति, तस्मिंश्च सति नलुग्भविष्यतीति; यतः "स्थानीवाऽवर्णविधौ"[3] अत्र तु व्यञ्जनलक्षणो वर्णविधिरिति स्थानित्वं न प्रवर्तत इति ।

'**मावर्णान्तोपान्त्यापञ्चमवर्गान्मतोर्मो वः**' । २ । १ । ९४ ॥ अत्र मकारावर्णयोरन्तोपान्ताभ्यां सह यथासंख्यं न, "नोर्म्यादिभ्यः"[4] इति निषेधस्य व्यर्थत्वात्, यत ऊर्मिमानित्यत्र मान्तत्वस्य यवमानित्यत्राऽवर्णोपान्तत्वस्याऽभावात् । भोगवद् गौरिमतोरिति निर्देशाद्वा । बहिरङ्गलक्षणत्वादिति–तद्धितापेक्षत्वेन वृद्धिर्बहिरङ्गा तदनपेक्षत्वं वत्वमन्तरङ्गमिति ।

'**नाम्नि**' । २ । १ । ९५ ॥ नाम द्विविधं, देवदत्तादि निरूढलक्षणाकं, "अधातुविभक्ति०" इति शास्त्रीयं च । तत्र प्रत्यासन्नत्वाच्छास्त्रीयस्यैव ग्रहणे प्राप्ते नामाधिकारेणैव तदर्थस्य लाभान्नाम्नीत्यतिरिच्यमानमधिकार्थपरिग्रहाय भवत् लौकिकमेव ज्ञापयतीत्याह–संज्ञायामिति । आसन्दीवानिति–आसं आसिक्रियां नन्दति अणि पृषोदरादित्वात् । आसेर्धातोः "कुमुदा०"[5] इति वाऽऽसन्दी वेत्रासनं साऽत्राऽस्ति मध्वादिः ।

'**चर्मण्वत्यष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वत्**' । २ । १ । ९६ ॥ कक्षाशब्दस्येति–कक्षे भवा, कक्षाय हिता वा, कक्षे साधुर्वा, "दिगादिदेहांशाद्यः"[6] इत्यादिभिर्यै कक्ष्या । लवणस्येति–लुनाति वैरस्यं नन्द्याद्यनः । अत एव गणपाठाण्णत्वम् । उदन्वान्–उदन् भावसामर्थ्यान्नलोपो न अन्यथोदभावो निपात्येत ।

'**राजन्वान् सुराज्ञि**' । २ । १ । ९८ । राजन्वान् सुराज्ञीति–शोभननृपतौ वाच्ये । यदा तु राजन्शब्देन चन्द्रोऽभिधीयते तदा राजवान् देश इत्येव । निपातनस्येष्टविषयत्वात् ।

'**नोर्म्यादिभ्यः**' २ । १ । ९९ ॥ दल्मिमानिति–दल्मिरिन्द्रः प्रहरणविशेषो वा सोऽस्याऽस्ति । तिमिमानिति–"ऊर्मितिमि०"[7] इति द्वयोरपि निपातनम्, गरुत्पिच्छं तदस्याऽस्ति । ध्वजित्मानिति–अध्वानं जयति क्विप् पृषोदरादिः । ककुद्मानिति–ककतेर्बाहुलकादुत्प्रत्यये गणे द्विदकारपाठान्मतौ नाऽनुनासिकः । महिष्मा-

---

१ १–१–२७ । २ १–१–२१ । ३ ७–४–१०९ । ४ २–१–९९ । ५ ६–२–९६ ।
६ ६–३–१२४ । ७ उणा ६१३ ।

निति–" नेऽकुमुद० " इति मतौ, ' असिद्धं बहिरङ्ग 'मित्यकारस्याऽसिद्धत्वान्न धुटस्तृतीयः । न च वाच्यं " स्वरस्य परे० " इति स्थानित्वं तस्याऽसद्विधौ " न[3] सन्धि० " इति निषेधात्, कान्तिमतीप्रभृति बन्धुमतीं यावत्सर्वेषु " नवां[4] मतुः " शिम्बीमती " ङीनीवन्धि० ", " गौरादि० " ङी । मधुमती–मध्वादेर्मतुः, हनूमानिति–" अनजिरादि० " इति दीर्घः ।

**' मासनिशासनस्य शसादौ लुग्वा '** । २ । १ । १०० ॥ स्यादाविति, स्यादेरन्यः शसादिर्न सम्भवतीति स्यादावुदाहारि । अथ " संख्यैकार्थाद्० " इति शस्सम्भवस्तदाऽऽदिशब्दस्याऽकलादीनामसम्भवेनाऽनर्थक्यम् । यद्वा मण्डूकप्लुतन्यायेन स्यादिरनुवर्तनीयमिति । आदिशब्दस्य व्यवस्थावाचित्वाद्वा स्यादिरेव लभ्यते । मासशब्दस्य भ्यामि अनेनाऽन्तलोपेऽसिद्धं बहिरङ्गमिति अकारस्थानित्वेन " सो रुः " रुत्वाभावे, " धुटस्तृतीयः " इति दत्वे तु न्यायानित्यत्वाद् माद्भ्यामिति मन्यते भाष्यकृत् । दुर्गस्तु मास्भ्यामिति । निज्भ्यामिति–अत्र निशशब्दे सत्यपि निशाग्रहणं निज्भ्यामित्यस्य सिद्ध्यर्थं, निशशब्दस्य हि भ्यामि निड्भ्यामित्येव भवति । क्विबन्तत्वाद्धातुत्वे " यजसृज० " इत्यादिना षत्वप्राप्तेः ।

**' दन्तपादनासिकाहृदयासृग्यूषोदकदोर्यकृच्छकृतो दत्पन्नसहृदसन्यूषन्नुदन्दोषन्यकञ्छकन् वा '** । २ । १ । १०१ ॥ पादपद्शब्दाभ्यामपि पदा पादेनेत्यादि सिद्धं परं पद्शब्दश्चरणवाच्येव पादशब्दस्य त्वनेकार्थस्यापि पदा पादेनेत्यादिसिद्ध्यर्थं पादशब्दोपादानम् । हृदयहृद्भ्यां सिद्धे हृदयोपादानं ऋषौ विशेषार्थं, हृदः हृदयान् ऋषीन् । हृच्छब्दस्तु ऋषिवचनो नाऽस्ति ।

**' यस्वरे पादः पदणिक्यघुटि '** । २ । १ । १०२ ॥ पादन्तस्य नाम्न इति–पूर्वसूत्रे नाम्न इत्यधिचकाणोऽपि नाऽध्याहारि धातोस्तत्राऽसम्भवात् । अत्र तु धातुसम्भवे नाम्न इति विशेषणं चक्रे । स चेति–अनेकवर्णत्वात् सर्वस्य पादन्तस्य प्राप्नोतीत्याह–निर्दिश्यमानस्येति । त्रिपदी गाथेति " वौ पादः " इति ङीः, द्विपदिकामिति–" संख्या[12]समाहारे च० " इति सः । संख्यादेरित्यकल् अलोपश्च, ननु " अवर्णे[13]वर्णस्य " इति सिद्धेऽकल्सन्नियोगे किमलोपेन ? सत्यम् । स्थानित्वाभावार्थमन्यथा " स्वरस्य[14]० " इति स्थानित्वे पाच्छब्दाभावान्न स्यात् पदादेशः । पादमाचष्टे पादयतीति–अत्र व्यञ्जनान्तः पाच्छब्दो लिख्यते सस्वरे तु णिजि अल्लोपे " स्वरस्य० " इति स्थानित्वे

१ ६–२–७४ । २ ७–४–११० । ३ ७–४–१११ । ४ ६–२–७२ । ५ उणा. ३२५ । ६ ३–२–७८ । ७ ७–२–१५१ । ८ २–१–७२ । ९ २–१–७६ । १० २–१–८७ । ११ ३–४–६ । १२ ३–१–९९ । १३ ७–४–६८ । १४ ७–४–११० ।

पाच्छब्दाभावाद् क्वचिज्ज्ञविकलत्वं स्यात् । तर्हि पादमाचष्ट इति वाक्ये पदः पश्यति यद्दर्शितं तत्कथं ? उच्यते—प्रत्यासत्तिन्यायाद्यस्मिन् प्रत्ययेऽकारलोपस्तस्मिन् यथाऽऽदेशोऽपि प्राप्नोति । अत्र तु णावकारलोपः शसि त्वादेशः । "नैकस्वरस्य"[1] इत्यन्त्यस्वरादिलोपाभावश्च ।

5 'उदच उदीच्' । २ । १ । १०३ ॥ उदयतीति—ननु णिवर्जनं किमर्थम् न च वाच्यं णिवर्जनाभावे उदीचादेशः स्यात्, यतो भवतु उदीचादेशस्तथापि "त्र्यन्त्यस्वरादेः"[2] इति लोपे उदयतीति भविष्यति । अत्रोच्यते, विशेषविहितत्वाल्लुकं बाधित्वा प्रथममेवाऽऽदेशः स्यात्, तथा च 'सकृद्गते स्पर्धे' इति न्यायात् पश्चादपि न ।

10 'अच प्राग्दीर्घश्च' । २ । १ । १०४ ॥ अथ दृषदमञ्चतीति क्विपि टादावनन्तरपूर्वस्वराभावे दीर्घत्वाभावादेकयोगनिर्दिष्टत्वादादेशस्याऽप्यभावात् कथं दृषचेत्यादि सिध्यतीत्याह—अन्वाचयशिष्टत्वादिति । अथ व्यवहितस्याऽपि कथं न भवति ? सत्यम्, प्राक्शब्दस्याऽनन्तरार्थत्वादत एव पूर्वशब्दमपास्य प्राक्शब्दोपादानमनन्तरार्थम् । अनु पश्चादाचयनं मीलनमन्वाचयस्तेन शिष्टोऽन्वाचयशिष्टः । दीर्घो न 15 भवतीति—स्थान्यासन्नत्वात् लृकारः । दध्ययतीति—परत्वात् "समानानां०"[3] इति दीर्घं बाधित्वा गुणः ।

'क्वसुष्मतौ च' । २ । १ । १०५ ॥ पेचुष्य इति—'आगमा यद्गुणीभूता' इति, इट्सहितस्य क्वस उष्, उषिति षकारस्य "नाम्यन्तस्था०"[4] इति सिद्धे प्रक्रियालाघवार्थं षकारकरणम् ।

20 'श्वन्युवन्मघोनो ङीस्याद्यघुटस्वरे व उः' । २ । १ । १०६ ॥ ङीग्रहणात् स्यादावघुट्स्वरे लब्धे स्यादिग्रहणमघुट्स्वरस्याऽप्रत्ययत्वशङ्कानिरासार्थम् शङ्का हि कथम् ? ङीप्रत्ययोऽघुट्स्वरोऽपि प्रत्यय एवेति नाऽऽशङ्कनीयं, ङीग्रहणात् । अथाऽघुडित्यत्र पर्युदासात् स्यादिर्लप्स्य(क्ष्य)ते तन्न, प्रसज्यवृत्तिनिराकरणे हेतोरभावात् । प्रियशुनी—स्त्रियां तु बहुव्रीहौ "नोपान्त्यवतः"[5] इति त्रयाणामपि ङीप्रतिषेधः । 25 उपान्त्यवत्ता च श्वन्शब्दस्य "न वमन्त०"[6] इति प्रतिषेधादितरयोस्त्वनेनोत्वविधानात् । यत्तु प्रियशुनीति दृश्यते । तत्प्रथममेव ङ्यां कर्मधारये । शौवनमिति शुन इदमिति कार्यं विकारे तु "एकस्वरात्"[7] मयट् स्यात् । अतिश्वानीति—अतिक्रान्तः श्वा

१ ७-४-४४ । २ ७-४-४३ । ३ १-२-१ । ४ २-३-१५ । ५ २-४-१३ । ६ २-१-१११ । ७ ६-२-४८ ।

यैरिति वाक्यम् । तत्पुरुषेति "गोष्ठातेः शुनः" इति समासान्तः स्यात् । गोष्ठश्वेनेति–गोष्ठेऽश्वेव "सप्तमी शौण्डाद्यैः" इति समासः, "गोष्ठातेः०" इट् । नन्वत्र समासान्तः समासस्याऽवयवो भवति ततश्चाऽनेनाऽघुट्स्वरादिप्रत्ययस्य व्यवधानात् प्राप्तिरेव नाऽस्तीति किमित्युक्तं ? नकारान्तनिर्देशादिति । अत्रोच्यते, भाष्यकारवचनाद्यथा समासान्तः समासावयवो भवत्येवमुत्तरपदावयवोऽपीष्यते । ततश्च श्वन्ग्रहणेन तदवयवत्वादस्याऽपि ग्रहणमिति, अघुट्स्वरादिप्रत्ययस्य न व्यवधानमतो यदुक्तं नकारान्तनिर्देशादिति तत्साध्वेव । मघवत इति–मघो ज्ञानमस्याऽस्ति मघा वाऽऽराधकाः सन्त्यस्य "ङ्यापो बहुलं०" इति ह्रस्वः । मातरिश्वनेति–मां तरति विच्, मातरि अन्तरिक्षे श्वयति मातरिश्वन् इति साधुः । अत एव निर्देशात् सप्तम्यलुप् ।

'लुगातोऽनापः' । २ । १ । १०७ ॥ क्त्वाटाशब्दयोः केचिदस्त्रीत्वं केचित् स्त्रीत्वं चेच्छन्ति । तत्र स्त्रीत्वेऽनाप इति वचनादनेन लुगभावे क्त्वायाटाया इत्येव भवति, अस्त्रीत्वे त्वनेन लुकि क्त्वः ट्र इत्याद्येव । हाहे देहीति–ओहाङ्क् गतौ हाशब्दं जिहीते गीतकाले कर्तव्यतया प्राप्नोति विच् ।

'ई ङौ वा' । २ । १ । १०९ । ङिर्विभक्तिस्तत्साहचर्यादीकारोऽपि विभक्तिरूप एव ग्राह्यस्तेन औकारस्थानिनि ईकारेऽनेन विकल्पः । ङीप्रत्ययेषु राज्ञीत्यादिषु पूर्वेण नित्यमेव । निरनुबन्धग्रहणाद् वा ।

'षादिहन्–धृतराज्ञोऽणि' । २ । १ । ११० ॥ ताक्ष्ण इति–"सेर्नान्त०" इत्यनेन कारुद्वाराप्राप्तस्य बाधकः "शिवादेरण्" । सामनः–द्वयोरपि देवदत्तार्थे वेत्त्यधीते वेत्त्यर्थे इदमर्थे वाऽण्, "अणि" इत्यनो लोपाभावः । ताक्षण्यः अत्र–"कुर्वादेर्ञ्यः" ।

'न वमन्तसंयोगात्' । २ । १ । १११ ॥ अत्र वकारमकारयोः संयोगविशेषणत्वेन "विशेषणमन्तः" इति तदन्तत्वे लब्धेऽन्तग्रहणं स्पष्टार्थम्, अन्यथा वमसंयोगादिति समस्तनिर्देशेऽनयोरेव संयोगादित्याशङ्का स्यात् । वमः संयोगादिति व्यस्तनिर्देशेऽपि वकारमकाराभ्यां परो यः संयोगस्तस्मादित्यपि प्रतीयेतेति न्यासकारः ।

'हनो ह्नो घ्नः' । २ । १ । ११२ ॥ प्लीह्न इत्यादिषु, हन इति हन्तेरनुकरणाद् 'अर्थवद्ग्रहण' इति न्यायाद्वाऽन्यस्य न भवति ।

'लुगस्यादेत्यपदे' । २ । १ । ११३ ॥ अपद इति, अदेतोर्विशेषणम्, दण्डाग्रमिति अत्र "वृत्त्यन्तोऽसषे" इति प्रतिषेधादग्रे इत्यस्य पदत्वाभावात् कथं

---

१ ७–३–११० । २ ३–१–८८ । ३ २–४–९९ । ४ ६–१–१०२ । ५ ७–४–५२ । ६ ६–१–१०० । ७ ७–४–११२ । ८ १–१–२५ ।

-सा ऽकारलोपः ? सत्यम्, सावधारणव्याख्यानाद् अपदे एवेति, अत्र तु वृत्तेः पूर्वं पदत्वमासीदिति। तर्हि प्रायणमित्यत्र 'गति कारकेति' न्यायादविभक्त्यन्तेनाऽयनेत्यनेन समासे प्राप्नोति, सत्यम्; अपद इत्युत्तरपदमपि गृह्यते। "ते[1] लुग् वा" इति उत्तरशब्दलोपादिति। यथा "वेदूतोऽनव्यय०" इत्यत्र।

5 '**ङित्यन्त्यस्वरादेः**'। २। १। ११४॥ सति यस्मिन् यस्मात् पूर्वमस्ति परं नाऽस्ति सोऽन्तस्तत्र भवोऽन्त्यः। मुनौ अत्र सर्वत्र "इवर्णादेरस्वे[3]०" इति प्राप्ते परत्वादनवकाशत्वाच्च ङित्वस्य लुगेव। उपसरज इति–उपसरदेशजातः। मन्दुरजः–मन्दुरे मन्दुरायां वा जातः, "ङ्यापो[4] बहुलं नाम्नि" इति ह्रस्वः।

'**अवर्णादश्नोन्तो वाऽतुरीङ्योः**'। २। १। ११५॥ अवर्णादिति–ननु 10 तुदन्ती भान्तीत्यादौ ईङ्योरनपेक्षत्वेन वर्णमात्राश्रयत्वेन चाऽन्तरङ्गत्वात् "लुगस्या[5]देत्यपदे" इति "समानानां[6]०" इति च अकारलोपदीर्घत्वयोः कृतयोरवर्णात् परत्वं शतृप्रत्ययस्य नाऽस्तीति तत्कथमीकारावर्णशतृप्रत्ययङीभावापेक्षत्वेन बहिरङ्गोऽन्त इत्यादेशो भूतपूर्वतयेति, 'वार्णात् प्राकृतं बलीय' इति तु नेहोपतिष्ठते भिन्नकालत्वात्। तथाहि–ईङ्योः सद्भावेऽन्तादेशः प्राप्नोति लोपदीर्घौ तु ततः प्रागेव। यत्र हि वार्ण-15 प्राकृतयोर्युगपत्प्राप्तिः कारक इत्यादौ तत्रेदमुपतिष्ठत इति।

'**दिव औः सौ**'। २। १। ११७॥ द्यौरिति, अत्र "उः पदान्ते०" इति प्राप्तोऽप्यचरितार्थत्वात् साविति विशेषविधानाद्वा औरेवाऽनेन प्रवर्तते, न तूकारः; अक्षद्युरिति–एकदेशमिति प्राप्तिः।

'**उः पदान्तेऽनूत्**'। २। १। ११८॥ दिवाश्रयः अन्तर्वर्तिनीविभक्तिमाश्रित्य 20 पदत्वेऽनेनोत्वे कथं दिवाश्रय इत्यादीत्यत आह–अकारागमे भविष्यतीति, अकारागमे चाऽकारागमकरणसामर्थ्यादेव उर्न। विभक्तेः पूर्वं वाऽकारागमे पदान्तत्वाभावादेव वा। वृत्तिविषय इति–समासविषये प्रयुज्यते केवलस्तु न प्रयुज्यत इत्यर्थः।

प्रावृड्जातेति[7]।

इति श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासने द्वितीयस्याऽध्यायस्य प्रथमपादः समाप्तः।

मङ्गलमस्तु लेखकपाठकयोः।



---

१ ३-२-१०८। २ २-४-९८। ३ १-२-२१। ४ २-४-९९। ५ २-१-११३। ६ १-२-१।
७ पादपरिसमाप्त्यर्थे श्लोकः ५।

'क्रियाहेतुः कारकम्'। २। २। १। क्रियायाः कारकमित्युक्ते क्रियायां कर्तुर्मुख्यत्वात्तस्यैव कारकत्वं स्यात्। गौणमुख्ययोरिति न्यायात्। हेतुः कारकमित्युक्ते तु द्रव्यस्य मुख्यत्वात्तद्धेतोरेव कटं करोतीत्यादौ कारकं स्यान्न तु चैत्रो यातीत्यादौ। कारकः शब्दः कर्तृमात्रपर्यायः। कर्त्रादीत्यत्र कर्तृशब्दस्तु कर्तृविशेषवचनस्तेन कर्त्रादिकारकसंज्ञमिति विशेषणविशेष्यभाव उपपन्न इति, अन्यथा वृक्षो वृक्षसंज्ञ 5
इतिवदनुपपन्नः स्यादिति। तच्च द्रव्याणामिति द्रव्याणां सामर्थ्यं कारकमिति सम्बन्धः। द्रव्यस्य तु कारकत्वे प्रतिबन्धकमन्त्रादिसन्निधानासन्निधानाभ्यां दहनादेर्दाहादिक्रियोत्पत्त्यनुत्पत्ती न स्याताम्। तत्स्वरूपस्य सर्वदा विद्यमानत्वादुत्पत्तिरेव स्यात्, तस्माच्छक्तिरेव कारकमिति श्रेयः। चैत्रादेस्तु कारकत्वं शक्तिशक्तिमतोरभेदनयेन। स्वपराश्रयेति–अयमर्थः–त्रयी क्रिया सा च चैत्र आस्ते इति स्वाश्रिता, कटं करोतीति 10
पराश्रिता; अन्योन्यमाश्लिष्यत इत्युभयाश्रिता। क्रियाकाल इति–क्रियायाः शक्तिं प्रति ज्ञापनकालस्तत्र क्रियाकाले समवहितसकलोपकरणे शक्तिरभिव्यज्यते–प्रकटीक्रियते अवगता भवति। अभिव्यज्यते इति कर्मकर्तरि कर्मणि वा यथा क्रियया कर्त्र्या शक्तिः प्रकाश्यते प्रकटीक्रियते। अभिव्यनक्ति प्रकटीकरोति क्रियाकर्त्री शक्तिः सैवं विवक्ष्यते नाऽहमभिव्यनज्मि किन्तु स्वयमेवाऽभिव्यज्यते शक्तिः। हेत्वादेरि- 15
त्यत्राऽऽदिशब्दात्सम्बन्धस्य सहार्थस्य चाऽकारकत्वं तेन विद्ययोषित इत्यादौ "कारकं कृता" इति न समासः, बहूनामिदं वस्त्रमित्यादौ "बह्वल्पार्था०" इति शस् मा भूत्।

'स्वतन्त्रः कर्ता' २। २। २। अत्र कारकत्वादेव स्वातन्त्र्ये लब्धे पुनः स्वतन्त्रश्रुतिर्नियमार्था तेन स्वातन्त्र्यमेव यस्य तस्य कर्तृसंज्ञा, न तु पारतन्त्र्य- 20
सहितस्वातन्त्र्ययुक्तस्य। अपरायत्ततयेति–प्राधान्यं च क्रियाहेतुभूतयाऽपरायत्ततया। यद्वा, सामानाधिकरण्यं प्राधान्येन किं रूपेणाऽपरायत्ततया। प्रेषितः करोति–प्रयोज्यावस्थायामपि स्वातन्त्र्यस्याऽहानेः कर्तृत्वम् "यः क्रियां कर्मकर्तृस्थां, कुरुते मुख्यभावतः। अप्रयुक्तः प्रयुक्तो वा, स कर्ता नाम कारकम्"॥ १॥ आत्मप्रधानः, यस्याऽगुणभावेन धातुना व्यापार उच्यते सर्वोऽसौ स्वतन्त्र इति, रूढिश- 25
ब्दोऽयम्। यत्रैव करणादीन्यप्रधानानि सन्ति, देवदत्तः स्थाल्यां काष्ठैरोदनं पचतीत्यादौ तत्रैव कर्तृसंज्ञेत्येवं न किन्तु तदभावेऽपि तेनाऽऽस्ते शेत इत्यादावपि।

'कर्तुर्व्याप्यं कर्म'। २। २। ३॥ कर्तुरित्यत्र प्रथमव्याख्याने व्याप्ये-

---

१ ३-१-६८। २ ७-२-१५०।




त्यस्य कृत्यप्रत्ययान्तस्य योगे "[1]कृत्यस्य वा" इति कर्तरि षष्ठी, ननु यदा द्वैतीयी-
कव्याख्यानं कर्तुः कर्म व्याप्यमिति क्रियते, तदा कर्मणा योगे कर्तृशब्दात् केन सूत्रेण
षष्ठी प्रावर्तिष्ट ? उच्यते कृच्छेषा उणादय इति कृत्वा कर्मशब्द औणादिकप्रत्ययान्तो-
ऽपि कृदन्तस्ततस्तद्योगे "[2]कर्तरि" षष्ठी। विकार्यमिति–विकार्यते स्वभावोच्छेदेना-
5 ऽन्यथात्वं लभ्यत इति। विकुरुत इति अन्यथा विकृतिमनुपगच्छतो वज्रस्येव विका-
र्यत्वायोगः स्यात्। आभासमुपगच्छतीति–तथाऽऽभासाऽयोग्यस्य परमनिःकृष्टपरमा-
ण्वादेरिवाऽऽभास्यत्वविरहः स्यादिति व्याप्यस्याऽऽभासगमनमवान्तरव्यापार इति।
विषं भक्षयतीति–यदा भक्षणार्थमिति। चतुर्द्धा शास्त्रप्रवृत्तिस्तद्यथा उद्देशो विभागो
लक्षणं परीक्षा चेति द्योतकराचार्यः। ज्ञातं सद्भक्ष्यते तदैवाऽनिष्टम् यदा तु राजभी-
10 तेन व्याध्यतिक्रान्तेन वा भक्ष्यते तदा इष्टमेव। गां दोग्धि पय इति–अन्तर्भूतण्यर्थाः
सकर्मकाः सर्वे तेनाऽयमर्थो गौः कर्त्री पयः कर्म मुञ्चति, तां गां मोचयतीति। गां
स्रावयति पय इति–"गतिबोधा०" इत्यत्र बहुवचनादन्येषामप्यणिकर्तुः कर्मत्वं, तेन
गवादीनामपि कर्मत्वं युक्तम्। नाऽत्र नियमः प्रवर्तते। एतेऽपीदृशा अपि द्विकर्मका
उच्यन्त इति। पौरवं गां भिक्षते, अस्ति राजा पुरुर्नाम, तदपत्यं "[3]पुरुमगध०" इत्यणि
15 पौरवोऽयं च याच्यमानो हृष्टो म्लानो वा भवतीति विकार्यं कर्म। भिक्षते कोऽर्थो
याचनापूर्वकं गां दापयति वियोजयति वेत्यर्थः। गामवरुणद्धीति–व्रजं सेवमानां सेव-
यतीत्यर्थः। पृच्छति कथापयति, वृक्षमवचिनोतीति–वृक्षः फलानि वियुङ्क्ते तं वियोजय-
तीत्यर्थः। अनुनयार्थ इति–तेन भिक्ष्यर्थमध्ये याचिद्वाराऽनुनयार्थानां न ग्रहः। भिक्षि-
र्याच्ञायामेव याचिस्तूभयार्थ इति। जयति–मोचयति। कर्षति–वियोजयति, मथ्नाति
20 वियोजयति, नयति प्रापयति, हरति वियोजयति प्रापयति वा, मुष्णाति कोऽर्थः ?
परस्वामिकं सन्तमात्मस्वामिकं करोति। गृह्णाति–त्याजयति। तन्दुलानोदनं पचति,
तन्दुलान् विक्लेदयन् विकुर्वन्नोदनं करोतीत्यर्थो धातूनामनेकार्थत्वादिति।

"येनाऽपविद्धसलिलस्फुटनागसद्मा, देवासुरैरमृतमम्बुनिधिर्ममन्थे।
व्यावर्तनैरहिपतेरयमाहिताङ्कः, खं व्यालिखन्निव विभाति स मन्दराद्रिः॥१॥"

25 (किरा. ५. श्लो. ३०)

नेतव्या वा ग्राममजेति–अजादेः प्राधान्यान्नेतुश्च पूर्वं तत्रैव क्रियाप्रवर्तनादन्त-
रङ्गत्वाच्च तत्रैव प्रधाने कर्मज इति। केचिदाहुर्नाऽमी नयत्यादयो द्विकर्मकाः अन्यक-
र्मकत्वात्तथाहि–अजां नयति ग्राममजां गृहीत्वा ग्रामं यातीति ह्यत्राऽर्थः। नयतिस्तु

---

१ २–२–८८। २ २–२–८६। ३ ६–१–११६।

प्राप्तिमात्रवाची । गम्यमानक्रियापेक्षयाऽपि कर्मत्वं दृश्यते, यथा प्रविश पिण्डीं द्वारमिति भक्षणक्रियापेक्षया पिधानक्रियापेक्षया चेति । नैवम् एवं सति अजा नीयते ग्राममित्यत्र कर्मण्युत्पद्यमानेनाऽऽत्मपदेनाऽजा कर्मणोऽभिधानं न प्राप्नोति, यतो गृह्णातेरजा कर्म न नयतेरिति । तस्मादन्यकर्मत्वमजाया नैष्टव्यमिति । अकर्मणामिति–नित्याकर्मकाणामविद्यमानकर्मकाणां वेत्यर्थः । प्रधान एव कर्मणीति–कर्तृकर्मणि कर्मजः 5 प्रत्ययो भवतीति सम्बन्धः, प्राधान्यं च तस्य "[1] गतिबोधाहारार्थ॰" इति कर्मसंज्ञाया विधीयमानत्वेन कृत्रिमत्वात् कर्तुः प्रथमप्रवृत्तिविषयत्वाद्वा । प्रधान एवेति–अन्यस्त्वप्रधानेऽपीच्छति तन्मतोपेक्षणाय अत्रैवकारः । आसयति मासं मैत्रमिति–आस्ते मासं मैत्रस्तमासीनमपरः प्रयुङ्क्ते, मासस्य "[2] कालाध्वभाव॰" इति कर्मसंज्ञा । कालाध्वभावदेशैश्च सर्वेऽपि धातवः सकर्मका इत्यन्यकर्मापेक्षयाऽकर्मका इह ग्राह्याः । 10 बोधयति शिष्यं धर्ममित्यत्र वाक्यस्य धर्मप्रतिपादनपरत्वेन धर्मस्य प्राधान्यं शिष्यादेर्गुणभावः । शिष्यादिसंस्कारपरायां तु प्रवृत्तौ शिष्यादेः प्राधान्यं धर्मस्य गुणभाव इत्युभयत्र कर्मजः प्रत्यय इति । पाठयति शिष्यं ग्रन्थमिति–अर्थस्य शब्देन प्रतिपाद्यत्वाच्छब्दस्य प्राधान्यं, शब्दस्याऽर्थपरत्वादर्थस्यैव प्राधान्यमिति समर्थयन्ते गरीयांसो विद्वांसः । पयसा ओदनमिति–अत्र पय इति न व्याप्यमोदनापेक्षयाऽन्या- 15 ङ्गत्वात्, यच्चाऽनन्याङ्गं तदेव व्याप्यमिति ।

'वा कर्मणा–मणिक्कर्तर्णौ' । २ । २ । ४ ॥ नन्वेवं तर्हि गत्यर्थादीनामप्यविवक्षितकर्मत्वे विकल्पः प्राप्नोतीत्याह–गत्यर्थादीनामिति ।

'गतिबोधाहारार्थशब्दकर्मनित्याकर्मणामनीखाद्यदिह्वाशब्दायक्रन्दाम्' । २ । २ । ५ ॥ न विद्यते कर्म येषां तेऽकर्माणो नित्यमकर्माणो नित्याकर्माण 20 इति, विस्पष्टपटुवत्समासस्ततो द्वन्द्वात्षष्ठीबहुवचनम् आहारस्य सुप्रसिद्धत्वाद्गतिबोधयोः स्वरूपमाह । गतिर्देशान्तरप्राप्तिरिति । बुध्यते शिष्यो धर्मम्–अत्र हि बुध्यादयश्चक्षुरादीन्द्रियसाधनज्ञानविशेषस्याऽप्रतिपादनात्सामान्यबोध एव वर्तन्त इत्यर्थः । दर्शयति रूपतर्कमिति–रूपं तर्कयतीति "[3] कर्मणोऽण्" इत्यणि रूपतर्कः । कर्षेणाऽऽप्यत इति "[4] भुजिपत्यादिभ्यः॰" इति कर्मण्यनटि, "[5] पूर्वपदस्थः॰" इति णत्वे, प्रज्ञादि- 25 त्वात्स्वार्थेऽणि कार्षापणः । अत्र दृश्यादीनां चक्षुरादिसाधनजनितज्ञानविशेषबोधार्थतेत्यर्थः । अन्ये तु इति ते हि गत्यादिसूत्रे दृशिमुपादाय बोधार्थत्वेनैव सिद्धे दृशिग्रहणाद्दृशेरेव विशेषबोधार्थस्य परिग्रहो नाऽन्येषामित्याचक्षते । उत्पलमिति–उत्पीयते

---

१ २–२–५ । २ २–२–२३ । ३ ५–१–७२ । ४ ५–३–१२८ । ५ उणा ४७४ ।

भ्रमरैरिति "मुरलोरल०"[1] इति निपातनम् । खादयत्यपूपमिति–अत्र "चल्याहारार्थेङ्०"[2] इति परस्मैपदम् । आदयत्योदनमिति–अत्र फलवत्त्वाभावात् "परिमुहा०"[3] इति नाऽऽत्मनेपदम् । मतान्तरेण वा प्रयोगोऽयम् । ते हि "परिमुहा०"[3] इत्यत्राऽदधातुमपठन्त आत्मनेपदं नेच्छन्ति ।

5 'भक्षेर्हिंसायाम्' । २ । २ । ६ ॥ भक्ष्यन्ते यवं बलीवर्दा यवानदन्तो, यवानां विनाशत्वेन हिंसा । ननु हिंसा हि प्राणव्यपरोपणलक्षणा सा च प्राणिन्येव चेतने सम्भवति कथमचेतने सस्ये । नहि तत्राऽऽयुरिन्द्रियबलोच्छ्वासलक्षणा रसमलधातूनां परिणतहेतवः प्राणाः सन्तीति ? अत आह–वनस्पतीनामिति–वृद्ध्यादिमत्त्वेनेति–वनस्पतयः सचेतना वृद्ध्यादिमत्त्वात् । यो यो वृद्ध्यादिमान् स स सचेतनः, यथा पुरुषः ।

10 वृद्ध्यादिमन्तश्चैते तस्मात् सचेतना इति । पञ्चावयवमनुमानमिति । पूर्वपक्षहेतुदृष्टान्तोपनयनिगमनस्वरूपम् । भक्षयति पुत्रानिति–ननु पुत्रभक्षणस्य हिंसात्मकत्वाद् भक्षयति पुत्रान् गार्ग्येति कथं कर्मकत्वाभाव इत्याह–न ह्यत्र गार्गी स्वयं पुत्रान् भक्षयति, न च तामन्यस्तत्र प्रयुङ्क्तेऽपि त्वेवमाक्रोशति भक्षय पुत्रानिति भक्षिर्न हिंसाविषयः ।

'वहेः प्रवेयः' । २ । २ । ७ । सूत्रतात्पर्यमाचष्टे, तत्र वहतिः प्राप्त्यर्थो

15 यथा वहन्ति बलीवर्दा देशान्तरं प्राप्नुवन्तीति । प्रापणार्थो यथा–ग्रामं भारं वहति बलीवर्दः, ग्रामं प्रापयतीति; अत्राऽपि प्रापणोपसर्जनं प्राप्तिरस्त्येव । अकर्मको यथा नदी वहति स्यन्दत इत्यर्थः । अनेकार्थत्वात् प्राप्त्यर्थो यद्वा प्रापणायां उपसर्जनीभूता प्राप्तिरप्यस्तीति गत्यर्थत्वात् प्राप्तिः । वाहयिता भारं बलीवर्दानिति–अत्र बलीवर्दशब्दाद् "वैकत्र द्वयोः"[4] इति प्राप्तषष्ठीविकल्पाद् द्वितीया तद्विमुक्तपक्षे भारस्येत्यत्र

20 "कर्मणि कृतः"[5] इत्यनेन षष्ठी, द्वितीयप्रयोगे त्वेतद्विपर्ययः । "वैकत्र द्वयो[4]"रिति षष्ठीप्रवृत्त्युदाहरणं तु वाहयिता भारस्य बलीवर्दानामिति गम्यमपि ज्ञेयम् । अत्र तु निष्प्रयोजनत्वान्न दर्शितम् ।

'हृक्रोर्नवा' । २ । २ । ८ ॥ हृसाहचर्यात् कृधातोरपि भ्वादेरेव गृह्यते तेन कृत् विक्षेपे, 'कृंग्ट्' हिंसायामित्यनयोर्व्यवच्छेदः ।

25 प्राप्ते चेति–यदा हरतिर्गतौ वर्ततेऽभ्यवहारे वा, करोतिश्च वल्गनादावकर्मकः । विकुर्वन्तोऽसैन्धवा इति सिन्धुषु भवाः "सिन्ध्वपकरात्काऽणौ"[6] इत्यण् शब्दकर्मकश्च तदा पूर्वेण प्राप्ते, यदा तु हरतिः स्तेयादौ वर्तते करोतिश्च सकर्मको भवति तदाऽप्राप्ते

---

१ उणादि ४७४ । २ ३–३–१०८ । ३ ३–३–९४ । ४ २–२–८५ । ५ २–२–८३ । ६ ६–३–१०१ ।

विशेषानुपादानादुभयत्र विकल्पोऽयमिति, कारयिता कटस्य देवदत्तं देवदत्तेन वेति । प्रथमप्रयोगे देवदत्तशब्दाद्द्वितीयप्रयोगे तु कटशब्दाद् "वैकत्र[1] द्वयोः" इत्यनेन प्राप्तषष्ठीविकल्पाद् द्वितीया, तद्विमुक्तकर्मणि "कर्मणि[2] कृतः" इत्यनेन षष्ठी यद्यत्र "वैकत्रे[1] द्वयोः" इत्यनेन षष्ठीप्रवृत्तिः स्यान्न विकल्पस्तदा द्वितीयकर्मणि "कर्मणि कृतः[2]" इत्यनेन नित्यं षष्ठी स्यात्, कर्तृप्रधानदेवदत्तशब्दात्तु "द्विहेतोरस्त्र्यणकस्य[3] वा" इत्यनेन प्राप्तकर्तृषष्ठीविकल्पात्तृतीया । "वैकत्रद्वयो[1]"रित्यस्य "द्विहेतोरस्त्र्यणकस्य वा[3]" इत्यस्य च प्रवृत्त्युदाहरणं, कारयिता कटस्य देवदत्तस्य कटं देवदत्तस्य वेति गम्यमपि ज्ञेयमत्र तु निष्प्रयोजनत्वान्न दर्शितम् ।

**'दृश्यभिवदोरात्मने'** । २ । २ । ९ ॥ दर्शयते राजेति–अत्र । "अणिक्कर्म[4]०" इत्यात्मनेपदम् । अभिवादयते गुरुं शिष्यं शिष्येण वा मैत्र इति । फलविवक्षायामात्मनेपदम् ।

**'नाथः'** । २ । २ । १० ॥ कर्म वा भवतीति–कर्तुर्व्याप्यमित्यनेन नित्यं प्राप्ते पक्षे निषेधः साध्यः । आत्मनेपदविषयत्वं चेति–कर्त्रपेक्षयेदमुक्तं, भावकर्मणोस्तु सर्वधातूनामप्यात्मनेपदमस्त्येव । सर्पिषो नाथते इत्यादिषु सर्वेषु कर्माभावपक्षे "शेषे[5]" इत्यनेन षष्ठी ।

**'स्मृत्यर्थदयेशः'** । २ । २ । ११ ॥ सामान्येन चिन्तनार्थ उक्तोऽपि स्मृतिधातुरनुभूतस्याऽर्थस्य विशिष्टे चिन्तने वर्तमानो गृह्यते । एवंविधाश्चाऽध्येत्यादयोऽपि गृह्यन्ते । तेन मनसा चिन्तनार्थानां समीक्षादीनां व्युदासः । लोकानामीष्ट इति–व्यापारेषु नियुङ्क्ते स्वायत्तीकरोतीत्यर्थः ।

**'कृगः प्रतियत्ने'** । २ । २ । १२ ॥ प्रतिशब्दः पुनरर्थे "अव्ययं[6] प्रवृद्धादिभिः" सः । सतो गुणाधानायेति–ननु यत्नद्वये सति पुनर्यत्न इत्युपयुज्यते तत्कथमत्र प्रतियत्नः ? उच्यते–प्रथमं तावदर्थस्याऽऽत्मलाभाय यत्नो भवति, लब्धात्मनो यो यत्नोऽधिकान् गुणानुत्पादयितुं परिपूर्णस्य गुणस्य वा तादवस्थ्यं रक्षितुं स प्रतियत्नः । कटं करोतीति–अभूतः सन्निर्वर्त्यः कटोऽत्र, यत्र तु वर्णिकया रक्तं कटं करोति तत्राऽपि विकार्यमेव कर्म न प्रतियत्नः, उपपूर्वस्य करोतेः प्रतियत्नविषयत्वाद् "गन्धना[7]०" इत्यात्मनेपदं चोपपूर्वस्यैव । अत एव मूलोदाहरणेष्वप्युपपूर्व एव दर्शितः । एधोदकस्येति–एधाश्च उदकानि च, "अप्राणिपश्वादेः[8]" इत्येकत्वम् ।

---

१ २-२-८५ । २ २-२-८३ । ३ २-२-८७ । ४ ३-३-८८ । ५ २-२-८१ । ६ ३-१-४८ । ७ ३-३-७६ । ८ ३-१-१३६ ।

'रुजार्थस्याज्वरिसन्तापेर्भावे कर्तरि' । २ । २ । १३ ॥ रुजौंत् भङ्गे इत्यस्माद्भिदादित्वादङि रुजा । भावश्चेदिति–साध्यरूपस्य भावस्य कर्तृत्वानुपपत्तेः सामान्यशब्दोऽपि भावशब्दः सिद्धरूपे भावे वर्तत इति तात्पर्यार्थः । चैत्रं रुजति, अत्यशने वात इति–अत्र योऽत्यशनरूपो भावो न स कर्ता यस्तु वातरूपः कर्ता
5 स द्रव्यं न भावः ।

'जासनाटक्राथपिषो हिंसायाम्' । २ । २ । १४ । 'नटण्' अवस्यन्दने इति, अवस्यन्दनं हिंसाभेदः । न तु णट् नृत्ताविति । अत्राऽप्यहिंसार्थत्वादित्येव हेतुः । आकारोपान्त्यनिर्देश इति–ननु जासनाटक्राथेत्याकारः किमर्थो यतो जसनटक्रथेति धातवः पठ्यन्ते, तेषां निर्देशे तथैव निर्देष्टव्यम् । अथ ण्यन्तनिर्देश-
10 स्तर्हि जासिनाटिक्राथीति भवितव्यमित्याह–यत्राऽऽकारश्रुतिस्तत्रेति एवं क्राथिर्घटादिरिति–एवममुना प्रकारेणाऽपरमपि निर्णीयते, किं तत् ? क्राथिर्घटादिर्गृह्यते, न तु क्रथ् अर्दिण् हिंसायामिति, यौजादिक इति वैयाकरणानां मतम् । धातुपारायणकारैस्तूपलक्षणत्वात् यौजादिकोऽपि । ननु यथा घटादेर्ह्रस्वः पक्षे निषिध्यते । तथा दस्युमुदजीजसिदित्यादौ "उपान्त्यस्या॰"[1] इत्यस्याऽपि किं न निषेधः ? सत्यम् । यस्मिन्
15 प्राप्त एवेति न्यायाद् "घटादेः॰"[3] इत्यस्यैव निषेधः । अभावकर्तृकार्थमिति–ननु हिंसाया रुजारूपत्वात् "रुजार्थस्या॰" इत्यनेनैव कर्मविकल्पो भविष्यति किमनेनेति ? । अथ जासनाटक्राथेत्याकारश्रवणार्थमिदं सूत्रं विधीयते तदा पिष्ग्रहणमत्राऽनर्थकं स्यात्तस्मात् पूर्वेणैव सिद्धेऽभावकर्तृकार्थमिति सिद्धम् ।

'निप्रेभ्यो घ्नः' २ । २ । १५ ॥ संग्रहार्थमिति, यद्येतदर्थं तर्हि न प्रदेयं
20 यत्राऽपि व्यस्तविपर्यस्तौ निप्रौ भविष्यतस्तत्राऽपि नेः प्राद्वा परो हन्नस्तीति ? उच्यते, तर्ह्यन्योपसर्गपूर्वस्य हन्तेर्वा कर्मसंज्ञानिवृत्त्यर्थम् । तेन चौरं विप्रहन्ति विनिहन्ति वेत्यादौ पूर्वेण नित्यं कर्मसंज्ञा । प्रहन्तीति–अत्र म्नामिति–बहुवचनाद् हन इत्यनेन णत्वाभावः ।

'विनिमेयद्यूतपणं पणव्यवहोः' । २ । २ । १६ ॥ शतं पणायतीति–
25 प्रकृतिग्रहणे स्वार्थिकप्रत्ययान्तानां ग्रहणमिति सूत्रे पणेत्युक्तेऽपि पणायतेरिह ग्रहः । आत्मनेपदं तु प्रति अयं न्यायोऽनित्यः । इदं च कुतो लभ्यते ? "कमेर्णिङ्"[4] इत्यत्र णिङिति ङकारोपादानात् । गोपायतीत्यर्थ इति अनेकार्थत्वाद्धातूनाम् ।

---

१ ४-२-३५ । २ ४-२-२४ । ३ २-२-१३ । ४ ३-४-२ ।

'न' । २ । २ । १८ ॥ सन्धिना विजिगीषत इति समर्थेन सह सन्धिं कृत्वाऽन्येषां भूमिं विजिगीषत इत्यर्थः । अत्र क्रियेत्यादि–क्रिया द्यूतरूपा तत्साधनं च अक्षा इत्यर्थः । शतस्य सुदेवमिति–अत्र सु इति निपातान्तरं नोपसर्गः, अत एव सुस्थितं दुःस्थितमित्यादौ षत्वं न भवति "स्थासेनि०" इत्यनेन, यथा च सु इतिनिपातान्तरं नोपसर्गस्तथा दुरित्यपि । 5

'करणं च' । २ । २ । १९ ॥ चकारस्याऽन्यत्समुच्चेतव्यं नाऽस्तीति करणमेव प्रतीयते । करणस्य कर्मसंज्ञायामप्राप्तायां विधीयमानायां निर्वर्त्यादयो धर्मा न चिन्त्या असम्भवात् । युगपद्व्रजतीति–फलं भवतु मा वा संज्ञाद्वयं तु सर्वप्रयोगेषु वेदितव्यम् । ननु संज्ञाद्वयं युगपन्निरवकाशमिति न वाच्यम् अक्षैर्देवयते इत्यत्र चरितार्थत्वात् । करणं वेत्येवेति–न च विकल्पेऽपि युगपत्संज्ञाद्वयं भविष्यतीति वाच्यं, 10 विकल्पस्य पाक्षिकप्रवृत्तिनिवृत्तिफलत्वात् । प्रतिकार्यमिति–एकस्याऽपि कर्मणः करणस्य वा कार्यं कार्यं प्रति संज्ञाभिधायकानि सूत्राणि भिद्यन्त इत्यर्थः ।

'उपान्वध्याङ्वसः' । २ । २ । २१ ॥ उपादिभिर्द्वन्द्वं कृत्वा ततस्ते पूर्वे यस्मात् स चाऽसौ वस् चेति बहुव्रीहिगर्भो विशेषणसमासः । शब्दशक्तिप्रामाण्यादन्वादिपूर्वो वसतिः स्थानार्थमाचष्टे, तत्साहचर्यादुपपूर्वस्याऽपि स्थानार्थस्य परिग्रहो न 15 तु भोजननिवृत्तिवचनस्येत्यत आह–अन्वादिसाहचर्यादिति–स्थानार्थद्योतकत्वादुपशब्दोऽपि स्थानार्थ इत्युक्तं स्थानार्थस्येति ।

'वाऽभिनिविशः' । २ । २ । २२ ॥ अभिः पूर्वो यस्मान्नेः सोऽभिपूर्वः, अभिपूर्वश्चाऽसौ निश्चाऽभिनिस्ततः परो विट् तस्य "मयूरव्यंसके०" इति पूर्वपरयोर्लोपः । अभेर्निस्तेन युक्तो विडिति वा, न तु द्वन्द्वः । अभिश्च निश्चेत्येवंरूपे द्वन्द्वे 20 हि अभिनिशब्दयोः प्रत्येकमभिसम्बन्धः स्यात् यथा–"उपान्वध्याङ्वसः" इत्यत्र । व्यवस्थितविभाषेयमिति–नाऽत्र वाशब्दो विकल्पार्थो येन समकक्षतया द्वितीयासप्तम्यौ, किं तर्हि ? प्रयोगव्यवस्थयेति ।

'कालाध्वभावदेशं वाऽकर्म चाकर्मणाम्' । २ । २ । २३ ॥ अध्वा गन्तव्यमिति–गमनार्हं तेनाऽध्वशब्दाभिधेयस्याऽध्वनः कर्मसंज्ञा न भवति । नह्यसावध्व- 25 विशेषः क्रोशयोजनादिवद्गमनमर्हति, यद्वाऽर्थप्रधानोऽयं निर्देशस्तेन कालाध्वभावदेशानां साक्षात् प्रयोगे न भवति । अपि तु, तदर्थप्रतिपादकशब्दप्रयोगे । भावः क्रियेतिक्रिया घञादिवाच्या सिद्धताख्या न तु साध्यमानेत्यर्थः । पर्वतादिरिति–आदिशब्दात्

१ २–३–४० । २ ३–१–११६ । ३ २–२–२१ ।

खेटकर्वटमडम्बादि गृह्यते । गोदोहमास्ते अत्र सामीप्यक आधारः, यदा तु विशिष्टः कालो विवक्ष्यते तदा नैमित्तिकोऽपि । एवमोदनपाक इत्यत्राऽपि । मासं पचतीति-अकर्मणामित्यत्र नित्याकर्मणामविवक्षितकर्मणां च सामान्येन ग्रहणमित्यविवक्षित-कर्मकानुदाहरति । इदं गोदोहमासितं, अत्र बाहुलकात् षष्ठीप्राप्तिं प्रति न कर्मता ।
5 तेन "[१]कर्मणि कृतः" इत्यनेन न षष्ठी । अत्राऽऽधारे क्तः प्रत्ययः, कथमिति ? पचादीनां सकर्मकत्वान्न प्राप्नोतीत्याशङ्कार्थः । पचत्योदनं मासमित्यादि-सर्वेऽप्यमी धातवः प्राप्त्युपसर्जने स्वार्थे वर्तन्ते ततो मासादिप्राप्येत्यादिरर्थो भवति द्विकर्मकता च । अनेनेति न नूत्तरेण "[२]कालाध्वनोर्व्याप्तौ" इत्यनेन कर्मण्यकर्मणि च द्वितीया भविष्यति किमनेन विधानसूत्रेणेत्याह-अनेन कर्मसंज्ञायामित्यादि-कालाध्वपेक्षयेद-
10 मुक्तं भावदेशयोस्तु द्वितीयार्थमिति तन्मते तु भावस्यैव द्वितीयार्थं न तु देशस्य, ते हि देशग्रहणं न कुर्वन्तीति । कालाध्वनोर्व्याप्ताविति चेति-यद्यत्यन्तसंयोगे काला-ध्वभावेति प्रवर्तते तर्हि "[२]कालाध्वनोर्व्याप्तौ" इति क्व प्रवर्त्स्यतीत्याह कालेति । "[३]कालाध्वनो०" रिति-गुणद्रव्ययोगे क्रियायोगे तु "[४]कालाध्वभावदेशं वा०" प्रवर्तत इत्यनयोस्तन्मते विभागः ।

15 'साधकतमं करणम्' । २ । २ । २४ ॥ सिध्यतेर्णिगि "सिध्यतेरज्ञाने" इत्या-त्वे णके तमपि च सिद्धम् । प्रकृष्टोपकारकत्वेनेति-प्रकर्षणं प्रकृष्टं तेनोपकारकम् । यद्वा प्रकृष्यते स्म प्रकृष्टस्ततः प्रकृष्टं च तदुपकारकं चेति कर्मधारयः । प्रकृष्टोपकारकत्वस्य को हेतुरव्यवधानम् । यद्वा प्रकृष्टोपकारकत्वमपि किंस्वरूपमव्यवधानमिति । अन्येषु मिलितेष्वपि कारकेषु लवनादिक्रिया दात्रादि विना न शक्यत इति कर्त्राऽव्यवहितं
20 दात्रादि करणमपेक्ष्यत इति तस्य प्रकृष्टत्वम् । यत्प्रकृष्टोपकारकत्वेन स्थाल्यादिकमपि कर्त्राऽव्यवहितमपेक्ष्यते तदपि करणमेव । ननु प्रकृष्टोपकारकत्वं कर्तुरप्यस्ति तस्याऽपि करणत्वं प्राप्नोति, नैवम्; तस्य स्वातन्त्र्यं लक्षणमस्ति । साधकतममिति-ननु सामग्रीतः क्रियासिद्धिस्तत्र कथं किञ्चित् साधकतमं किञ्चित्तद्विपरीतं ? अन्वयव्यतिरेकाभ्यां हि तत्र सर्वेषां सामान्यमवगम्यते तस्मात् क्रियासिद्धौ साधकतमस्य सम्भवो नाऽस्तीति
25 सम्भवं कल्पनया दर्शयति,-परमार्थवृत्त्या साधकतमत्वस्य सम्भवो नाऽस्ति यद्व्यापा-रानन्तर्येण तु क्रियासिद्धिर्विवक्ष्यते तस्य कल्पनया साधकतमस्येयं संज्ञा । ज्वलनरूप उत्पातनिपातरूपः पुण्यरूपश्च यथाक्रमं प्रयोगत्रयेऽवान्तरव्यापाराः । तमग्रहणमिति-गौणमुख्ययोरिति न्यायात् साधकतमस्यैव भविष्यति किं तमग्रहणेनेत्याह-अपादाना दीति-अन्यैरपादानं प्रथममुक्तमिति तन्मतापेक्षयाऽपादानादीत्युक्तम् । यद्वा स्वमतापेक्ष-

---

१ २-२-८३ । २ २-२-४२ । ३ २-२-२३ । ४ ४-२-११ ।

याऽपि "कादिर्व्यञ्जनम्" इतिवत्। तरतमयोग इति–साहचर्यात्तरतमगतः प्रकर्षोपलक्ष्यते। स्वकक्षायामिति–स्वकक्षा स्ववर्ग इति यावत्। ननु यदि स्ववर्गेऽपि प्रकर्षो पेक्ष्यते तदाऽन्येषां करणानां किं स्यात्? उच्यते–तदा करणान्तराणां सम्बन्धे षष्ठी स्यात्।

'कर्माभिप्रेयः सम्प्रदानम्'। २। २। २५। इङ् च "य एचातः" इति ये गुणे "उपसर्गस्या०" इत्यलोपे। सम्प्रदीयते यस्मै बाहुलकादनट्। श्रद्धानुग्रहादिकाम्य- 5 येति–तथेति प्रत्ययः–श्रद्धा, अनुग्रह–उपकारः, आदिपदात् कीर्त्त्यपायाभावादिग्रहः। श्राद्धाय निगल्हते (गृह्णते) स्वयं श्राद्धं कर्तुं यजमानेनाऽऽकारितं द्विजान्तरं निन्दतीत्यर्थः। अभिग्रहणादिति–अभिरभिमतार्थः प्र आरम्भार्थः, केवलस्य हि ईयते-र्गमनं वाच्यं नाऽभिसम्बन्धस्ततोऽभिग्रहणं विशिष्टसम्बन्धप्रतिपत्त्यर्थम्। विशिष्टश्च सम्बन्धः कर्तुः श्रद्धानुग्रहापायापगमकामनाजनितः स चाऽत्र नाऽस्तीति। प्रेय इति 10 सूत्रे क्रियमाणे कर्मणा क्रियया यः सम्बध्यमानो भवति स सम्प्रदानसंज्ञ इत्युक्ते प्रतः पृष्ठं ददातीत्यत्राऽपि स्यात्। रजकस्य वस्त्रं ददातीति–परिपूर्णं मूल्यमलभमानस्य रजकस्य पराङ्मुखत्वं। छात्राय चपेटां प्रयच्छतीति–चपेटयाऽऽहतः सन् छात्रोऽभि-मुखो भवति विनयपरो भवति।

'क्रुद्द्रुहेर्ष्यासूयार्थैर्यं प्रति कोपः'। २। २। २७॥ शब्दशक्तिस्वाभा- 15 व्यात् क्रुधिद्रुही अकर्मकावेव। सम्बन्धषष्ठ्यां प्राप्तायां सम्प्रदानम्। मनसा क्रुध्यतीति नाऽत्र मनस उपरि कोपो किन्तु तेन कृत्वाऽन्यस्य पुरुषादेः। कर्तुरपीति न केवलं विषयसप्तम्यां यं प्रतिकोपस्तस्य सम्प्रदानत्वमाधारमात्रत्वेन कर्तुरपि स्यादित्यर्थः शिष्यस्य कुप्यतीति–शिष्यस्य सम्बन्धिनोऽविनयस्योपरि कोपो न तु शिष्यस्य। धनिनो द्रुह्यतीति–धनस्योपरि द्रोहो न तु प्राणानाम्। भार्यामीर्ष्यतीति–अन्येनाऽवलो- 20 क्यमानां न सहते। वृत्तौ मैनामितितात्पर्यार्थोऽकथि। द्विषेरपीत्यर्थत्वादिति–अप्रीति-मात्रामेव विवक्षितं न तु क्रुधादय इत्यर्थः। अत्रेदं विचार्यते–कोपाद्द्रोहादयो भिन्न-स्वभावा व्याख्यातास्तत् कथं तदर्थानां यं प्रति कोप इति सामान्येनैतद्विशेषणमुप-पद्यते। तेषां हि यं प्रति द्रोहो यं प्रतीर्ष्या यं प्रत्यसूयेत्येव घटते, नैष दोषः; क्रोध-स्तावत्कोप एव द्रोहादयो द्विप्रकाराः केचित् कोपहेतुकाः केचिद्वस्त्वन्तरहेतुकाः। 25 तत्रेह पूर्वेषां ग्रहणं यथा स्यादुत्तरेषां मा भूदित्येवमर्थं यं प्रति कोप इति सामान्येन विशेषणमुपात्तम् अन्यथा व्यभिचाराभावादिदमनुपादेयं स्यात्।

'अपायेऽवधिरपादानम्'। २। २। २९॥ इंणूक्। अपायनं "युवर्ण०"

---

१ १–१–१०। २ ५–१–२८। ३ १–२–१९। ४ ५–३–२८।

इत्यलि, अयिवयि भावाकर्त्रोर्घञि वा। अवधीयते मर्यादीक्रियते बुद्ध्या, "उपसर्गाद्-दः किः"। गमनमिति–अपायहेतुत्वात् गमनमप्यपायः। उपलक्षणं चेदं तेन परमार्थतो विभागोऽपाय इति सिद्धम्। ग्रामादागच्छतीति–ग्रामादेरौदासीन्यमेवाऽवान्तरव्यापारः। सार्थाद्धीनः–कर्मकर्तरि कर्मणि वाऽत्र क्तप्रत्ययः। उपात्तविषयमिति–उप-

5 समीपे धातूना धात्वन्तरस्यात्तः स्वीकृतो विषयः स्वार्थो यत्र तत्। धात्वान्तरार्थाङ्गमिति–धात्वन्तरार्थोऽङ्गं विशेषणं यस्य धात्वन्तरार्थस्य वाऽङ्गम्। निःसरणाङ्गे इति–निःसरणं चाऽपायरूपमिति भावः। यदा तु बलाहकान्निःसृत्य कुसूलादादायेति च निःसृत्याऽऽदायशब्दवन्तौ प्रयोगौ क्रियेते तदा विद्युतिपचिधातू केवले स्वार्थे विद्योतने विक्लेदने च वर्तेते। निःसरति आददाति क्रियापेक्षया तु बलाहककुसूलयोर्निर्दिष्टविषय-

10 मपादानत्वम्। साङ्काश्यकेभ्य इति–सङ्काशेन निवृत्तं "सुपन्थ्यादेर्ञ्यः"। तत्र भवाः "प्रस्थपुर०" इत्यकञ्। अत्र निर्धार्यन्त इति क्रिया प्रतीयते। अपायश्चेति–ननु कायसंसर्गपूर्वको विभागो मुख्यो बुद्धिकल्पितस्तु गौणस्ततश्च गौणमुख्ययोर्मुख्यस्यैव परिग्रहात् साङ्काश्यकेभ्य इत्यादौ कारकशेषत्वात् षष्ठी प्राप्नोति, नैवम्; साधकतमं करणमित्यत्र तमग्रहणेन गौणग्रहणस्याऽपि ज्ञापितत्वादुभयरूपस्याऽप्यपायस्य परिग्रह

15 इति। तथा चौरेभ्यो बिभेति–अत्र बुद्धिकृतापायस्य विद्यमानत्वाद्भीत्राणार्थानां धातूनां भयहेतुकमपादानमिति, यदन्यैरुक्तं तदत्र न वक्तव्यम्। भयमाकुलीभावस्त्राणमनर्थप्रतिघात इति। तेभ्यो निवर्तत इति–निवृत्त्यङ्गे भये बिभेत्यादयो वर्तन्त इत्युपात्तविषयमेतदपादानम्। अध्ययनात्पराजयते, भोजनात् पराजयत इति–अत्र पराजिरसहने वर्तते। दुःखमध्ययनं दुर्वचं गुरवश्च दुरुपचारा भोजनमपि व्याधितस्याऽतृप्तिर्भुक्तवतो

20 वा विरसत्वादिना दुःखमिति ततो निवर्तत इति, पराजेरसोढेऽर्थे इति न वक्तव्यम्। तत्राऽसोढग्रहणात् पराजयतिरसहनार्थो गृह्यते, न तु शत्रून् पराजयते इतिवदभिभववृत्तिः। यवेभ्यो गां रक्षति–अत्र वारणार्थानामीप्सित इति न वक्तव्यम्। स्फुट एवेति–कायसंसर्गपूर्वक इत्यर्थः। यदि निष्क्रामन्तीति–अयमर्थो यद्धि यतोऽपक्रामति तत्पुनस्तत्र न दृश्यत इति प्रसिद्धम्। इह तु तत्राऽस्ति दर्शनमित्याह–यदीति, अत्यन्ताय इति–

25 अत्यन्तमित्यर्थेऽव्ययं क्रियाविशेषणत्वादम्। सन्ततत्वादिति–निष्क्रमणस्येति गम्यते। अयमर्थ एतेऽवयवा निष्क्रान्ता अन्ये निष्क्रामन्तः सन्तीति। अन्यान्यप्रादुर्भावाद्वेति–अन्यावयवयोगात् समुदायोऽप्यन्यस्ततोऽन्यश्चाऽसावन्यश्चेति कार्यम्। समाहारे तु "त्यदादिः" इत्यनेनैकः शेषः स्यात्, यथा–बिलादीर्घभोगो भोगी निष्क्रामन्नपि सततत्वात्तत्रोपलभ्यते तथा शरादयोऽपीत्यर्थः। गङ्गा प्रभवतीति–ततः प्रथममुपलभ्यत

---

१ ५–३–८७। २ ६–२–८४। ३ ६–३–४३। ४ ३–१–१२०।

इत्यर्थः । अत्राऽपि भुवः कर्तुः प्रभवोऽपादानमित्यपि न वक्तव्यम् । अत्यन्तमिति-अन्तमतिक्रान्तम् । षड् योजनानीति-अत्र षड्योजनरूपस्याऽध्वनः शत्रुञ्जय इत्यनेनाऽध्वनोऽन्तेन सह गते गम्य इति सूत्रेण सामानाधिकरण्यं तस्माच्च शत्रुञ्जय इत्यस्मात् या प्रथमा विभक्तिः सा योजनानीत्यत्राऽपीति । गतानीति-चैत्रेण कर्त्रा षड् योजनानि गतानि अतिक्रान्तानीति योजनानां कर्मत्वम् । उपचाराद्योजनस्थनरगतापेक्षया योजनान्यपि गतशब्देनोच्यन्त इति तेषां कर्तृत्वं वा । गतेष्विति-अतिक्रान्तेष्वित्यर्थः । आग्रहायणीति-अग्रं हायनस्य "पूर्वपदस्थात्०"[1] इति णत्वम् । अग्रहायणेन मृगशिरसा चन्द्रयुक्तेन युक्ता पूर्णमासी "चन्द्रयुक्तात्०"[2] इत्यण् । बलाहकमिति-तं प्राप्याऽन्तर्भूतण्यर्थो वा ।

'क्रियाश्रयस्याधारोऽधिकरणम्' । २ । २ । ३० ॥ आश्रीयत इत्याश्रयो "भूश्र्यदो०"[3] इत्यलि क्रियाश्रयः क्रियासम्पादक इत्यर्थः । आध्रियेते अवतिष्ठेते क्रियाश्रयौ कर्तृकर्मणी अस्मिन्निति "न्यायावाया०"[4] इत्यादिना घञि । विचटनक्रियायामिति-विचटनमवयवानामुच्छूनता । हेतुत्वं प्रतिपद्यत इति-यदुक्तं—

> " कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् ।
> उपकुर्वत् क्रियासिद्धौ, शास्त्रेऽधिकरणं स्मृतम् ॥ १ ॥ "

विषयाय प्रभवति-"तस्मै योगादेः शक्ते"[5] इतीकणि-वैषयिकम् । औपश्लेषिकमिति-"अध्यात्मादिभ्य इकण्"[6]। गवि गोत्वं-अनवयस्याऽपि गोत्वादेर्व्यक्त्याद्यवयवान् व्याप्त्यावतिष्ठमानस्य व्यक्त्यादिरभिव्यापक एवाऽऽधारः । सामीप्यकमिति-भेषजादिष्यणन्तात् स्वार्थे कः । नन्वाश्रय आधारो भवति, आश्रयश्च संयोगसमवायाभ्यां भवति । न चाऽवस्थितिक्रियाश्रयेण घोषादिना गङ्गादेः संयोगसमवायौ स्तः ? नैष दोषो यदायत्ता हि यस्य स्थितिः स विनाऽपि संयोगसमवायौ तस्याऽऽश्रयो भवति । यथा राजपुरुष इत्यत्र न राज्ञा सह संयोगसमवायौ स्तः । अथ च तदधीनस्थितित्वाद्राजाश्रयः पुरुष इति लोके व्यपदिश्यते । नैमित्तिकमिति-अत्र "विनयादिभ्यः"[7] इतीकण्, युद्धे सन्नह्यते-सन्नहनादयस्त्वन्यत्राऽपि केनचिन्निमित्तेन सम्भवन्तीति न युद्धादिर्वैषयिकः । औपचारिकमिति-अत्र "अध्यात्मादिभ्य इकण्" अन्यत्राऽवस्थितस्याऽन्यत्राऽध्यारोप उपचारः । अङ्गुल्यग्रे करिशतमिति-अत्र हि करिशतादीनामन्यत्राऽवस्थितानां केनाऽपि प्रयोजनादिनाङ्गुल्यग्रादावध्यारोप्यमाणानामङ्गु-

---

१ २-३-६४ । २ ६-२-६ । ३ ५-३-२३ । ४ ५-३-१३४ । ५ ६-४-९४ । ६ ६-३-७८ । ७ ७-२-१६९ ।

ल्यग्रादिरौपश्लेषिकाभिन्न औपचारिक आधार उच्यते, यदा त्वङ्गुल्यग्रादिशब्देनोपचारादाधेयाधिष्ठितो देश एवोच्यते तदौपश्लेषिक एवाऽऽधारोऽतएवाऽऽहुः—

" आधारस्त्रिविधो ज्ञेयः, कटाकाशतिलादिषु ।
औपश्लेषिको वैषयि-कोऽभिव्यापक एव च ॥ १ ॥"

5 अक्ष्णोः प्रतिवसतीति–यथाऽक्षिस्थं तृणादि दुःखकारि तथा द्वेष्योऽपीत्यर्थः ।

'**नाम्नः प्रथमैकद्विबहौ**' । २ । २ । ३१ ॥ तत्रेति–एवं स्थिते सतीत्यर्थः । तेष्विति–पञ्चकस्य नामार्थस्य क्रमेण लक्षणमाह–जातिरिति नित्यत्वैकत्वे सत्यनेकत्र समवेता जातिः । अत्र जातिलक्षणे नित्यपदाभावे पटेन व्यभिचारो नित्यद्रव्यवृत्तयोऽन्त्या विशेषा एकत्वाभावे विशेषेषु व्यभिचारः । अने-
10 कत्राऽभावे परमाणौ विशेषेण व्यभिचारः । सम्बन्धादीति–आदिशब्दान्नित्यद्रव्यवृत्तयोऽन्त्या विशेषा अतीन्द्रियदृष्टिगम्या योगिसंवेदनीयास्तेऽपि स्वार्थः । स्वार्थ इति–स्वस्यैवाऽर्थः स्वार्थो विशेषणमसाधारणोऽर्थः प्रवृत्तिनिमित्तमिति । गौरिति–जातिरनुवृत्तप्रत्ययहेतुरनुगतज्ञानहेतुः । अत्र तद्विशिष्टस्य द्रव्यस्य प्रतीतेर्जातिः स्वार्थः । शुक्ल इति–गुणः शुक्लत्वादिः । शुक्लः पट इत्यादौ तद्विशिष्टस्य द्रव्य-
15 स्य प्रतीते( ज्ञानस्य )र्गुणः ( हेतुः ) स्वार्थः । गर्गस्याऽपत्यानि " गर्गादेर्यञ्[1] " " यञञो० [2] " इत्यनेन लोपः । पञ्चाला इति–पञ्चालानां राष्ट्रस्य राजानः पञ्चालस्य राज्ञोऽपत्यानि वा " राष्ट्रक्षत्रियात्० [3] " अञ् स्वार्थस्य व्यवच्छेद्यमिति–अत्र कर्तरि षष्ठी स्वार्थेन व्यवच्छिद्यते । शक्त्याद्याश्रय इति–आदिशब्दात् स्वार्थपरिग्रहः । यदर्थे सदसद्वेति–शब्दधर्मो लिङ्गमिति मतापेक्षया । भेदप्रतिपतिहेतुरिति–भेदो
20 विशेषज्ञानोत्पत्तिरूपस्तया हि पदार्थानां भेदः प्रतीयते । भेदः परिगणनं संख्येति लक्षणत्वात्तस्याः । ननु नामार्थव्यतिरेकेणाऽन्येषामेकत्वादीनां विशेषणभूतानामभावादेक इत्यादौ प्रथमाया अभावः प्राप्नोतीत्याह–निमित्तमिति, निमित्तमेकत्वसंख्यालक्षणम् तद्वतस्त्वेकत्वसंख्यावतो यदेकत्वं तत्र विभक्तिप्रवृत्तिः । यथा वृक्ष इत्यत्र वृक्षत्ववतो द्रव्यस्यैकत्वं प्रतिपाद्यते तथाऽत्राऽप्येकेन सामान्यमेकत्वं सिना
25 त्वेकत्वसंख्यावत एकत्वं प्रतिपाद्यते, यथा सामान्यं दण्डमानय दण्डिनो दण्डमानय । त्यादिभिरिति–तिशब्देन तिवादय आख्यातप्रत्यया आदिशब्देन च कृत्तद्धितसमासा उच्यन्ते । व्यतिरिच्यत इति व्यतिरेकस्तस्मिन् व्यतिरेके नामार्थादतिरेके आधिक्ये द्वितीयाद्या विभक्तयो व्यतिरेकविभक्तयः । तत्पूर्वक–सम्बन्धरूपा चेति–

---

१ ६–१–४२ । २ ६–१–१२६ । ३ ६–१–११४ ।

तत्क्रियाकारके पूर्वे यस्य स चाऽसौ सम्बन्धश्च स एव रूपं यस्याः शक्तेः सा तथा। स्नानीयं चूर्णिमित्यादिषु सर्वेषु बाहुलकात् करणादिष्वनीयादयः। उपचरितमपीति-अध्यारोपितमित्यर्थः। सहचरणस्थानतादर्थ्यवृत्तमानधरणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मण-मञ्च-कटक-राज-सक्तु-चन्दन-गङ्गा शाटकान्नपुरुषेष्वतद्भावेऽपि तद्वदुपचारः। छत्रिणो गच्छन्ति-छत्रिसहचरिताः पुरुषा यान्तीत्यर्थः। शक्तिप्रधानमपीति-यत इत्यादिभ्योऽपादानादिशक्तीनां प्रतीयमानत्वे न शक्तिमतोऽर्थमात्रं शक्तिप्रधानम्। द्योत्यमपीति-प्राद्युपसर्गाणां क्रियार्थद्योतकत्वादन्यथोपसर्गत्वाभावात्तदर्थमात्रं द्योत्यमेवेति। स्वरूपमात्रमपि-सोपसर्गाऽनुपसर्गधात्वर्थस्यादिभिर्वैशिष्ट्याऽप्रतीतेः। आगच्छतीत्यादिक्रियापदार्थ एव तदर्थ इत्यर्थः। नाम्न इति किं? ननु वर्णस्य निरर्थकत्वाद्धातुवाक्यार्थयोश्चाऽसत्त्वरूपत्वात् संख्याया सत्त्वधर्मरूपत्वेन तद्(प्र)वृत्त्यभावात् सत्त्ववाचिनो नाम्न एव प्रथमा भविष्यति किं नाम्न इत्यनेन? उच्यते-यथा धातोरसत्त्ववाचित्वेऽपि साधनाश्रयामेकत्वादिसंख्यामाश्रित्य तिवादीनामेकवचनादीनि प्रवर्तन्ते तथा स्यादीनामपि प्रवर्तेरन्। एकवाक्यादप्यवयवगतां वर्णाच्च निरर्थकादपि स्वरूपगतां संख्यामाश्रित्य प्रथमा स्यादिति। वाक्याभ्यामिति-उपलक्षणत्वात् पदादपि। नन्वर्थमात्रे प्रथमेत्युक्तत्वात् मात्रग्रहणस्य चाऽधिकार्थव्यवच्छेदकत्वाद्वीरपुरुष इत्यादौ सामानाधिकरण्येनाऽर्थमात्राद्विशेषणविशेष्यभावस्याऽधिकस्य प्रतीतेः प्रथमा न प्राप्नोति। समासविधानमपि प्रथमोत्पत्तेर्लिङ्गं न भवति। वीरं पुरुषमानयेति द्वितीयाद्यन्तानामपि समाससम्भवादिति प्रथमा न विधेया, नैष दोषः; आधिक्यस्य वाक्यार्थत्वाद्वीरनाम्नोऽनपेक्षितशब्दान्तरार्थसंसर्गोपहितविशेषणभावात् स्वार्थमात्रनिष्ठात् प्रथमा विधीयते। एवं पुरुषशब्दादपि।

'आमन्त्र्ये'।२।२।३२॥ प्रसिद्ध-तत्सम्बन्धस्येति-तेन पाण्डित्यदेवदत्तत्वादिना प्रवृत्तिनिमित्तेन सम्बन्धो यद्वा तेनाऽऽमन्त्र्यवाचिना देवदत्तादिशब्देन सम्बन्धः। प्रसिद्धस्तत्सम्बन्धो यस्य देवदत्तादेस्तस्य। तद्विषय आमन्त्र्य इति आमन्त्र्यपदं हि क्रियाविशेषणं भवति हे देवदत्त! व्रजाम्यहमिति, अत्राऽभिमुखीकृतदेवदत्तविशिष्टा व्रज्या प्रतीयते। यदाह हरिः—

"आमन्त्रितपदं यच्च, तत्क्रियाया विशेषकम्।
व्रजानि देवदत्तेति, निघातोऽत्र प्रतीयते ॥ १ ॥"

ततश्च देवदत्तादेः क्रियाविशेषणात् कर्माद्यतिरिक्तामन्त्रणसम्बन्धरूपे वर्तमानाद्गौणात् प्रथमापवादः षष्ठी प्राप्नोति तद्बाधनार्थमिदमुच्यते। सम्बन्धश्चाऽऽमन्त्र्यामन्त्रणभावो विषयविषयिभावो वा।

'गौणात्समयानिकषाहाधिगन्तरान्तरेणातियेन तेनैर्द्वितीया' २।२।३३॥ गौणादिति, "तत आगते"[1] प्रज्ञाद्यणि वा, अत्र सूत्रे येन तेनौ मुक्त्वाऽन्ये वाचकाः। समया पर्वतं नदी–निकटे निकटा वा। निकषति दूरभावं "समिणनिकषिभ्यामाः"[2] जहाति सौख्यं विचूः, धयति निन्दाभावं "ह्रीगादय"[3] इति निकषा हा धिक् शब्दानां व्युत्पत्तिः। हा देवदत्तमिति–हा कष्टं देवदत्तस्य यतो वर्धते व्याधिः। अन्तरा निषधमिति–अन्तं राति "डित्"[4] इति आः। अन्तरेण गन्धमादनमिति–अन्तरे मध्ये नयति "क्वचित्"[5] इति डे, "तत्पुरुषे कृति"[6] इत्यलुपि "पूर्वपदस्था०"[7] इति णत्वे च। अतिवृद्धमिति–कुरूणामतिक्रमेण पाण्डवानां महद् बृहद्बलं वर्तत इत्यर्थः। येन पश्चिमामिति–अत्र येन तेनौ लक्ष्यलक्षणभावं द्योतयतः पश्चिमां प्रति लक्षीकृत्यगत इत्यर्थः। अयं गतः कां प्रति पश्चिमां, पश्चिमाया लक्षणेन देवदत्तस्याऽप्रसिद्धं गमनं लक्ष्यते। अन्तराऽन्तरेणेति अथाऽन्तराशब्दः स्त्रियामावन्तोऽप्यस्त्यव्ययं च, अन्तरेणेत्यपि अन्तरशब्दात्तृतीयायां भवति अव्ययं च। तत्र विशेषानुपादानात् सामान्येनोभयस्याऽपि ग्रहणं कुतो न भवतीत्याह–साहचर्यादिति। समयादिभिर्निपातैः सहैकवाक्योपात्तत्वादेतावपि निपातावित्यर्थः। अन्येनापीति–द्विधा व्याख्येयं, समयादिव्यतिरिक्तेन यावच्छब्दापदनाम्ना नामव्यतिरिक्तेन धात्वादिनाऽपि योगे गौणान्नाम्नो द्वितीया भवतीति। अक्षं तृतीयनेत्रं पादे यस्य स तथा।

'द्वित्वेऽधोऽध्युपरिभिः' २।२।३४॥ "सामीप्येऽधोध्युपरि"[8] इति द्वित्वम्। असामीप्याच्चेति–अत्रौत्तराधर्यमात्रं विवक्षितं न सामीप्यमिति द्वित्वाभावः।

'सर्वोभयाभिपरिणा तसा'।२।२।३५॥ सर्वादिविशेषणत्वात् "विशेषणमन्तः"[9] इति न्यायात्तदन्तप्रत्तिरित्याह–सर्वादिभिस्तसन्तैरिति।

'लक्षण वीप्स्येत्थम्भूतेष्वभिना'।२।२।३६॥ समुदायस्येति–वनादेरित्यर्थः। इत्थंभूत इति–अनेन साधुत्वादिना प्रकारेणेत्थं इत्थं भवनं क्लीबे क्तः। इत्थम्भूतमत्राऽस्ति "अभ्रादिभ्यः"[10] यद्वा इत्थं देवदत्तो भवत्यस्मिन् मात्रादौ "अद्यर्थां०"[11] इति क्ते इत्थंभूतो मात्रादिः। "अव्ययं प्रवृद्धादिभिः"[12] इति समासः। वृक्षं वृक्षमभिसेक इति–अत्र वृक्षस्य वृक्षस्य सेक इति सेकेन वृक्षाणां वीप्स्यमानां सेकं प्रति यस्तेषां साध्यसाधनभावलक्षणः सम्बन्धः सोऽभिना द्योत्यते। वीप्सा तु द्विर्वचनद्योत्यैवेति।

---

१ ६–३–१४९। २ उणा–५९८। ३ उणा–८७०। ४ उणा–६०५। ५ ५–१–१७१। ६ ३–२–२०। ७ २–३–६४। ८ ७–४–७९। ९ ७–४–११३। १० ७–२–४६। ११ ५–१–१२। १२ ३–१–४८।

अन्ये त्वन्यथा वर्णयन्ति–वीप्सावीप्स्यमानयोः सम्बन्धो द्विर्वचनेनैव द्योत्यते न त्व-
भिना इति सम्बन्धमद्योतयताऽपि तेन योगे वचनाद् द्वितीयेति ।

'**भागिनि च प्रतिपर्यनुभिः**' । २ । २ । ३७ ॥ आभवतीति, आङ्पूर्वको
भूधातुर्भागागमे वर्तत इति हि धातुपारायणविदः । स्वीक्रियमाण इति–यस्त्वस्वीक्रि-
यमाणेऽप्यंशे भागशब्दः प्रयुज्यते नगरस्य भागः प्रियङ्गोर्भाग इति स स्वीक्रियमाण- 5
भागसादृश्यादिति ।

'**हेतुसहार्थेऽनुना**' । २ । २ । ३८ ॥ हेतुर्द्विविधो जनको ज्ञापकश्च, तत्र ज्ञाप-
कस्य लक्षणत्वात् " भागिनि च० " इति सूत्रेण द्वितीया सिद्धेति जनक एवेह गृह्यत
इत्याह–हेतुर्जनक इति । तुल्ययोग इति–ननु तुल्ययोगाद्यर्थे सहादय एव शब्दा वर्तन्ते
न पर्वतादिशब्दा इति कथं ततो द्वितीयेत्याह–तद्विषयोऽपीति । देवेन्द्रमुपपातयति 10
कर्मणोऽणि देवेन्द्रोपपातम् । तुल्ययोगोऽभिन्नैः सह विद्यमानता तु भिन्नैरित्यनयो-
र्भेदः । विद्यमानतायामनु कर्माणि संसारीत्युदाहरणं ज्ञातव्यम् ।

'**उत्कृष्टेऽनूपेन**' । २ । २ । ३९ ॥ उत्कृष्टशब्दो हीनापेक्षस्तेन हीनोत्कृष्टस-
म्बन्धेऽनुना द्योत्ये द्वितीयाऽनेन विधीयते ।

'**कर्मणि**' । २ । २ । ४० ॥ शब्दप्रयोगायोगादिति–अर्थप्रत्यायनाय हि 15
लोके शब्दः प्रयुज्यते, स चाऽर्थो यदा शब्दान्तरेण प्रतिपादितः स्यात्तदा प्रयोजना-
भावाच्छब्दान्तरप्रयोगो न कर्तव्यः । अनियताधाराणामिति–नहि भीष्मत्वादीनां कट
एवाऽऽधारः किन्त्वन्येऽपि । 'न केवला प्रकृतिरिति'–नाऽपदं प्रयुञ्जीतेति न्यायात् ।
तदेकयोगक्षेमत्वादिति अलब्धलाभो योगः, लब्धार्थपरिरक्षणं क्षेमस्तस्य देवदत्तादेर्या-
वेकौ योगक्षेमौ तयोर्भावः । कर्मादिसामान्यमिति–करणादिक्रियामात्रयोग्यमित्यर्थः । 20
तत्राऽपीति–सामान्यकर्माभिधानेऽपि । अन्तर्भूत इति–तत्राऽभिहितोऽपि कश्चिन्ना-
ऽन्तर्भवति, यथा राज्ञः पुरुष इत्यत्र वाक्ये षष्ठ्या सम्बन्धोऽभिधीयते; न तु क्वचिद-
न्तर्भावमुपयातीति द्वयोरुपादानम् । तत्रेति–कर्मादिशक्तियुक्ते द्रव्य इत्यर्थः । स्वरूप-
कालभिन्नायामिति–कृताहृतेत्यादिक्रियापेक्षया स्वरूपेण कालेन च पश्याऽऽहरेत्यादिका
क्रिया भिन्ना । प्रधाना प्रधानक्रियेति–एकस्मिन् वाक्ये युगपदनेकप्रधानक्रियाणा- 25
मसम्भवात् प्रधानाप्रधानक्रियाविषयैवाऽनेका शक्तिरिति, तत्क्रियापेक्षया शक्तेरपि
गुणप्रधानभावो भवतीत्यत आह–प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत्प्रकाशते,
तस्यास्तदनुबन्धित्वादित्युक्तम् । प्रधानशक्त्यनुरोधादित्यादि–अत्रैवोदाहरणान्तरं दर्श-
यति–यथा च ग्रामो गन्तुमिष्यत इति । ननु गौणान्नाम्नः कर्मणि द्वितीयेत्युक्तम्,

अजां नयति ग्राममित्यादौ तु ग्रामाद्यपेक्षया अजादेः प्रधानत्वान्न ततो द्वितीया प्राप्नो-
तीत्याह–इह चेति । क्रियापेक्षमिति–आख्यातपदेनाऽसामानाधिकरण्यं गौणमिति
गौणत्वस्य द्वयोरपि कर्मणोर्भावात् क्रियापेक्षं गौणत्वमाश्रितम् । न विहन्यत इति–
तेन गौणत्वादजाशब्दादपि द्वितीया सिद्धा ।

5 ' क्रियाविशेषणात् ' । २ । २ । ४१ ॥ प्रत्यासत्तेः क्रियाविशेषणं यत्समाना-
धिकरणं तस्मादेव द्वितीया । नन्विदं सूत्रं प्रथमाधिकारे क्रियतां प्रथमयाऽपि सर्वा-
ण्यपि रूपाणि सेत्स्यन्ति ? उच्यते–पुण्यवांस्तमथो पचति शोभनं ते भार्येत्यादौ
विकल्पः प्राप्नोति । निर्गुणा गुणाः क्रिया चेति वचनात् तत्कथं क्रियाया विशेषणस·
म्भवः ? सत्यमेतत्, किन्तु सजातीयस्य द्रव्योपाधिरपेक्षयोत्कर्षो दृश्यते; यथा–शुक्लः
10 शुक्लतरः शुक्लतम इति रूपरसादीनां कला इति प्रविभागप्रचयापचयाभ्यामुत्कर्षाप-
कर्षवृत्तित्वं भवति, तत्तूपाध्यन्तरयोगास्तदाहुस्तद्विदः, " भवेद्द्विगुणमाधुर्यमनन्त-
गुणकालकं, द्रव्यचतुर्गुणोद्भुतगन्धमाम्रफलादिकं " ॥ १ ॥ यथा च रूपादीनां तथा
क्रियाणामपि परस्परापेक्षया विशेषसम्भवात् शोभनं पचतीत्येवं विशेषणयोगः स्यात् ।
कथमन्यथा पापच्यते, पचतितरामित्यादौ तासामेकरूपत्वाद्यङादिप्रत्ययविधिः स्यात् ।
15 ननु चाऽसत्त्वभूता क्रिया तदुपाधिस्तु सुतरामसत्त्वभूतस्तत्कथं सत्त्वाभिधायिना
नाम्ना प्रतिपाद्यत इति, उच्यते–धातुप्रकृतिवाच्याऽसत्त्वभूतैव क्रिया यथा क्रिया-
शब्देन नामरूपेण सत्त्वरूपापन्ना प्रतिपाद्यते तथोपाधिरूपापन्ना तथा शोभनादि-
शब्देनेत्यदोषः । मन्दं गन्तेति–मन्दशब्दस्य हि कर्मत्वे "[1] गतेर्नवाऽनाप्ते " इत्यनेन
ततश्चतुर्थी स्यात् । यदा गन्तेत्यत्र तृच् तदा मतान्तरेण ग्रामशब्दाच्चतुर्थी । स्वमते तु
20 "[2] कर्मणि कृतः " इत्यनेन परत्वात् षष्ठ्येव भवति । यदा तु तृन् तदा "[3] तृन्नुदन्ता० "
इति षष्ठीनिषेधात् स्वमतेऽपि चतुर्थी ।

' कालाध्वनोर्व्याप्तौ ' । २ । २ । ४२ ॥ मासस्य मासे वो द्व्यहं गुडधाना
इति–अत्र द्व्यहशब्दादनेन द्वितीया मासशब्दात्तु व्याप्तेरभावान्न । एवमुत्तरेष्वपि ।
क्रोशस्य क्रोशे वैकदेश इति–अत्रैकदेशशब्दाद् व्याप्तेः सम्भवेऽप्यध्वनोऽभावे
25 द्वितीया न । अकर्मकत्व इदमिति–अयमर्थो यदा शास्त्रादि कर्मणा इङ्धातुः सकर्मको
विवक्ष्यते । तदा "[4] कालाध्वभावदेशं वा० " इत्यस्य प्राप्तिरेव नाऽस्ति तत्राऽकर्मणा-
मिति भणनात् । यदा त्वविवक्षितकर्मत्वेनाऽकर्मको धातुर्विवक्ष्यते तदा " कालाध्वभा-
वदेशं वा० " इत्यस्य प्राप्तावप्यकर्मसंज्ञापक्ष आश्रीयते, कर्मत्वपक्षे हि कर्मणीत्येव सिद्धेः ।

' सिद्धौ तृतीया ' । २ । २ । ४३ ॥ सिद्धाविति–यद्यपि त्रिप्रकारा व्याप्तिः

---

१ २–२–६३ । २ २–२–८३ । ३ २–२–९० । ४ २–२–२३ ।

प्रस्तुता तथापि सामर्थ्यात् क्रियाव्याप्तेरेव सिद्धाविति विशेषणम्। द्वितीयापवाद इति–कालाध्वनोर्व्याप्तेर्विद्यमानत्वात् पूर्वेण द्वितीयायां प्राप्तायां तद्बाधनार्थो योगस्तेन यदुच्यते कैश्चिन्मासेनाऽनुवाकोऽधीत इति करण एव तृतीया इतीदं नाऽऽरम्भणीयमिति तदसम्यगिति।

'हेतुकर्तृकरणेत्थम्भूतलक्षणे'। २। २। ४४॥ फलसाधनयोग्य इति–फलं कार्यं तस्य साधनं निष्पादनं करणमिति यावत्तत्र योग्यः सामान्यतो दृष्टसामर्थ्यः। योग्यग्रहणमन्तरेण फलसाधन इत्युच्यमाने यः फलं साधयति क्रियाविष्टस्तत्र प्रतिपत्तिः स्यात्, योग्यग्रहणेन तु योग्यतामात्रप्रतिपत्तावकुर्वन्नपि तत्फलं हेतुरिति। योग्योऽत्र निर्व्यापारो गृह्यते सव्यापारत्वे तु कर्तृत्वमेव। धनादीनि कुलादिकमकुर्वन्त्यपि योग्यतामात्रेण तृतीयामुत्पादयन्ति। यत्राप्यन्नेन वसतीत्यादौ तत्राऽपि क्रियायामन्नादेर्योग्यतामात्रविवक्षितेति हेतावेव तृतीया इत्थंभूतलक्षण इति।

अयं प्रकारः–इत्थं भूयते स्म गत्यर्थेति क्तः, तस्य ग्रहणमिति विग्रहः। स लक्ष्यते येनेति त्वर्थकथनमात्रं। इत्थम्भूतग्रहणमिति–नन्वित्थम्भूतग्रहणं किमर्थं? यतो लक्षणे इत्युक्तेऽपि अपि भवान् कमण्डलुना छात्रमद्राक्षीदित्याद्युदाहरणानि भविष्यन्ति। अथेत्थं भणिष्यन्ति भवन्तो वृक्षं प्रति विद्योतनमित्यत्राऽपि तृतीया स्यात्, तन्न; यतो "भागिनि॰"[1] इति सूत्रेण प्रतिना योगे द्वितीया भविष्यति। एवं सति प्रतेरयोगेऽपि द्योतकत्वाद् वृक्षं विद्योतनं स्यात्, न तु वृक्षेणेति? सत्यम्, इत्थम्भूतग्रहणमेवं ज्ञापयति यत्र साक्षात्प्रतिना योगो भवति तत्र "भागिनि च प्रतिपर्यनुभिः" इति सूत्रेण द्वितीया भवति; अत्र तु वृक्षस्य विद्योतनमित्येव भवति। अपि भवान् कमण्डलुपाणिमिति–"विशेषणसर्वादि॰"[2] इति सूत्रेण विशेषणद्वारेण पाणेः पूर्वनिपाते प्राप्ते "न सप्तमीन्द्वादिभ्यश्च"[3] इति निषेधात् कमण्डलोः प्राङ्निपातः। ननु वाक्यावस्थायां कमण्डलुशब्दात् किमिति न तृतीया? उच्यते–वाक्ये आख्यातपदेन सामानाधिकरण्यमिति प्रधानत्वेन गौणत्वाभावात्, तर्हि समासे सति कथं न? उच्यते–तदा लक्ष्यप्रधानत्वान्न। ननु समासे सति विभक्त्यन्तवर्जनान्नामत्वाभावे नाम्नो विहितायास्तृतीयायाः कथमत्र प्राप्तिः? नैवम्, "नाऽऽमन्त्र्ये"[4] इति प्रतिषेधसूत्रकरणात्। तद्धि हे राजन्नित्यादिषु नलोपाभावार्थम्, तन्न युक्तम्; प्राप्तिपूर्वको हि प्रतिषेधः। अत्र तु "नाम्नो नोऽनह्नः"[5] इत्यनेन हे राजन्नित्यादिषु विभक्तिद्वारा नामत्वाभावे नलोपप्राप्तिरेव नाऽस्ति, तस्मान्नाऽऽमन्त्र्य इति प्रतिषेधसूत्रकरणान्नामकार्यं प्रतिपन्नम्। ततः समासमध्येऽपि

१ २-२-३७। २ ३-१-१५०। ३ ३-१-१५५। ४ २-१-९२। ५ २-१-९१।

प्राप्तिः, तर्हि धर्मश्रित इत्यादावपि समासे द्वितीयादिप्रसङ्गः स्यात् ? तन्न, कर्मादिशक्तेः सम्बन्धस्य च समासेनैवाऽभिहितत्वात् । तर्हि नामार्थमात्रे प्रथमा भवतु ? तदपि न, आख्यातपदसामानाधिकरण्ये प्रथमा । तर्हि नीलोत्पलमित्यादिषु नीलेन सहाऽऽख्यातपदसामानाधिकरण्ये कथं न प्रथमा ? उच्यते—तत्राऽपि सामानाधि-
5 करण्यं नाऽस्ति, अन्यथा सापेक्षत्वे समासोऽपि न स्यादिति । तर्हि कमण्डलुपाणिशब्दादुपसर्जनीभूतलक्षणात्तृतीया प्राप्नोति ? न । लक्षणस्य प्राधान्ये तृतीया न लक्ष्यस्येति न भवतीति शाकटायनः ।

'सहार्थे' । २ । २ । ४५ ॥ तुल्यः साधारणोऽप्रधानस्य प्रधानेन क्रियादिना यः सम्बन्धः—स तुल्ययोगः, विद्यमानता चेति । ननु च विद्यमानतायामपि
10 तुल्ययोगोऽस्त्येव सत्तया सहोभयोः सम्बन्धात्तथाहि—'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इति सहैव दशभिः पुत्रैः सतीति शक्यं प्रतिपत्तुम्, तत्र विद्यमानता चेति तुल्ययोगात् किं पृथग् निर्दिश्यते ? उच्यते—विवक्षितयोगाभावात्, सहैव दशभिरित्यत्र वहनमात्रं विवक्षितं तद्गर्दभ्या एव न तत्पुत्राणां यथा पुत्रेण सहाऽऽगत इत्यागमनमुभयोरपीति तुल्ययोगाद्विद्यमानता भिन्ना ।

15 'यद्भेदैस्तद्वदाख्या' । २ । २ । ४६ ॥ भिद्यते वस्तु एभिरिति भेदा यस्य भेदिनचक्षुरादेर्भेदैः काणत्वादिभिस्तद्वतश्चक्षुरादिमतः पुरुषादेस्तत्प्रकारवदर्थयुक्तस्य कोऽर्थः ? स प्रकारवानक्ष्यादिरर्थस्तेन युक्तस्य चैत्रादेराख्या निर्देशो भवति, तद्वाचिनोऽक्ष्यादिवाचिनस्तृतीया भवतीत्यर्थः । अक्ष्णा काणः—अक्षि काणं चाऽकाणं च भवतीति तेन काणत्वादिना भेदेन तद्वांश्चैत्रादिर्निर्दिश्यते । शिरसा खल्वाटः—स्खलन्त्यपगच्छन्ति
20 केशा अस्मादिति कपाटेत्यादिशब्दात् साधुः । प्रकृत्या दर्शनीयः—प्रकृतिः स्वभावस्तद्भेदो दर्शनीयत्वम्, स्वभावो हि दर्शनीयत्वमदर्शनीयत्वं च भवति तद्भेदेन दर्शनीय इति प्रकृतिमानाख्यायते । प्रैतीति "तन्व्यधी०" इति णे प्रायः, तद्भेदो वैयाकरणत्वं तार्किकत्वं चेति तद्भेदेन वैयाकरण इति तद्वान्निर्दिश्यते । ननु च प्रकृत्या दर्शनीयः प्रायेण वैयाकरण इति युक्तः प्रयोगः, दर्शनीयत्वं हि प्राकृतं वैकृतं चाऽस्ति, वैया-
25 करणत्वं च प्राकृतमन्यच्च तत्रेतरव्युदासार्थं प्रकृत्या प्रायेणेति चाऽर्थवत् । काण इत्यादिप्रयोगे त्वक्ष्णेत्यादिरव्यभिचारेण प्रतीतेरयुक्तः प्रयोगाऽर्थस्य गतत्वात्, उच्यते—लोकोऽत्र पर्यनुयोक्तव्यो योऽर्थवतोऽनर्थकतामनपेक्ष्य प्रतीतेऽपि शब्दान् प्रयुङ्क्ते, लोके च न सर्व एवं सूक्ष्मेऽक्षिकया शब्दान् प्रयुङ्क्ते, यद्वा सूक्ष्मेऽक्षिकया प्रयोगेऽप्युपचरितार्थनिवृत्तिरक्ष्णा इत्यादिप्रयोगे प्रयोजनं ? सत्यं, अयं काणो न तूपचारे-

---

१ ५-१-६४ ।

णेति । गोत्रेण काश्यपः, काश्यपो माठर इति च गोत्रभेदस्तेन गोत्रमानाख्यायते काश्यप इति । भेदग्रहणं किं ? यदि भेदग्रहणं न क्रियते तदा येन तद्वदाख्येत्युच्यमाने यष्टीः प्रवेशय इत्यत्रैव स्यादत्र हि यष्ट्यादिना तद्वानुपचारेणाऽऽख्यायते, अक्ष्णा काण इत्यादौ च न स्यात्; न ह्यत्राऽक्ष्यादिशब्देन तद्वान्निर्दिश्यते । अक्षि काणं पश्येति–काणशब्देन हि अक्षिभेदेनाऽक्ष्याख्यायते न तद्वांश्चैत्रादिः । षष्ठीनिवृत्त्यर्थं तु 5
वचनमिति–तथापि न विधेयमेतत्सूत्रं मा भूत् कर्त्रादौ तृतीया, इत्थम्भूतलक्षणत्वादक्ष्यादेर्भविष्यति, यदाह–" इत्थम्भूतस्य काणस्य लक्षणं ह्यक्षि बुध्यते । ततस्तृतीया तेनैव तत्र सूत्रेण सिध्यति ॥ १ ॥ " अत्रोच्यते–अक्ष्यादेरित्थम्भूतस्य काणादिलक्ष्यस्य भेदाभावाल्लक्षणत्वानुपपत्तिर्यदाहोद्योतकरः—

" लक्ष्यलक्षणभावो हि, भेदे सत्युपपद्यते । 10
यथा छात्रकमण्डल्वोश्छात्रोपाध्याययोर्यथा ॥ १ ॥ "

'**काले भान्नवाऽऽधारे**' । २ । २ । ४८ ॥ कालयति प्रक्षिपति पर्यायान् द्रव्येष्विति स्वार्थिकप्रत्यया नाऽतिवर्तन्ते, प्रकृतिलिङ्गवचनानीति–कालेऽपि नक्षत्रशब्दो नक्षत्रलिङ्गसंख्य एव । पुष्येण पायसमश्नीयात्–पुष्येण चन्द्रयुयुक्तेनेत्यादिप्रक्रियायां पुष्यशब्दः काले वर्तते । पयसि संस्कृतं भक्ष्यं " संस्कृते भक्ष्ये "[1] अण् । 15
पयसा संस्कृतमिति तु कृते तृतीयाधिकारनिवेशितेन " संस्कृते " इति सूत्रेण इकणोत्र भवति । अध्वनि मा भूदिति–अत्र विशिष्टतारकावच्छिन्ने क्षेत्रे पुष्यमघाशब्दौ वर्तेते, न काल इति । चित्रा माणविकेति–यद्यपि चित्राशब्दो माणविकायां वर्तमानः कालमध्युपाधित्वेनोपादत्ते । यतश्चित्रासु जाता या सा चित्रेति विशेषणत्वेन प्रतीयमानत्वात् कालेऽपि वृत्तिः सम्भाव्यते । तथापि तत्र कालस्य गौणत्वाद् गौणमुख्ययोश्च मुख्ये 20
कार्यसम्प्रत्ययान्न भवति । स्वावच्छिन्ने काले इति–स्वेनाऽऽत्मनाऽवच्छिद्यते विशिष्यते यस्तिलच्छेदतिलपुष्पविशिष्टः कालः । कोऽर्थो ? यत्र काले तिलाः पुष्यन्ति तिलानां छेदश्च भवतीत्यर्थः ।

'**प्रसितोत्सुकाववद्धैः**' । २ । २ । ४९ ॥ ननु प्रसितशब्दस्य शुक्लगुणवचनस्य क्रियार्थस्य च सम्भवादुभयार्थस्याऽपि ग्रहणप्रसङ्ग इत्याह–साहचर्यादिति । 25

'**व्याप्येद्विद्रोणादिभ्यो वीप्सायाम्**' । २ । २ । ५० ॥ द्विद्रोणेन धान्यं क्रीणातीति–द्रोणौ मानमस्य धान्यस्य " मानम् "[2] इतीकण्, तस्य " अनाम्न्य० "[3] इति लुप् । यद्वा द्वौ द्रोणौ मेयावस्य धान्यस्य, कोऽर्थोऽनेन धान्येन द्वौ द्रोणौ

१ ६–२–१४० । २ ६–४–३ । ३ ६–४–१६९ । ४ ६–४–१४१ ।

मीयेते तदा इकण् नाऽऽगच्छति मेयवाचित्वाद् द्रोणस्य। यद्वा द्वयोर्द्रोणयोः समाहारो द्विद्रोणम्। पात्रादित्वात् स्त्रीत्वाभावः। अत्र द्रोणो व्रीहिराढको व्रीहिरितिवत् द्रोणशब्दो मेयवृत्तिस्तेन धान्यस्य समानाधिकरणो द्विद्रोणशब्दः। एवं पञ्चकेन पशून् क्रीणातीति–पञ्चेतिसंख्यामानमस्य "संख्यायाः सङ्घसूत्र०" इति यथा विहितः
5 "संख्यायाऽडतेश्चा०" इति कः, पञ्चकं पञ्चकं सङ्घं पशून् क्रीणातीत्यर्थः। पञ्चकं पञ्चकमित्यत्र पशुसामानाधिकरण्येऽपि पञ्चकशब्दाद् ब्राह्मणाः सङ्घ इतिवदेकवचनम्। द्विद्रोणादय इति–आदिशब्दस्य प्रकारार्थत्वात् येभ्यो वीप्सायां प्रयोगे तृतीया गम्यते ते द्विद्रोणादयः, न तु गर्गादिवत् सन्निविष्टा इति।

'समो ज्ञोऽस्मृतौ वा'। २। २। ५१॥ संजानीते इति–संप्रतेरस्मृताविः
10 त्यात्मनेपदम्।

'दामः सम्प्रदानेऽधर्म्ये आत्मने च'। २। २। ५२॥ नन्वनेन ब्राह्मणेन दानं प्रवृत्तमित्यादिवत् सम्प्रदानस्य करणत्वविवक्षायां दास्या सम्प्रयच्छत इत्यादौ तृतीयोत्पत्तेः किमर्थमिदमारभ्यते? यद्वा सहार्थे इयं तृतीया। दास्यै स्वयं धनं ददाति साऽप्यात्मानं तस्मै ददातीति। दानपूर्वके सम्भोगे दाम् वर्तते। दत्त्वा
15 दास्या सह सम्भुङ्क्ते इति। एवं चाऽत्र क्रियाव्यतिहारोपपत्तेस्तद्द्वारेणैवाऽऽत्मनेपदम्। अत्रोच्यते–एवं हि धात्वन्तरेऽपि विनाऽपि समुपसर्गेणाऽधर्मत्वाभावेऽपि स्यात्। द्रव्यं वृषल्या सम्प्रयच्छत इत्यत्राऽपि सम्प्रदानविवक्षायां चतुर्थी स्यात्। अत इह चतुर्थीप्रत्युदाहरणेषु च तृतीया मा भूदित्येवमर्थमिदं वक्तव्यम्। विवक्षयाऽपि न सिध्यति। विवक्षानियमो हि विना वचनेन दुरधिगम इतीदमारभ्यत इति। ननु
20 सम इति परदिग्योगलक्षणा पञ्चमी ततश्च "पञ्चम्या निर्दिष्टे" परस्य तच्चाऽनन्तरस्येति प्रशब्दव्यवधाने न प्राप्नोतीत्याह–इह संपूर्वस्येति। यद्वा सम इति पूर्वत्र पञ्चम्यन्तमपीह लक्ष्यवशात् षष्ठ्यन्तं विज्ञायते। तत्र व्यवधानेऽपि समा द्योत्यमानार्थत्वाद्दामः सम्बन्धोपपत्तेर्भवत्येव विधिः।

'तादर्थ्ये'। २। २। ५४॥ यूपाय दारु–अत्र यूपादिहेतुभूतस्य दार्वादेर्हेतु-
25 तृतीया नाऽगौणत्वात्।

'रुचिक्लृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु'। २। २। ५५॥ मूत्राय कल्पते यवागूः–यवागूः कर्त्री सम्पद्यते किं मूत्रं? मूत्ररूपमित्यर्थः। ननु मूत्रयवागूशब्दयोर्द्वयोरपि सम्पद्यत इति क्रियया सह सम्बन्धाद् गौणत्वाभावात् कथं मूत्रशब्दा-

---

१ ६-४-१७१। २ ६-४-१३०।

चतुर्थी ? उच्यते–एतत्सूत्रसामर्थ्यादेवाऽत्र गौणमुख्यभावेन क्रियासम्बन्धात् मूत्रस्य गौणत्वम्। तथाहि–प्रथमं यवाग्वाः सह क्रियायाः सम्बन्धः पश्चान्मूत्रस्येति। गौणादिति व्यावृत्त्युदाहरणे तु मूत्रादेर्विशेष्यार्थं मूत्रादिकं प्रथमं क्रियया सम्बन्धनीयम्। यद्वा मूत्रायेति कोऽर्थः ? मूत्ररूपविकारसम्बन्धित्वेन यवागूः सम्पद्यत इत्यर्थः। चैत्राय शतं धारयति–ध्रियते तिष्ठति स्वरूपान्न प्रच्यवते शतं कर्तृ, तत् ध्रियमाणं, प्रयुङ्क्त इति 5 णिग्, अपरपठितश्चुरादौ वा।

'प्रत्याङ्ःश्रुवार्थिनि'। २। २। ५६॥ याचितोऽयाचितो वेति–अधमत्वा-द्याचमाने महत्त्वादयाचमानेऽपि प्रतिजानीते प्रतिपद्यतेऽभ्युपगच्छतीत्यर्थः।

'प्रत्यनो गृणाख्यातरि'। २। २। ५७॥ आचार्यं गृणातीति–आचष्ट इत्यर्थः, अत्राऽऽचार्यमाचक्षाणमिति प्रतिपत्तव्यम्, अन्यथा द्व्यङ्गविकलता स्यात्। 10

'यद्वीक्ष्येराधीक्षी'। २। २। ५८॥ विविधा विशेषानुपलम्भादेकस्मिन् वस्तुनि सादृश्यादिनिमित्तादनेकपक्षालम्बनानवधारणात्मिका मतिर्विमतिः, सन्देह-ज्ञानमिति यावत्। तत्पूर्वकं निरूपणीयम्। अदृष्टमिष्टानिष्टफलं पुण्यपापरूपमप्रत्यक्षं पराभिप्रायादिकं वा। विप्रश्नविषय इति–विचारविषयो दैवादिर्लाभालाभादिर्वा। क्रिया-ऽपीति–पर्यालोचनादिका। तस्य दैवमिति–शुभाशुभमित्यर्थः। दैवे एवेक्ष्ये इति–न 15 त्वभिप्रायादावित्यर्थः। राधीक्षिभ्यां योगाभावादिति–एवं तर्हि मैत्राय राध्यतीत्यादावपि सम्बन्धाभावान्न स्यात् ? न, तत्र मैत्रेणैव सह राधीक्ष्योः सम्बन्धो विवक्षितोऽन्य-स्याऽश्रुतत्वात्। राधीक्ष्यर्थधातुयोगेऽपीच्छन्त्येके इति–पाणिनिव्याख्यातारः, मैत्राय राधयतीतिराधिश्चुरादिरपरपठितोऽत्र गृह्यते इच्छन्ति पाणिन्यादयः।

'उत्पातेन ज्ञाप्ये'। २। २। ५९॥ उत्क्रम्य प्रसिद्धं निमित्तं पततीति 20 बाहुलकात् सोपसर्गादपि "वा ज्वलादि॰" इति णः। निमित्तं द्विधा जनकं ज्ञापकं च। यत्र तादर्थ्यं तत्र जनक एव हेतुः, यथा रन्धनाय स्थाली। अत्र तु तादर्थ्या-भावात् ज्ञापक एव हेतुः, षष्ठ्यपवाद इति–ज्ञाप्यज्ञापकसम्बन्धविवक्षायामित्यर्थः।

'श्लाघह्नुस्थाशपा प्रयोज्ये'। २। २। ६०॥ 'युजण्' सम्पर्चने, प्रयोज्यत इति "य एचाऽत" इति ये प्रयोक्तुं शक्य इति वा, "शक्तार्हे॰" इति घ्यणि, "निप्राद्युजः 25 शक्ये" इति गत्वाभावे, द्वितीया प्राप्तौ वचनम्। मैत्राय तिष्ठते–अत्र "ज्ञीप्सास्थेये" आत्मनेपदं स्थानेनाऽऽत्मानं ज्ञापयतीति। मैत्राय शपते–"शप उपलम्भने" इत्या-

१ ५-१-६२। २ ५-१-२८। ३ ५-४-३५। ४ ४-१-११६। ५ ३-३-६४। ६ ३-३-३५।

त्मनेपदम् । वाचा मात्रादिशरीरस्पर्शने नाऽहं जाने न मया कृतमिति मैत्रं ज्ञापयतीत्यर्थः । केचिन्नेति भोजशाकटायनाः । यस्तु मैत्रादिर्जानन् ज्ञाप्यते तत्र न भवतीति । तथा चाऽन्येषां ग्रन्थे द्विकर्मकोऽयं ज्ञापितस्तत्र केचिद्यस्मै आख्यायते तत् ज्ञाप्यं सम्प्रदानत्वेन प्रतिपन्नाः । केचिद्य आख्यायते तमिति ।

5 '**तुमोऽर्थे भाववचनात्**' । २ । २ । ६१ ॥ भवनं भावो "[1]भावाकर्त्रोर्घञ्" वक्तीति ब्रवीतीति वा "[2]रम्यादिभ्यः कर्तरि" अनट् । भावस्य वचनो भाववचनस्तस्मात् । पाकायेति–पक्तुं पक्ष्यत इति वा वाक्ये "[3]भाववचनाः" इति घञादयः ।

'**गम्यस्याप्ये**' । २ । २ । ६२ ॥ शब्दो ह्यर्थवानपि अप्रयुज्यमानः प्रयुज्यमानश्च भवति । अप्रयुज्यमानश्चाऽर्थप्रकरणशब्दान्तरसन्निधानैः प्रतीयमानार्थः स च 10 गम्य इत्युच्यते । एधेभ्यो व्रजति–नन्वेधार्थं व्रजतीति तादर्थ्य एव चतुर्थी भविष्यति किमनेन ? उच्यते–व्रज्याया एधाहरणार्थतायामिति न सिध्यति ।

'**गतेर्नवाऽनाप्ते**' । २ । २ । ६३ ॥ गतिशब्दस्य ज्ञानाद्यर्थत्वेऽप्यनाप्त इति वचनात् पादविहरणरूपैव गतिर्गृह्यते । ज्ञानादिव्याप्यस्याऽनाप्तत्वासम्भवादित्याह–गतिः पादविहरणमिति । स्त्रियं गच्छति–भजनार्थोऽत्र गमिर्न गत्यर्थ इति न चतुर्थी । 15 पन्थानं गच्छतीति–अनाप्तेऽसम्प्राप्ते कर्मणि चतुर्थी, पन्थास्तु सम्प्राप्त इति चतुर्थ्यभावः । चतुर्थी चेत्यन्य इति विश्रान्तन्यासकर्ता यशोनन्दी ।

'**मन्यस्यानावादिभ्योऽतिकुत्सने**' । २ । २ । ६४ ॥ न त्वाबुसाय मन्ये बुस्यति त्यजत्युपादेयभावमिति "[4]नाम्युपान्त्य०" इति के बुसम् । न त्वा नावं मन्ये, नावादयो लक्ष्यदर्शनेनाऽनुसर्तव्याः । अथ नावन्नयोरत्यन्तोपकारकत्वात् कथमतिकुत्स-20 नत्वं गम्यत इत्याह–नावन्नयोरपीति । परेण स्वेच्छयाऽभिमतं स्थानं पराधीनवृत्तित्वात् प्रकर्षेण नीयत इति परप्रणेयस्तस्य भावः परप्रणेयता । अनायासोच्छेद्यतादिभिरिति–आदिशब्दादचेतनत्वविनश्वरत्वादिग्रहः । कुत्स्यतेऽनेनेति–युष्मदोऽपि मन्यव्याप्यत्वात् पक्षे चतुर्थी प्राप्नोतीत्याह–युष्मदो न भवतीति । कुत्सामात्रेऽपीच्छन्त्येके इति पाणिन्यादयः । परत्वात्षष्ठीति–"[5]कर्मणि कृतः" इत्यनेन तृणशब्दान्नित्यं षष्ठी । 25 युष्मच्छब्दात्तु "[6]वैकत्र द्वयोः" इति षष्ठीविकल्पाद् द्वितीया । यदा तु युष्मदग्रतः "कर्मणि कृतः" इत्यनेन नित्यं षष्ठी तदा तृणशब्दाद् "वैकत्र द्वयोः" इत्यनेन विकल्पेन षष्ठी । तद्विकल्पपक्षे चतुर्थ्यपि । न तत्र तृणाय मन्ता तृणस्य मन्ता तृणं मन्ता वेति । चतुर्थ्यपीति कश्चिदिति–अजितयशोवादी दुर्गसिंहश्च । "कर्मणि कृतः" इत्यनेन

---

१ ५-३-१८ । २ ५-३-१२६ । ३ ५-३-१५ । ४ ५-१-५४ । ५ २-२-८३ । ६ २-२-८५ ।

षष्ठीप्राप्तौ "वैकत्र द्वयोः"[1] इत्यस्य तु पक्षे सिद्धैवेति । न त्वं बुसो मन्यसे । अत्र विशेषणविशेष्यभावेनोभयमपि कर्म उक्तम् । यथा कटः क्रियन्ते वीरणानि ।

'**हितसुखाभ्याम्**' । २ । २ । ६४ ॥ इति आतुरायेति, 'तुर' त्वरणे, पठितो जुहोत्यादौ द्रष्टव्यः ।

'**तद्भद्रायुष्यक्षेमार्थार्थेनाशिषि**' । २ । २ । ६६ ॥ भद्रक्षेमार्थयोरन्यत्रैकार्थ- 5
त्वेऽपि क्षेममापदोऽभावो भद्रं सम्पदुत्कर्ष इत्यर्थभेदाद् द्वितयोपादानम् । आयुष्यमस्तु चैत्रायेति-आयुः प्रयोजनमस्य घृतादेरायुष्यं घृतादि । ततश्च दीर्घमायुरस्तु मैत्रायेत्यादौ चतुर्थी न प्राप्नोति । यत आयुःशब्देन जीवितमेवाऽभिधीयते न तु जीवितकारणं घृतादिकं, उच्यते-कार्ये कारणोपचारात्, यथेन्द्रः स्थूणा । यदा त्वायुरेव भेषजादि-
स्वार्थे घ्यण्यायुष्यशब्दो निष्पाद्यते तदा निर्विवादं सिद्धमेव । तद्ग्रहणमिति-तर्हि 10
प्रागप्यर्थग्रहणमस्तु, सत्यम्; तदर्थानामाशिषि नियमार्थमिदम् ।

'**परिक्रयणे**' । २ । २ । ६७ ॥ वेतनादीति-आदिशब्दाद्भाटकादिपरिग्रहः । करणाश्रयणं किमिति करणाश्रयणं विना परिक्रीयतेऽस्मिन्नित्यनया व्युत्पत्त्या मासादपि स्याच्चतुर्थी । शताय परिक्रीतो मासमिति-क्रीत इति रूपं कर्मणि कर्तरि वा, तथा-
हि-परिक्रीयते स्म परिक्रीतः कः? कर्मतापन्नश्चैत्रः, कं मासं? कोऽर्थो मासे; यद्वा परि- 15
क्रीणीते स्म कर्तरि क्तः कर्मणोऽविवक्षितत्वात् । अथाऽत्र मासमिति कर्म विद्यते तत्कथं कर्तरि क्तः? उच्यते, मासमित्यत्र "कालाध्वभाव०"[2] इत्यनेनाऽऽधारस्य युगपत्कर्मसंज्ञाऽकर्मसंज्ञा च, तत्र कर्मसंज्ञायां कर्मणि द्वितीया, अकर्मसंज्ञायां तु कर्तरि क्तः ।

'**शक्तार्थवषड्नमःस्वस्तिस्वाहास्वधाभिः**' । २ । २ । ६८ ॥ पृथग्यो-
गाद्वेति निवृत्तमिति-तत्र कश्चित् सामस्त्येन पृथग्योगः कश्चिदेकदेशेन सम्भवति । 20
अत्र तावदेकदेशेन, तथाहि-हितसुखाभ्यामित्यनेन स्वस्तिशब्दस्यैकयोगाकरणात् । एकयोगे च कृतेऽनाशंसायां हितसुखस्वस्तिभिरित्यनेन आशंसायां तु तद्भद्रेत्यनेन, तदिति पूर्ववस्तुपरामर्शेन क्षेमद्वारेण वा विकल्पः सिद्ध एव, तदकरणाद्वेति विकल्पमित्यर्थः । ननु कथमत्रैकदेशेन पृथग्योगो न सामस्त्येन? उच्यते-तद्भद्रेत्यत्र व्य-
भिचारात् । तथाहि तद्भद्रेत्यत्राऽर्थपरो निर्देशोऽयं तु शब्दपर एवेति । "परिक्रयणे"[3] 25
इत्यनेन त्वेकयोगत्वं न व्याख्येयमर्थस्याऽसङ्गतेः । तत्र हि परिक्रयणे वर्तमानान्नाम्न इत्युक्तम् । अनेन त्वेकयोगे वषडादिवत् परिक्रयणशब्दस्वरूपपरिग्रहः स्यादिति । परत्वान्नित्यमेवेति ननु "स्पर्धे" परः समानविषयो स्पर्ध इति समानविषयत्वं,

---

१ २-२-८५ । २ २--२-२३ । ३ २-२-६७ ।

" तद्भद्रा० " इत्यस्य दर्शयति, तथाहि–स्वस्ति जाल्मायेत्यत्र जाल्मत्वेनाऽऽशीरभावात्तत्वाख्यानमिदमिति स्वस्तिचतुर्थ्या अवकाशः। क्षेमं भूयात् सङ्घायेत्यत्र तु क्षेमचतुर्थ्या अवकाशः। स्वस्ति प्रजाभ्य इत्यत्रोभयप्राप्तौ परत्वादाशिष्यपि नित्यं स्वस्तिचतुर्थी भवतीत्यर्थः। नमसेति–यद्याऽस्तु नमसा योगः तथापि नमः शब्दस्याऽर्थवतो
5 ग्रहणादनर्थकयोगे न भवति। अत्र हि नमस्यधातुरर्थवान्न तु तदेकदेशो नमः शब्द इति। अथवा पदान्तरसम्बन्धानपेक्षणादन्तरङ्गया द्वितीयया कारकविभक्त्या उपपदविभक्तिस्तदपेक्षणाद्बहिरङ्गा चतुर्थी बाध्यते। 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति न्यायात्। ननु कारकविभक्तिरपि क्रियापदापेक्षणीति कथमन्तरङ्गा ? नैष दोषः कारकस्य क्रियामात्रसम्बन्धाव्यभिचारात्। यद्येवमिति–कारकविभक्त्या द्वितीयया
10 बाध्यमाना कथमत्र चतुर्थीति प्रश्नार्थः।

'आङ्मर्यादाऽवचने'। २। २। ७०॥ प्रवृत्तस्य यत्र निरोधः स मर्यादा। मर्यादाभूतमेव यदा क्रियया व्याप्यते तदाऽभिविधिः। पाटलिपुत्रमवधीकृत्येति–एतावानर्थ आङा द्योत्यते।

'पर्यपाभ्यां वर्ज्ये'। २। २। ७१॥ वर्ज्यवर्जकसम्बन्धः पर्यपाभ्यां
15 द्योत्यत इति, " वाक्यस्य परिवर्जने " इत्यनेन परिपरीत्यत्र द्वित्वम्। अपशब्दो मैत्रस्य–अपगतः शब्दात्। तत्पुरुषस्य पूर्वपदप्रधानत्वात् पूर्वपदेन अप इत्यनेन सह मैत्रशब्दस्य योगोऽस्तीति, न वर्ज्य इति व्यावृत्तेर्व्यङ्गविकलता। अत्र मैत्रशब्दात् मा भूत्।

'यतः प्रतिनिधिप्रतिदाने प्रतिना'। २। २। ७२॥ प्रतिनिधीयत
20 इति–प्रतीतः सन् मुख्यस्थाने निधीयत–आरोप्यते–सदृशः क्रियते इति तात्पर्यार्थः। तुल्यजातीयेनाऽतुल्यजातीयेन वा विशोधनमिति शेषः। प्रद्युम्नो वासुदेवात् प्रति। द्युभिर्मीयते " द्युद्रुनिभ्यो माङो डित् " प्रद्युम्नः सदृशः क्रियते, केन सह ? वासुदेवेनेति " तुल्यार्थै० " इति तृतीयाषष्ठ्योः प्राप्तिः। श्रेणीः कायति प्रसन्नचक्षुषेति श्रेणिकस्तस्मात् " प्रतिना पञ्चम्याः " इति तस्। तिलेभ्यः प्रतीति–प्रयच्छति प्रददाति, कान्
25 माषान् ? कथम्भूतान् प्रति ? प्रतिदानभूतान्, केषां तिलानामिति प्रतिशब्दाद् द्वितीयैकवचनम्। प्रति सिञ्चति–सिचिरिह दाने, नाऽत्र सिचः प्रतिना योगोऽपि तु सर्पिष इति " स्थासेनि० " इत्यनेनोपसर्गत्वाभावान्न षत्वम्।

'आख्यातर्युपयोगे'। २। २। ७३॥ नियमपूर्वकेति–नियमो विद्याग्रहणार्थं

---

१ ७–४–८८। २ उणा० २६६। ३ २–२–११६। ४ ७–२–८७। ५ २–३–४०।

गुरुशुश्रूषादिकं शिष्यवृत्तमाख्यायते न तूपयोगमात्रं, यत उपयोगमात्रं नटादपि भवत्यतस्तस्मादपि स्यात्पञ्चमी । आगमयतीति–आगमं गृह्णाति णिज् बहुलं, आगच्छन्तं वा प्रयुङ्क्ते । प्रत्येकमिति–प्रतीतमेकं निमित्तं तेन बुद्धः ।

'**गम्यपः कर्माधारे**' । २ । २ । ७४ ॥ एवमिहाऽपीति–अयमर्थः–प्रासादान्निःसृत्याऽपक्रम्य चक्षू रश्मिद्वारा प्रेक्षते, प्रासादान्निःसरता चक्षुषा कृत्वा देवदत्तः प्रेक्षते वा; तत्ततोऽपक्रामति । अयमर्थः–ततः प्रासादेस्तच्चक्षुरादि अपैति निस्सरतीति तस्याऽपायेऽवधिभूतत्वादपादाने पञ्चमी सिद्धैव । अनपक्रामद्भीति–एतन्नैयायिकमताभिप्रायेणोक्तं, ते हि प्राप्यकारीणीन्द्रियाणि मन्यन्ते । दृशेर्वर्तनादिति–दृशेरिति कोऽर्थः ? दृशिसमानार्थस्य ईक्षेरित्यर्थः ।

'**प्रभृत्यन्यार्थदिक्शब्दबहिरारादितरैः**' । २ । २ । ७५ ॥ दिशि दृष्टाः शब्दा "मयूरव्यंसक॰" इति दृष्टलोपः । दिशि ये वाचकत्वेन दृष्टास्ते इह दिग्शब्दा इति विज्ञायन्ते, न तु दिशि वर्तमाना एव तेन दिशो वाचकत्वेन दृष्टस्य शब्दस्य देशे काले आदिशब्दाद् भावे द्रव्ये च वृत्तावपि तद्योगे पञ्चमी । ग्रीष्मादारभ्येति–आरभ्येति क्त्वान्तमक्त्वान्तमव्ययं वा । प्रागेव "अदिक्स्त्रियाम्॰" इति स्वार्थे ईनः नपुंसकत्वं तु सामान्यभावेन, तथा वर्तते किं तत्कर्तृ प्राचीनं किं तत् आम्रा इति । अञ्चत्यन्तयोगे यथा प्राग्ग्रामादित्यादौ पञ्चमी तथाऽत्राऽपीति कश्चित् मुह्येत् तं प्रत्याह–न्यग्मैत्रस्येति न्यक् उपसर्जनं यथा भवत्येवंस्थित इत्यर्थः । अन्यार्थाद् भिद्यते इति–अयमर्थोऽन्य इति प्रकृतिविलक्षणोऽर्थ उच्यते, इतर इति च दृश्यमानप्रतियोगीत्यर्थः । छात्राणामिति–छात्राणामवयवानां योऽवयवश्छात्रस्तस्मात्पूर्वं छात्रमामन्त्रयस्वेति पूर्वत्वं छात्रान्तरापेक्षं न छात्राणामिति समुदायापेक्षम् । कायस्य पूर्वमिति–कायस्याऽवयविनो यद्भागान्तरं किं विशिष्टं पूर्वं कस्याः सकाशान्नाभेः । कायस्य सम्बन्धि यदवयवान्तरं पूर्वं तस्य नाभिरूपेणाऽवयवान्तरेण सह सम्बन्धः ।

'**गुणादस्त्रियां नवा**' । २ । २ । ७७ ॥ जडस्य भावो दृढादित्वाद् ट्यण्, परिख्यातस्य भावः "पतिराजान्त॰" इति ट्यण् ।

'**आरादर्थैः**' । २ । २ । ७८ ॥ दुरान्तिकादिनैव योग इति–कथं वर्तते, किं तत्, कर्तृ दूरं, कस्य ग्रामस्य ? किम्भूतं दूरं हितं, दूरशब्देनैव ग्रामस्य सम्बन्धो विवक्षितो न तु हितशब्देन, असत्त्ववचनैरिरितिधर्ममात्रवृत्तिभिः, कारकशेषत्वात् षष्ठीप्राप्तौ वचनम् ।

---

१ ३–१–११६ । २ ७–१–१०७ । ३ ७–१–६० ।

'स्तोकाल्पकृच्छ्रकतिपयादसत्त्वे करणे' । २ । २ । ७९ ॥ यतः स्तोकत्वादेर्निमित्तत्वाद्द्रव्ये विशेष्ये स्तोकादिशब्दप्रवृत्तिः, स गुणोऽसत्त्वं शब्दस्य प्रवृत्तिनिमित्तमित्यर्थः । तेनैवेति–असत्त्वरूपेणाऽयमर्थस्तिरोहितधनादि विशेष्यं स्तोकादिरूपेणैव सामान्यात्मनाऽभिधीयमानं धनादिरूपव्यावृत्तं स्तोकादिरूपापन्नं द्रव्यं गुणः क्रिया वा
5 यदा प्रतीयते तदा द्रव्याद्यसत्त्वमिति । स्तोकान्मुक्त इति–"[1]असत्त्वे ङसेः" इति पञ्चम्यलुप् । असत्त्ववाचित्वादिति–द्रव्यस्यैव विशेषसंख्यायोगित्वादिति शेषः । द्वित्वबहुत्वासम्भवे इति–एकत्वनिबन्धनैकवचनस्याऽप्यसम्भवे औत्सर्गिकमेकवचनम्, स्तोकादिशब्दानां स्तोकार्थाभिधायकत्वेनाऽसत्त्ववाचित्वात् क्रियां प्रति साधकतमत्वाभावात् करणत्वाभावे कथमनेन पञ्चमीत्याशङ्कायाममीषां पूर्वाचार्यप्रसिद्ध्या करणत्वमाह–
10 यद्वा स्तोकेन राहुणा मुक्तः शशीत्यादौ मोचनामोचनलक्षणं क्रियाद्वयं विद्यते । यतः स्तोकेन मुक्त इति–कोऽर्थः ?, किञ्चिन्मुक्तः किञ्चिदमुक्त इत्यर्थः । ततश्च कस्यायाः क्रियाया अपेक्षयाऽत्र करणसंज्ञेत्याह स्तोकेत्यादि, स्तोकस्याऽभिनिर्वृत्तिं निष्पत्तिं स्तोकस्य चाऽनिर्वृत्तिमनिष्पत्तिमाश्रित्य स्तोकादीनां करणत्वप्रसिद्धिमाचक्षते पूर्वाचार्याः ।

'अज्ञाने ज्ञः षष्ठी' । २ । २ । ८० ॥ वेति निवृत्तम् । भिन्नविभक्तिवि-
15 धानादिति शेषः । सर्पिषो जानीतेऽत्र "[2]ज्ञः" इत्यात्मनेपदम् । अत्र करणस्य सम्बन्धिविवक्षया सर्पिष इदं ज्ञानं नाऽन्यस्येति षष्ठी सिध्यतीति किमर्थोऽयं योग इत्याह-तृतीयापवादो योग इति–अयमर्थः, सिध्यति षष्ठी किन्तु करणविवक्षायां तृतीया मा भूदित्ययं योगः । सर्पिषामिति–आजगव्यमाहिषाणां घृतानामित्यर्थः ।

'शेषे' । २ । २ । ८१ ॥ क्रियाकारकपूर्वक इति–क्रिया च कारकं च क्रिया-
20 कारके ते पूर्वे यस्य स तथा यथा राजपुरुषः । राजा कर्ता पुरुषं बिभर्ति अतो राजपुरुष इत्युच्यते । कर्माद्यविवक्षालक्षण इति कर्मादिभ्योऽन्य इति तु विशेषेभ्योऽन्यत्वं विवक्षितं न तु सामान्यादनाश्रितविशेषात् कारकादपि । अश्रूयमाणक्रियो यथा राजपुरुष इत्यादि, श्रूयमाणक्रियो यथा न माषाणामश्नीयादित्यादि । अस्येदं शब्दस्य यो भावः प्रवृत्तिनिमित्तं स भावो रूपं यस्य स सम्बन्धविशेष इति–असंबन्धाद् भिद्यमानः
25 सम्बन्धः सम्बन्धविशेष उच्यते, यावता सम्बन्ध इत्युक्तेऽपि सिध्येत्, विशेषज्ञापनायोक्तम् । प्रथमापवाद इति–एकद्विबहाविति संख्यामात्रमुपादाय नाम्नः प्रधानादप्रधानाच्च सामान्येन प्रथमा विधीयते तत्राऽयं षष्ठीविधिर्गौणादिति, विशेषमुपादाय प्रवर्तमानस्तदपवादो भवति ।

'रिरिष्टात्स्तादस्तादसतसाता' । २ । २ । ८२ ॥ परस्तादिति–परः परा वा

---

१ ३–२–१० । २ ३–३–८२ ।

प्रकृतिस्ततः "[1]परावरात्स्तात्" "[2]सर्वादयोऽस्यादौ" इति पुम्भावः। दक्षिणपश्चादिति–दक्षिणा च साऽपरा च दक्षिणाऽपरा तस्यां वसति। रिप्रभृतयः प्रत्ययाः स्वार्थिका दिक्शब्देभ्यो विधीयन्तेऽतस्तदन्ता अपि दिक्शब्दा एवेति "शेषे" इत्यस्याऽपवादः। "[3]प्रभृत्यन्यार्थ०" इति पञ्चमी विधीयते। अत एव दक्षिणा ग्रामाद्रमणीयं, दक्षिणाहि ग्रामाद्रमणीयमिति "[5]याही०" इति प्रत्ययद्वययोगे षष्ठी न लभ्यते 5 इत्याह पञ्चम्यपवाद इति।

'कर्मणि कृतः'। २। २। ८४॥ द्वितीयापवाद इति, "[6]कर्मणि" इत्यनेन प्राप्तायाः। पुत्रपौत्राणामिति–पुत्रस्याऽपत्यमनन्तरं "[7]पुनर्भूपुत्र०" इति अञ्। पुत्रस्य पौत्राः पुत्रसहिताः पौत्रा वेति विधेयम्, द्वन्द्वे तु "[8]गवाश्वादिः" इति समाहृतिः स्यात्। पिबतीति पिबः, "[9]घ्राध्मा०" इति शः। कृत इति किं? अयमर्थः, ननु कर्म कारकं 10 तच्च क्रियामन्तरेण न सम्भवति। यतः क्रियायाः कारकं कारकं भवति। क्रिया च प्रत्ययसहितं धातुमाक्षिपति, धातोश्च द्वये एव प्रत्यया विधीयन्ते त्यादयः कृतश्च। तत्र "[10]तं पचंति०" इत्यादि ज्ञापकात् त्यादिप्रयोगे द्वितीयाविधानात्कृत् प्रयोग एव षष्ठी भवति किं कृद्ग्रहणेनेति? नैवम्, कृद्ग्रहणमन्तरेण तद्धितप्रयोगेऽपि यत्कर्म तत्राऽपि षष्ठी स्यात्तन्निषेधार्थं कृद्ग्रहणम्। कृतपूर्वीकटमिति–वर्त्तते कः? कर्त्ता कृतपूर्वी पूर्वं 15 कृतवानित्यर्थः। कं? कृतपूर्वी कटम्। तत्र यथा चित्रगुरित्यादौ बहुव्रीहिणा स्वामिसामान्येऽभिहिते विशेषाभिधानाय चैत्रादिः प्रयुज्यते तथाऽत्राऽपि सामान्यकर्मण्यभिहिते विशिष्टकर्माभिधानाय कटादेः क्तेनाऽनभिहितस्य द्वितीयान्तस्य प्रयोगः। कथमिति–त्यागोऽस्याऽस्तीति इनि तद्धिते–प्रत्ययेऽर्थस्येत्यादि कर्मणि षष्ठी न प्राप्नोत्याशङ्कार्थः। "[11]युंजभुज०" इति घिनण्। "[12]जीण् दृक्षि०" इति "[13]अत्सूजोरिन्" 20 इति यथाक्रमं त्यागीत्यादिषु प्रत्ययाः।

'वैकत्रद्वयोः'। २। २। ८५॥ द्वयोः कर्मणोरिति–ननु कृत इत्यस्यैव षष्ठ्यन्तस्य द्वयोरिति कस्मान्न विशेषणं, तत्राऽपि हि द्वयोः कृदन्तयोरेकं यत्कर्म तत्र षष्ठी वा भवतीत्ययं सूत्रार्थो घटते, तथा च अपां स्रष्टा, भेत्ता च मैत्र इत्यादावेव विकल्पः स्यादिति, नैवम्; एवं सति कर्मणि कृतो द्वयोश्च वेत्येकमेकयोगं कुर्यात्। एवं च सति 25 एकस्य कृतः कर्मणि नित्यं षष्ठी भवति द्वयोस्तु कृदन्तयोर्वा भवतीति सूत्रार्थे समस्तार्थस्य सिद्धत्वात्। तस्मात् पृथग्योगात् कर्मण एव विशेषणं न कृत इत्यस्य।

---

१ ७-२-११६। २ ३-२-६१। ३ २-२-७५। ४ ७-२-१२०। ५ २-२-८३। ६ २-२-४०। ७ ६-१-३९। ८ ३-१-१४४। ९ ४-३-९८। १० ६-४-१६१। ११ ५-२-५०। १२ ५-२-७२। १३ ५-२-७१।

अन्यत्रेति–यतः " कर्मणि कृतः " इत्यनेन द्वयोरपि कर्मणोः षष्ठी प्राप्ता पक्षेऽनेन निषिध्यते। अजाया नेतास्रुघ्नमिति, एकत्रेति सामान्येन निर्देशात् प्रधानाप्रधानकर्मणोरविशेषेण ग्रहणमित्युभयत्रैवोदाहरति। ननु कर्मणीत्यधिकृतत्वादेकशब्दस्य च सद्वितीयव्यपेक्षत्वादेकत्रेत्युक्तेऽपि द्वयोः कर्मणोरेकतरस्मिन्निति गम्यत एव किं
5 द्वयोरित्यनेन? नैवम्, एवं सति 'प्रधानाप्रधानसन्निधौ प्रधाने कार्यसंप्रत्यय' इति न्यायात् प्रधान एव कर्मणि स्यात्। यद्वा गौणादित्यधिकारात् कर्मापेक्षयाऽपि गौणकर्मण्येव स्यादिति द्वयोरपि प्रधानाप्रधानकर्मणोः पर्यायेण षष्ठीविकल्पार्थं द्वयोरित्युपादानमित्यदोषः।

'**कर्तरि**'। २। २। ८६॥ आसितुं पर्यायः, " पर्यायाः० " इति णकः, आ-
10 सिका। आसनं, आसना " णिवेत्ति० " इत्यनः।

'**द्विहेतोरस्त्र्यणकस्य वा**'। २। २। ८७॥ नित्यं प्राप्त इति–" कर्तरि " इत्यनेन। खल्विदमिति–खल संचये च खलतीति " भृमृतॄ० " इति बहुवचनादुः। संगृह्यन्ते स्तोकशब्दैर्बहवोऽर्था अस्यामिति, " ऋहृस्रृ० " इत्यणिः। अगोपालकेनेति–पालयतीति णकः, गवां पालकः " अकेन क्रीडाजीवे " समासः। अन्तर्धौ येनाऽदर्शनमिच्छतीति–
15 पञ्चमीविधायकं पाणिनिसूत्रमिदम्। अस्य चाऽयमर्थः–अन्तर्धौ अन्तर्धिविषये सति वाऽऽत्मनः कर्मतापन्नस्य येनोपाध्यायादिना कर्तृभूतेन यददर्शनं तदिच्छतीत्यर्थः। भिन्नकृतोरिति–ननु पाक इत्यत्राऽपि " भावाकर्त्रोर्घञ् " प्रादुर्भाव इत्यत्राऽपि स एव तत्कथं भिन्नकृतोरित्युच्यते? सत्यम्, धातुभेदात्तस्याऽपि भेद इत्यदोषः। भेदिका चैत्रस्य मैत्रस्य काष्ठानामिति–भेदयितुं पर्याय इत्येव कार्यं, भावे तु " णिवेत्ति० "
20 इत्यनेनाऽनप्रत्यय एव स्यात्।

'**कृत्यस्य वा**'। २। २। ८८॥ गेयो माणवको गाथानामिति–अत्र व्यावृत्तेर्गाथानामित्यत्र कर्मणि साफल्यं, माणवकात्तु अगौणत्वाद् प्राप्तिरेव नाऽस्ति।

'**नोभयोर्हेतोः**'। २। २। ८९॥ ननु द्विकर्मकेषु धातुषु तावदयं प्रतिषेधस्तत्रैवोभयप्राप्तिसम्भवात्। तत्र प्रधानकर्मणः कृत्येनैवाभिहितत्वात् षष्ठ्यविषयत्वात्
25 'प्रधानाप्रधानसन्निधौ प्रधान एव सम्प्रत्यय' इति न्यायात् तव्यादिवद् अप्रधानादप्यप्रसङ्गात् कर्तर्येव प्रतिषेधो न्याय्य इत्युभयग्रहणमतिरिच्यते, नैवम्; द्वितीया बाधिका हि कृत्प्रयोगे षष्ठी विधीयते। द्वितीया चाऽप्रधानाद्यथा भवति तथाऽत्र षष्ठ्यपि

---

१ २–२–८३। २ ५–३–१२०। ३ ५–३–१११। ४ २–२–८६। ५ उणा० ७१६। ६ उणा० ६३८। ७ ३–१–४१।

भविष्यति । उपस्थानीयः पुत्रः पितुः–उपतिष्ठते "प्रवचनीयादयः" इति कर्तर्यनीयः, अत्र पितुः शब्दात् कृत्यस्य वेति कर्तरि षष्ठी, द्वितीये तु उपस्थीयते मैत्र्यादेवार्चेति आत्मने इति कर्मणि तव्यानीयौ "कर्मणि कृतः" इति पुत्रात् षष्ठी ।

'तृन्नुदन्ताव्ययक्स्वानातृश्शतृङ्णिणकचखलर्थस्य' । २ । २ । ९० ॥ "कर्मणि कृतः", "कर्तरि" इति च प्राप्तयाः षष्ठ्या अपवादः । पायं पायं–"ख्णम् चाऽभीक्ष्ण्ये", "भृश०" इति द्वित्वं च । भोक्तुं व्रजतीति–अत्र हेतुहेतुमद्भावे तृतीया, "तुमोऽर्थे०" इत्यनेन चतुर्थी वा । सम्बन्धविवक्षायां षष्ठी वा । आहरिष्यतीति "क्रियायां०" इति णकचि आहारकः । 5

'क्तयोरसदाधारे' । २ । २ । ९१ ॥ ननु सन्धात्वर्थस्तत्र धातुरेव वर्तते कृत्यप्रत्ययस्तु "कर्तरि" इत्यादिना कारके भावे च विधीयते । तत्र सति प्रत्यय-विधिरेव नाऽस्ति कथं प्रतिषेधः ? सतोऽन्यस्मिन्नर्थे इति, नैष दोषः, सदर्थसहचारी प्रत्ययोऽपि सन्नित्युच्यते । यद्वा धात्वर्थोऽपि सन्निति प्रत्ययत एव विज्ञायते । नहि धातुतः क्रियालक्षणो धात्वर्थो भूतो भवन् भविष्यन्निति वा ज्ञातुं शक्यः । धातुर्हि क्रियामात्रमाह न त्वमुं विशेषम् । स तु प्रत्ययादेव प्रतीयत इति कर्त्रादिकारकवृत्तिरपि प्रत्ययः सतीति विज्ञायते । कथमिति–शीलितो मैत्रेणेत्यादावपि "ज्ञानेच्छा०" इति क्तो वर्तमानताप्रतीतिरप्यस्ति तत्कथं निषेध इत्याशङ्कार्थः । भूतेऽयं क्त इति–यद्ययं भूते क्तः कथं वर्तमानताप्रतीतिः ? उच्यते–वर्तमानमध्ये भूतो भविष्यंश्च कालोऽस्ति, अतो भूते क्तः । यथा कटं करोतीत्यत्र कटस्य येऽवयवा निष्पन्नास्तदपेक्षयाऽतीतत्वं ये च निष्पद्यमानास्तदपेक्षया वर्तमानत्वं ये च निष्पत्स्यन्ते तदपेक्षया भविष्यत्वम् । अहेः सुप्तमिति–सदाधारादन्यत्र चातुःशब्द्यं भवति, यदा कर्तरि क्तस्तदा इममहिः सुप्तो देशं यदा कर्मणि तदाऽयमहिना सुप्तो देशः । भावे तु "वा क्लीबे" इति वा षष्ठ्यामहेः सुप्तमहिना सुप्तमिति । अकमेवाराणसीमिति–वरणा चाऽसिश्च वरणासी नद्यौ ते विद्येतेऽस्यां "अहरादिभ्योऽञ्" । पृषोदरादित्वाद् ह्रस्वदीर्घव्यत्यये ऽञन्तत्वाद् ङ्याम् । यद्वा वरण इति वीरणाख्या वराणास्तृणविशेषाः सन्त्यस्यां "तृणादेः सल्," "लिन्मन्यनि०" इति स्त्रीत्वे वराणसाया अदूरभवा "निवासादूर०" इत्यण् । 10 15 20 25

'एष्यदृणेनः' । २ । २ । ९४ ॥ शतं दायी–शतं धारयन् ददाति । "णिन् चाऽऽवश्यक०" इति णिन् करोषीति हरसीति पूर्ववद् णिन् ।

---

१ २–२–८३ । २ २–२–८६ । ३ ५–४–४८ । ४ ७–४–७३ । ५ २–२–६१ । ६ ५–३–१३ । ७ ५–२–९२ । ८ २–२–९२ । ९ ६–२–८७ । १० ६–२–८१ । ११ ६–२–६९ । १२ ५–४–३६ ।

'सप्तम्यधिकरणे' । २ । २ । ९५ ॥ अत्र सत्यर्थे वैषयिके वा सप्तमी।

'नवा सुजर्थैः काले' । २ । २ । ९६ ॥ अधिकरणे नित्यं सप्तमी सिद्धैव पक्षे षष्ठीविधानार्थम् । बहुव्रीह्याश्रयणं किमिति ? अन्यथा षष्ठीतत्पुरुषाश्रयेण सुजर्थे काल इति कृते यदाऽर्थादिनाऽह्नि भुङ्क्ते इति द्विस्त्रिर्वेति प्रतीयते, तदापि स्यात्तदा
5 मा भूदित्येवमर्थं तदाश्रयणमित्यर्थः । द्विः कांस्यपात्र्यामिति–कंसायेदं कंसीयं "परिणामिनि तदर्थे" इतीयस्ततः कंसीयस्य विकारः "कंसीयाञ्ञ्यः" इति ञ्यो यलुक् च । द्विरह्वा भुङ्क्ते इति–अहरधिकरणमपि अत्राऽशने करणविवक्षामनुभवतीति तृतीयैव भवति । नियमार्थं तु वचनमिति–सुजर्थैरेव योगे काले सप्तमी वा भवति। सुजर्थैर्योगे काल एव वा सप्तमी भवतीत्युभयथाऽपि नियमात् प्रत्युदाहरणेषु आधार-
10 सप्तम्येव न षष्ठी ।

'कुशलायुक्ते नासेवायाम्' । २ । २ । ९७ ॥ आयुक्त इति–युजूंपी आयुङ्क्ते युजिं आयुज्यते स्म, कर्तरि क्तः ।

'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः' । २ । २ । ९८ ॥ सप्तम्यर्थवचनमिति अयमर्थः स्वाम्यादीनां गवादिसम्बन्धित्वं तन्निवृत्तौ हि तेषां स्वाम्या-
15 दिभावाभावस्तत्राऽस्त्येव षष्ठी, सप्तमी तु क्रियाप्रतीत्यभावान्नाऽस्तीति पक्षे सप्तमीप्रापणार्थं वचनमिति ।

'व्याप्ये क्तेनः' । २ । २ । ९९ ॥ वेति निवृत्तमिति–व्याप्योपादानात्तेन चाऽधिकारभेदः । पृथग्योगादिति वा । प्रत्ययस्याऽर्थः प्रत्ययार्थः । प्रत्ययार्थः कर्ता यस्य धात्वर्थस्य अध्ययनलक्षणस्य स तथा, तेन व्याप्यमाने व्याकरण इति ।

20 'तद्युक्ते हेतौ' । २ । २ । १०० ॥ तेन व्याप्येन युज्यते स्म । तथाऽत्र नानादेशजविनेयानुग्रहार्थं युक्तं, हेतुर्निमित्तं कारणमिति–बहुतरपर्यायमिति कथनम् । हेतुशब्दोपादानात्त्विह विशिष्टमेव निमित्तमभिप्रेतं न निमित्तमात्रमन्यथा तद्युक्ते निमित्ते इति कृते दात्रेण धान्यं लुनातीति निमित्तमात्रवाचिनो दात्रादपि स्यात्सप्तमी । न चोपपदविभक्तेः कारकविभक्तिर्बलीयसीति न भविष्यतीति वाच्यम्, यतो
25 यथा कर्तृकरणयोस्तृतीया विहितेति तृतीयायाः कारकविभक्तित्वं; तथाऽत्र सप्तम्या अपि व्याप्येन युक्त इति कारकश्रुत्या कारकविभक्तित्वम् । सा ह्युपपदविभक्तिर्यत्र कारकगन्धोऽपि नाऽस्ति यथा शक्तार्थवषडादिभिर्योगे चतुर्थीति । तस्माद्धेतुशब्दाभिधेयं विशिष्टमेव निमित्तं, यदर्थः क्रियारम्भो तदेवाऽत्र निमित्तमभिप्रेतं न निमित्तमात्रं

१ ७–१–४४ । २ ६–२–४१ ।

तेन दात्रान्न सप्तमी। नहि दात्रार्था लवनक्रियेति। द्वीपिनमिति–द्विधा गता आपो यत्र "[1]ऋक्पूः०" "[2]द्व्यन्तरनवर्णो०" द्वीपमस्याऽस्ति इन्। अयं नन्तः पुंलिङ्गः। यदा तु द्वीपमाचष्टे णिजि "[3]विपिना०" इति निपात्यते तदाऽकारान्तः, अभिधानद्वीपिनाविति प्रतिपदपाठात् पुंक्लीबः। कुञ्जौ दन्तावस्य स्तो "[4]मध्वादिभ्यो र०"। पुष्पं लातीति डे ज्ञाताद्यर्थविवक्षायां के च। देवस्य पादाविति–अस्त्यत्र पादलक्षणेन कर्मणा देवस्य योगो हेतुत्वं नाऽस्तीति। 5

'अप्रत्यादावसाधुना'। २। २। १०१॥ इहाऽऽदिशब्दस्य व्यवस्थावाचित्वात् प्रति परि अनु अभि इत्येत एवाऽप्रत्यादावित्यनेन ग्राह्याः। ननु साधुशब्देन सदाचार उच्यते। आचरणं च क्रियाविषयमिति मातृशब्देन तत्स्था परिचर्यादिक्रिया उच्यते इति मातृपरिचरणादिक्रियाणां सम्यगाचरिता मातरि साधुरित्युच्यते तद्वैपरित्येनाऽसाधुर्मातरीति। ततश्चाऽसाधुर्मैत्रो मातरीति मातृशब्दस्य साधुत्वस्य निषेधात्प्रथमं मात्रा साधोर्योगादन्तरङ्गत्वादुत्तरेणैव सिद्धा सप्तमी किमनेनेति? नैवम्। पदान्तरसम्बन्धादेकपदवर्त्तित्वेन नञ्सम्बन्धस्याऽन्तरङ्गत्वादसमर्थनञ्समासस्य च नियतविषयत्वादर्थान्तराभिधायि ना नञ्समासेनैव मातुः सम्बन्धो युक्तोऽब्राह्मणमानयेत्यादिवत्। 10 15

'साधुना' २। २। १०२। इत्युत्तरेण न सिध्यतीति वचनम्, नन्वभियोगे "[5]लक्षणवीप्स्ये०" इत्यनेन प्रत्यादियोगे तु "[6]भागिनि०" इत्यनेन च द्वितीयाया विशेषविधानात् सप्तमी न भविष्यति किमप्रत्यादावित्यनेन? सत्यम् असाधुशब्दाभावे द्वितीया चरितार्थेति प्रत्यादिप्रयोगे सप्तमी स्यात्।

'निपुणेन चार्चायाम्'। २। २। १०३॥ अर्चायामिति–अर्चिण् अर्चने 20 "[7]भीषिभूषि०" इत्यन्, बहुवचनात्–मातरि निपुणः। अत्र मातरि सुष्ठु वर्तत इति मैत्रादेः प्रशंसा गम्यत इति।

'स्वेशेऽधिना'। २। २। १०४॥ ईशितव्य इति–यथेष्टं विनियोज्ये। अधेरुपरिभावस्वस्वामिसम्बन्धयोर्द्योतकत्वेऽपि स्वेशे इति वचनादत्र स्वस्वामिद्योती गृह्यते। तत्रेति–सम्बन्धस्योभयनिष्ठत्वे युगपदुभयत्र सप्तमी स्यादित्याह–यद्गौणत्वेने- 25 ति–अधिमगधेष्वित्यादिषु "[8]विभक्तिसमीप०" इति नाऽव्ययीभावो विभक्त्यर्थत्वाभावात्। यतो विभक्त्यर्थः कारकम्। अत्र च षष्ठ्यपवादः सप्तमीति न विभक्त्यर्थत्वम्। यदि च समासः स्यात्तदा वाक्यं निवर्त्तते नित्यसमासत्वात्, अधिस्त्रि

१ ७–३–७६। २ ३–२–१०९। ३ उणा० २८४। ४ ७–२–२६। ५ २–२–३६। ६ २–२–३७। ७ ५–३–१०९। ८ ३–१–३९।

इत्यादिवत् । यदा तु सप्तम्यर्थ एवाऽधिशब्दस्तदाऽत्राऽप्यव्ययीभाव एवाऽव्ययत्वमिति प्रद्योत इति । नन्वत्र क्रमेण परस्परमाधाराधेयभावविवक्षायां पर्यायेण सप्तम्यधिकरण एव सप्तमी भविष्यतीति किमनेनेति ? सत्यम् । सम्बन्धविवक्षया षष्ठ्यपि स्यादित्याह—षष्ठ्यपवादो योग इति ।

5 ‘ उपेनाधिकिनि ’ । २ । २ । १०५ ॥ अत्र यदधिकं तदधिकिन्यारूढमित्याधारविवक्षायां सप्तमी सिद्धैव परं पूर्ववद्विभक्त्यन्तरबाधनार्थम् । अधिको निष्कस्येति—साधुर्भृत्यो राज्ञ इतिवन्निष्कशब्दस्याऽधिकशब्देन सह सम्बन्धाभावाद् “ अधिकेन भूयसस्ते ” इत्यनेन निष्कशब्दान्न पञ्चमी ।

‘ यद्भावो भावलक्षणम् ’ । २ । २ । १०६ ॥ कलायो मात्रेष्विति—कलायो मालवकप्रसिद्धोऽधमधान्यविशेषो मानमेषां स्यात्, “मात्रट्” इत्यनेन मात्रट् । यत्रेति—

10 अयमर्थो यत्र ऋद्धानां दरिद्राणां च भुजिक्रियामासनक्रियां च प्रति यथासंख्यं कारकत्वं कोऽर्थस्तां प्रति कर्तृत्वं, तद्विपर्ययोऽकारकत्वं च तत्राऽपि भावो भावस्य लक्षणमित्यनेनैव सप्तमी सिद्धेति यदन्यैः क्रियार्हाणां कारकत्वं तद्विपर्ययो वा यत्र क्रियानर्हाणामकारकत्वं, कारकत्वं वेति सप्तमीविधायकं सूत्रद्वयं कृतं तन्नाऽऽरम्भणीयम् ।

15 यस्य भावो भावस्य लक्षणं ततो भाववतः सप्तमीष्यते यद्ग्रहणमन्तरेण चैतन्न लभ्यते इत्याह—यद्ग्रहणं प्रकृत्यर्थमिति—यो जटाभिरुपलक्षितस्तस्य भोजनमित्यत्र न भावो भावस्य लक्षणमिति तु द्रव्यम् । तृतीयापवाद इति—इत्थम्भूतलक्षणेऽर्थे ।

‘ गते गम्येऽध्वनोऽन्तेनैकार्थ्यं वा ’ । २ । २ । १०७ ॥ कुताश्चिदवधेर्गवीधुमत इत्यादिलक्षणाद्विवक्षितस्येयत्तापरिच्छेदस्य योऽध्वनोऽवसानं साङ्काश्याद्यन्तः । यद्भाव इति यस्याऽध्वनश्चतुर्योजनरूपस्य भावेन गमनरूपेणाऽपरो भावः साङ्काश्य-

20 भवनरूपो लक्ष्यते तस्येत्यर्थः । एकोऽर्थो द्रव्यमनेकभेदोऽधिष्ठानं यस्य स एकार्थस्तस्य भाव ऐकार्थ्यम् । तद्विभक्तिरिति—अन्यथैकविभक्तिमन्तरेण सामानाधिकरण्यं न घटेत । गवामीः श्रीस्तां दधाति “ पृकाह्वपि० ” इति किदुः । सोऽत्राऽस्ति मतुः । अव्युत्पन्नो वा गवीधुमच्छब्दः । गव्यूतिरत्राऽस्ति विषयतयाऽवयवितया वा, “ अभ्रादिभ्यः ” अः, गव्यूतं क्रोशमेकम् । नन्वन्तेनेति—चतुर्षु योजनेषु यत्साङ्काश्यं

25 तच्चत्वारि योजनानि ।

‘ षष्ठी वाऽनादरे ’ । २ । २ । १०८ ॥ सप्तम्यामनादरप्रतीतिरर्थप्रकरणादेरित्यर्थभेदान्न बाध्यबाधकभावोऽस्तीति किं ? पक्षे सप्तम्यर्थेन न वा शब्देनेति ? उच्यते—यथाऽनादरादन्यत्र साम्यतः सप्तम्यस्ति । एवं “ शेषे ” इत्यनेन षष्ठ्यपि,

१ २-२-१११ । २ ७-१-१४५ । ३ उणा० ७२९ । ४ ७-२-४६ । ५ २-२-८१ ।

तत्रोभयत्राऽपि प्रव्रजन् रुदताऽपि लोकेन निवर्त्यमानस्तद्रोदनमनादृत्य प्राव्राजीदित्यनादरः प्रकरणादेः प्रतीयत इति समानेऽर्थे षष्ठी सप्तमी बाधितेति पक्षे तदर्थं वा वचनम्।

'सप्तमी चाविभागे निधारणे'। २। २। १०९॥ क्षतात्त्रायते "स्थापा०"[1] इति कः पृषोदरादित्वादलोपे क्षत्रं तस्याऽपत्यं "क्षत्रादियः"[2] क्षत्रियः पुरुषाणामित्यादिषु क्षत्रियत्वशालित्वं जात्या कृष्णत्वगुणेन, धावनक्रिययाऽऽदिशब्दाद् युधिष्ठिरः प्रभृतिसंज्ञया च निधारणम्। ननु निर्धार्यमाणस्याऽवयवस्य समुदायाभ्यन्तरत्वात्ततश्च समुदायस्याऽधिकरणविवक्षायां वृक्षे शाखेतिवत्सप्तम्याः सिद्धत्वात्, सम्बन्धविवक्षायां त्ववयवस्य वृक्षस्य शाखेतिवत् षष्ठ्या अपि सिद्धत्वात्किमनेनेति? नैवम् विभागे प्रतिषेधार्थत्वादस्य, ननु सर्वत्रैव निर्धारणस्य विभागरूपत्वेनाऽविभागपूर्वकत्वादविभागग्रहणस्य निरर्थकत्वादविभागग्रहणसामर्थ्यादवधारणमाश्रीयते। अविभागो यत्र शब्दत एव प्रतीयते तत्र निर्धारणे सप्तमीषष्ठ्याविति। यथा क्षत्रियः पुरुषाणां पुरुषेष्वित्यत्र निर्धार्यमाणस्य क्षत्रियस्य पुरुषशब्दात्पुरुषत्वेनाऽविभागप्रतीतिः। तेन माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यत्र न भवति। न ह्यत्र केनचित्प्रकारेण माथुराणां पाटलिपुत्रकेष्वविभागः शब्दतः प्रतीयते। नहि पाटलिपुत्रका माथुरा नाऽप्याढ्यतरा इति वाक्याद्भेद एव प्रतीयत इत्याह–शब्दाद्गम्यमान इति–गवां कृष्णेत्यादौ विभज्यमाना गौर्गोत्वेन समुदायादविभक्ता कार्ष्ण्येन तु विभक्ता तस्माद्विभज्यमानस्यैकदेशस्य विभागाश्रयस्य च समुदायस्य यत्र विभागाविभागौ स एवाऽनयोर्विषयः। यत्र तु तयोर्विभाग एव न कथञ्चिदैक्यं तत्र पञ्चम्येव भवति अत एवाऽऽह–पञ्चमीबाधनार्थमिति। अयमर्थनिर्धारणस्य विभागरूपत्वाद्यस्य हि यतो विभागस्तस्य तदपेक्षयाऽवधिरूपत्वादपादानत्वात् "पञ्चम्यपादाने"[3] इति पञ्चम्यां प्राप्तायां यत्राऽविभागोऽपि तत्र तदपवादो योग इत्यर्थः।

'क्रियामध्येऽध्वकाले पञ्चमी च'। २। २। ११०॥ इहस्थोऽयमिति–नन्विष्वास इति धनुरुच्यते। यथाऽङ्गराजो महेष्वास इति। महानिष्वासो यस्येति व्युत्पत्तेः। धनुश्च व्यधने करणं कर्ता तु मैत्रादिस्तत्कथमुक्तमिष्वासो विध्यतीति? उच्यते–इष्वास इति क्रियाशब्दोऽयमिति। यः कश्चिदिषूनस्यति क्षिपति स मैत्रादिरप्युच्यते, यद्वा रूढिशब्दत्वेऽपि करणस्य स्वातन्त्र्यविवक्षायामिष्वासो विध्यतीत्युपपद्यत एव। यथा स्थाली करणस्य कर्तृत्वविवक्षायां स्थाली पचतीत्युच्यते। अद्य भुक्त्वेति–नन्विहस्थोऽयमिष्वास इत्यादि क्रियाभेदात् युक्तमिदमुदाहरणम्। इदं त्वयुक्तमिदमुदाहरणम्। इदं त्वयुक्तमऽद्यभुक्त्वा मुनिर्द्व्यहाद्भोक्तेति भुजिक्रियाया एकत्वात्?

---

१ ५-१-१४२। २ ६-१-९३। ३ २-२-६९।

सत्यम् । भुजिक्रियाया एकस्या अपि कालभेदाद्भेदस्य सिद्धत्वादाधारो हि तस्या भिद्यते । अधिकरण एव सप्तमीति–क्रियामध्यव्यवस्थितस्याऽध्वनोऽधिकरणत्वात् सप्तमी सिद्धा क्रोशैकदेशस्याऽधिकरणत्वात् क्रोशेऽप्यधिकरणत्वस्य वक्तुं शक्यत्वात्, द्व्यहे पूर्ण इत्यत्र तु पूर्णद्व्यहस्य यदुपश्लिष्टमहस्तत्र भोक्तेत्यर्थावसायादौपश्लेषिका सप्तमी सिद्धा । पञ्चमी त्वध्वनोऽपादानत्वात्, क्रोशान्निर्गच्छद्भिः शरैर्लक्ष्यं विध्यतीत्यर्थावगमात् । कालात्तु "गम्ययपः०" इति द्व्यहमतिक्रम्य भोक्तेत्यर्थप्रतीतेः किमर्थोऽयं योग इत्याक्षेपार्थः । यथा च शरनिर्गमनस्य धनुरपादानं तथा क्रोशोऽपि तस्मादपि हि ते निर्गच्छन्ति । यद्वा क्रोशस्थं धनुरपि क्रोशेनाऽभिधीयते उपचारात् मञ्चाः क्रोशन्तीतिवत् ।

अस्यैवेति–अपादानस्याऽऽधारस्य वेत्यर्थः । फलभूतेतिक्रियाकारकसम्बन्धो हि कटं करोतीत्यादावप्यस्ति, तद्व्यवच्छित्त्यै शेषसम्बन्धलक्षणा फलभूता कार्यभूतोत्तराऽवस्था इत्युक्तम् । षष्ठी मा भूदिति वचनमिति–अयमर्थो यदा भोजनश्रवणादौ कालाध्वनोः क्रियाकारकजन्यं शेषसम्बन्धित्वमेव केवलं विवक्ष्यते न त्वपादानाधिकरणत्वे तदा ताभ्यां षष्ठ्येव स्यादिति सूत्रारम्भः । किञ्च यदा द्व्यहक्रोशशब्दौ द्व्यहक्रोशावेव न तदेकदेशविषयौ तदा नाऽपायो नाऽप्याधारतेति षष्ठी प्राप्नोति, किञ्च क्रोशं वाहयित्वा विध्यति, द्व्यहं वाहयित्वा भोक्तेति वा प्रतीतेर्द्वितीया प्राप्नोति तद्बाधनार्थोऽयं योग आरभ्यते । वृत्तौ तु षष्ठी मा भूदिति षष्ठीग्रहणमुपलक्षणार्थम्, तेन द्वितीयाऽपि मा भूदित्यर्थः सिद्धो भवति ।

'अधिकेन भूयसस्ते' । २ । २ । १११ ॥ भूयसित्युपादानादधिकशब्देनाऽल्पीयानेवोच्यत इत्याह–सामर्थ्यादिति–अत्राऽधिकाधिकिसम्बन्धस्य विद्यमानत्वात्खारीशब्दात् "[2]शेषे" इत्यनेन षष्ठी प्राप्नोति तथाऽधिकशब्दस्य कर्तृसाधनाध्यारूढार्थत्वात् कर्मणीति द्वितीया च । अतस्तयोर्बाधिके सप्तमीपञ्चम्यावनेन विधीयेते ।

'तृतीयाल्पीयसः' । २ । २ । ११२ ॥ सामर्थ्यादिति अल्पीयस इत्युपादानात्कर्मसाधनो भूयोऽर्थोऽधिकशब्दः प्रतिपत्तव्य इति । कर्तरि तृतीया सिद्धैव षष्ठीबाधनार्थं तु वचनम् ।

'ऋते द्वितीया च' । २ । २ । ११४ ॥ न ह्यङ्गं विक्रियत इति–विषयादिभिः कर्तृभिरित्यर्थः । विक्रियत इति कर्मण्ययं प्रयोगः । कर्मकर्तरि तु "[3]भूषार्थ०" इति किरादित्वात् क्यप्रतिषेधः स्यात् ।

---

१ २–२–७४ । २ २–२–८१ । ३ ३–४–९३ ।

'**विना ते तृतीया च**'। २। २। ११५॥ विनेति तृतीयान्तमव्ययम्। आद्यः करणविन्यासः प्राणस्योर्द्ध्वं समीरणम्।

स्थानानामभिघातश्च, न विना शब्दभावनाम्"॥ १॥

'**तुल्यार्थैस्तृतीयाषष्ठ्यौ**'। २। २। ११६॥ न तुल्यार्था इति–तुल्यादयो हि धर्मिवाचकाः, तुला उपमादयस्तु तुल्यत्वादिधर्मवचना इति न तुल्यार्थाः। गौणाधिकाराच्चेति–प्रधानाद्गोशब्दान्न भवतीत्यर्थः। तुल्यार्थताऽपि नाऽस्तीति चकारेण परिहारान्तरं समुच्चीयत इति शेषः। नन्वनन्तरात्पूर्वसूत्रात्तृतीयाऽनुवर्तते ततस्तुल्यार्थैर्वेति तद्विकल्पे कृते "[1]शेषे" इत्यनेन शेषलक्षणा षष्ठी सिद्धैव किमर्थं तद्विधानमित्याह–तृतीयेत्यादि। गवां तुल्यः स्वामीति–गवां स्वामी गवां तुल्य इत्यर्थः। यद्यस्मत्स्वामी गवां तुल्य इत्यर्थो विवक्ष्यते तदा गोशब्दस्य स्वामिशब्देनाऽयोगात्सप्तमीप्राप्तिरेव नाऽस्ति।

'**द्वितीया षष्ठ्यावेनेनानञ्चेः**'। २। २। ११७॥ पूर्वेणेति–पूर्वस्यामदूरवर्तिन्यां दिशि "[2]एनः"।

'**हेत्वर्थैस्तृतीयाद्याः**'। २। २। ११८॥ प्रत्यासत्तेरिति–हेत्वर्थैस्तु व्यधिकरणाद्धेतुसम्बन्धे षष्ठ्येवाऽस्ति। न तत्र तृतीयाद्या इति सामर्थ्याद्धेत्वर्थैः समानाधिकरणाद्धेतोरपि तृतीयाद्या भवन्तीति। न तूत्तरसूत्रेण सर्वा विभक्तय इति सर्वविभक्त्यन्तर्गतत्वात्तृतीयाद्या अपि सिद्धाः किमर्थमिदमित्याह? असर्वाद्यर्थमिति–हेतोस्तृतीयायां, "[3]ऋणाद्धेतोः" "[4]गुणादस्त्रियां०" च पञ्चम्यां प्राप्तायामयं विधिरारभ्यत इति।

'**सर्वादेः सर्वाः**'। २। २। ११९॥ प्रियाः सर्वे यस्येति बहुव्रीहौ हेत्वर्थयोगेऽपि न सर्वा विभक्तयः,अन्यपदार्थप्रधानत्वेन सर्वादेर्गौणत्वात्। गौणे मुख्ये च मुख्ये कार्यसंप्रत्ययः। कर्मधारये परमसर्वं हेतुं वसतीत्यादि तु भवति। '<u>ग्रहणवता नाम्ने</u>'ति नोपतिष्ठतेऽत्र।

'**असत्वारादर्थाट्टाङसिङ्यम्**'। २। २। १२०॥ असत्त्व आरादर्थः, न विद्यते सत्त्वं यस्य स चाऽसौ आरादर्थश्च वा। गौणादिति निवृत्तम्–विभक्तिसम्बन्धत्वात्तन्निवृत्तावित्यर्थः। अत्र हि यदीनि वचनान्युपात्तानि, न तृतीयाद्या विभक्तयः। दूरेण ग्रामस्य ग्रामाद्वा–इदं तदिति सर्वनामप्रत्यवमर्शयोग्यार्थाभिधायकत्वेऽप्येतेषां धर्ममात्रेण प्रयोगादसत्त्वरूपार्थाभिधायकत्वं न विरुध्यते। तथाऽत्र ग्रामशब्दाद् "[5]आरादर्थैः" इति वा पञ्चम्यां पक्षे "शेषे" इति षष्ठी। अन्तिकाय पथे

---

१ २–२–८१। २ ७–२–१२२। ३ २–२–७६। ४ २–२–७७। ५ २–२–७८।

इति–अत्रोपपदविभक्तेः कारकविभक्तिरिति पञ्चमीं बाधित्वा चतुर्थी। कथमिति–आरादर्थत्वाभावात्कथमेभ्यो द्वितीयाद्या इत्याशङ्कार्थः।

'जात्याख्यायां नवैकोऽसङ्ख्यो बहुवत्'। २। २। १२१॥ वैषयिकेऽधिकरणे सप्तमी, जात्यर्थस्येति–न जातिशब्दस्य तथा सति सम्पन्ना यवा इति यव-
5 शब्दादेव जातिशब्दाद्बहुवचनं स्यान्न सम्पन्नशब्दात्तद्विशेषणभूतादिति। जात्यर्थस्य तु बहुवद्भावे सम्पन्नादिविशेषणान्यपि सामानाधिकरण्याद्यवादिशब्दोपात्ते जात्यर्थे वर्तन्त इति तेभ्योऽपि बहुत्वाश्रयं बहुवचनमुपपन्नमिति। चैत्रो मैत्र इति–नेह जातिरभिधेया यदृच्छाशब्दत्वादनयोः जातिर्हि सामान्यमुच्यते। यच्छबलशाबलेयधवलधावलेयाद्यनेकव्यक्तिभेदेषु गौर्गौरित्याद्यनुवृत्तप्रत्ययकारणमिति। यदि च बालकु-
10 माराद्भेदेऽनुवर्तमानमभिन्नं रूपं जातिरुच्यते तथा सति नाऽजातिः। कश्चिच्छब्दार्थोऽस्तीति जातिग्रहणमनर्थकं स्यात्तस्मात् सादृश्यसामान्यमिह जातिर्न स्वरूपसामान्यमिति। भवत्ययं जातिशब्द इति–गोत्रं च चरणैः सहेति लक्षणेन परमाख्याग्रहणात्प्राधान्येन जातावभिधेयायां भवति। इह तु तद्विशिष्टा प्रतिकृतिराख्यायत इति।

'अविशेषणे द्वौ चास्मदः'। २। २। १२२॥ अनुकरणत्वादस्मच्छब्द
15 कार्या प्रवृत्तिः। अविशेषण इति–अत्र प्रतिषेधप्रधानः प्रसज्यो नञ्। यद्यत्र पर्युदासः स्याद्विशेषणादन्यस्मिन्निति तदा विशेषणेन विधेनाऽपि प्रतिषेधो विशेषणादन्यस्मिंस्तु प्रयुज्यमाने विधिः। कोऽर्थः सत्यप्यस्मदर्थस्य विशेषणे ततोऽन्यस्मिन् प्रयुज्यमाने स्यादित्यर्थः। ततश्चाऽहं मैत्रो ब्रवीमीत्यत्राऽपि मिवन्तस्य विशेष्यस्य भावान्मैत्र इति विशेषणे सत्यपि स्यादित्याह–न चैत्रस्येति। विधेयत्वेनेति–अज्ञातज्ञाप-
20 नीयत्वेनेत्यर्थः। एकानेकस्वभावस्येति–अयमर्थ एकोऽप्यात्मा यथैकत्वेनाऽनुभूयते तथा द्रष्टाश्रोतामन्तेत्यादिनाऽनेकत्वेनाऽपि। न ह्येकान्तेनैकत्वेनाऽनेकत्वेन वेतरविनिर्मुक्तेन प्रतिपत्तिरस्ति। तत्र यथैकत्वेन द्वित्वेन च तस्मिन् विवक्षिते एकवचनं द्विवचनं च तथा बहुत्वविवक्षायां बहुवचनं सिद्धम्।

'फल्गुनीप्रोष्ठपदफल्गुनीप्रोष्ठपदस्य भे'। २। २। १२३॥ फल्गुनीप्रोष्ठपदे
25 इति–प्रवृद्ध ओष्ठो यस्य प्रोष्ठो गौस्तस्येव पादौ यस्या ययोर्वा "सुप्रात०" इति निपात्यते।

'गुरावेकश्च'। २। २। १२४॥ कारुणिक इति–करुणा प्रयोजनमस्य करुणया वा चरति। अयं भवान् इह भवान् "भवत्वायुष्मद्दीर्घायुः०" इमे भवन्त इह भवन्तः। पञ्चालानां देशोऽप्युपचारात्पञ्चालाः। गोदौ ह्रदौ तत्समीपग्रामोऽपि

१ ७-३-१२९। २ ७-२-९१।

गोदौ खलतिकं वनानीति–खलतीति " कुंशिक० " इत्यादिना निपात्यत इत्याम्नायः। खलतिकाख्यपर्वतसमीपवर्तिवनानामपि खलतिक इत्याख्या। हरति रोगानिति " हृरुहि० " इति के हरीतकी। पञ्चालाश्च मथुरा च पञ्चालमथुरे। चीयत उपचीयते तृणैरिति चञ्चा। " चिमेर्डोचङ्श्चौ० " अभिमतं रूपं यस्याऽभिमतं रूप्यते वा अभिरूप्यो मनुष्यश्चञ्चेव अकिञ्चित्करत्वात्। अनुपततीति–अनुयात्यनुव्रजतीत्यर्थः। 5 अनुसर्त्तव्येति–लिङ्गानि च संख्याश्च तास्ताश्च लिङ्गसंख्याश्च तासामुपादानं तस्य व्यवस्था साऽनुसर्तव्या। नन्वाप इत्येकस्यामपि जलकणिकायां बहुवचनान्तोऽपशब्दः प्रयुज्यते, दारशब्दश्चैकस्यामपि योषिति पुंलिङ्गो बहुवचनान्तः। एवं गृहशब्दोऽप्येकस्मिन्नपि गृहे। एवं वर्षा इत्येकस्मिन्नपि ऋतौ। एवं पञ्चाला इति बहुवचनान्तेनैकोऽर्थ उच्यते जनपदस्तत्र बहुत्वाभावाद्बहुवचनायोगः यद्यसौ बहुत्वसंख्यायोगी 10 स्यात् तदैकवचनानुपपत्तिर्जनपद इत्येकत्वाभावात्। न ह्येकोऽर्थ एको भवति अनेकश्च विरोधात्। कथञ्चित्तथाऽभावे तूभयमप्युभयसंख्यायोगि स्यान्न चैतदिष्यत इति।

एवं गोदौ ग्राम इति द्वित्वैकत्वनियमायोगः। खलतिकं वनानीत्येकवचनान्तेन बह्वभिधानमनुपपन्नम्। तथा हरीतक्यः फलानीति स्त्रीनपुंसकयोर्लिङ्गयोरयोगः। तथा पञ्चालमथुरे इत्यनुत्तरपदस्य देशवृत्तेर्बहुविषयस्य बहुवद्भावप्रतिषेधानुपपत्तिः। 15 एवं चञ्चाभिरूप इत्यादावपि चञ्चादिलिङ्गता स्यादित्यत्र यत्नः कर्तव्यः। येन सर्वं समञ्जसं स्यादित्याशङ्कायामाह–सर्वलिङ्गसंख्ये वस्तुनीत्यादि–सर्वाणि त्रीण्यपि लिङ्गानि सर्वाश्च एकत्वद्वित्वबहुत्वलक्षणाः संख्या एकस्मिन्नेव वस्तुनि सन्ति। तथा हि वस्त्वर्थो मात्रेति शब्दाः सर्वत्र वस्तुतत्त्वे घटवस्तु घटार्थो घटमात्रेति प्रवर्तन्त इति लिङ्गानि दृश्यन्ते। गुणगुणिद्रव्यपर्यायावयवावयविरूपे वस्तुनि घट इत्यभेदविवक्षा- 20 यामेकत्वसङ्ख्या। गुणगुणिनौ द्रव्यपर्यायौ अवयवावयविनौ घटौ नैकैकमात्र इति द्वित्वसंख्या। गुणपर्यायावयवानां बहुत्वात्तद्भेदविवक्षायां गुणाश्च गुणी च गुणगुणिनो घट इति बहुत्वसङ्ख्या। न चैतदेकस्मिन् वस्तुनि स्याद्वादानुपातिनि विरुद्धं स्यात्। यतः कथञ्चिदिति वादः स्याद्वादस्तथाहि–स एवाऽयं मैत्र इत्याजन्ममरणमविच्छेदः प्रतीयते तन्न भेदमात्रं वस्तु। बालोऽयं न युवा युवाऽयं न बालः सुप्तोऽयं नोत्थित 25 उत्थितोऽयं न सुप्त इति विच्छेदश्च प्रतीयते, तन्नाऽभेदमात्रं, न च तयोर्भेद एव। मैत्रो बालो मैत्रो युवेत्येकत्वेन प्रतिभासनात्। गौरश्च इतिवद्भेदप्रतिभासाभावादेकान्तेन चाऽभेदेऽन्यतरविलोपः। तथा च भेदाभेदप्रतिभासायोगः। न चाऽन्यतरस्य मिथ्यात्वमितराविशेषात् तस्मादन्तरालावस्थं वस्तु तदेतत्स्याद्वादानुपातीति नाऽत्राऽनेकरूपता

१ उणा० ५०३। २ उणा० ७९। ३ उणा० १२२।

विरुध्यते तदेवं क्रमाक्रमभाव्यनेकभेदात्मके वस्तुनि सर्वमुपपद्यते। तत्राऽप इति नैकस्यां व्यक्तौ प्रवर्ततेऽपि तु बहुव्यक्तिविषय एव। एवं दारादयोऽपि पुंलिङ्गाः। यथा द्वौ त्रय इति भेदविषया एव। नैकैकविषया, एकविषयत्वेऽपि गुणपर्यायावयवभेदोपादानाद्वस्तुसामर्थ्याद् बहुत्वोपपत्तिः। एवं पञ्चाला इति वस्तुशक्तिस्वाभाव्यादवयवद्वारेण प्रवर्तते। जनपद इति समुदायद्वारेण। एवं गोदौ ग्राम इत्यादावप्येकानेकसंख्योपपत्तिः। हरीतक्यः फलानीति लिङ्गभेदश्च सर्वलिङ्गत्वाद्वस्तुनः। पञ्चालमथुरे इति पञ्चालादीनां बहुत्वविषयाणां समासे उत्तरपदादन्यत्र समुदायाभिधानं न त्ववयवाभिधानमिति बहुत्वाभावः। नियतविषयाश्च शब्दशक्तयो भवन्ति। यथा राज्ञः पुरुष इति वाक्ये राजशब्दो विशेषणादियोगिनमर्थमाचष्टे वृत्तौ तु तद्विलक्षणं राजपुरुष इति। चञ्चाभिरूपो मनुष्य इति–सादृश्यान्मनुष्यवृत्तेश्च तद्रूपं यन्न विशेषणयोगि। पञ्चालादिशब्दानां च क्षत्रियाद्यर्थवृत्तीनामपि सोऽयमित्यभिसम्बन्धादुपचाराज्जनपदाद्यर्थेऽपि वृत्तिरित्युक्तं, मुख्योपचरितार्थानुपातिनीत्यादि–अत्र च रूढिः प्रमाणम्। यतो वृद्धव्यवहाराच्छब्दार्थव्युत्पत्तिरिति उच्यते–रूढित इति रूढिः शिष्टव्यवहारे प्रसिद्धिः, तत्तल्लिङ्गसंख्योपादानव्यवस्थेति। सा सा येदानीं प्रदर्शितेति।

॥ इति अवचूर्णिकायां द्वितीयस्याऽध्यायस्य द्वितीय पादः समाप्तः॥

'**नमस्पुरसोगतेः कखपफि रः सः**'। २। ३। १॥ नमस्कृत्येति–अनमो नमःकरणं पूर्वं "साक्षादादिः०"[1] इति गतिसंज्ञायां "गतिकन्य०"[2] इति सः। नमः कृत्वेति अत्र नमः शब्दान्तरं न त्वव्ययमिति अमः। "अनतो लुप्"[3] पुर इति–पृंक्च पिपर्तीति भ्राजादिनिपातनात् क्विपि दीर्घत्वे च "ओष्ठ्यादुर्"[4] इत्युरि पूः ततः शस्।

'**पुंसः**'। २। ३। ३॥ ननु "पुंसोऽशिट्यघोषे०"[5] इत्यत्र रमपहाय सत्वमेव विधीयतां किमनेनेति? सत्यम्, एतद्विना पुंश्चरः पुंष्टिट्टिभ इत्यादयो न सिध्यन्तीति आरभ्यते। न च वाच्यं "सोरुः"[6] इति रुत्वे तस्य शत्वषत्वादौ च कृते सर्वाणि सेत्स्यन्तीति, विधानसामर्थ्यात्। पुंस्काम्यति–अत्र "रोः काम्ये"[7] इति नियमात् "नामिनस्तयोः षः"[8] इति षत्वं न। पुंस्कः पुंस्पाश इत्यत्र तु कृतमपि षत्वं परस्मिन् "पुंस" इति सत्वे कर्तव्ये "णषमसद्०"[9] इत्यनेनाऽसिद्धं, यतः सप्तमपादे सत्वापेक्षया परमपि षत्वं णषमित्यत्र ज्ञातव्यमंतः षत्वमर्वाचीनं सत्वं तु परविधिरिति।

'**शिरोऽधसः पदे समासैक्ये**'। २। ३। ४॥ पदशब्दे पर इति–न च

---

१ ३-१-१४। २ ३-१-४२। ३ ३-२-६। ४ ४-४-११७। ५ १-३-९। ६ २-१-७२। ७ २-३-७। ८ २-३-८। ९ २-१-६०।

वाच्यं 'स्वरूपं शब्दस्ये'ति कृत्रिमाकृत्रिमयोरित्यनेन वा। "[1]तदन्तं पदम्" इत्यादिसूत्रैः परिभाषितस्य ग्रहणं प्राप्नोतीति। समास इति वचनादुत्तरपदमन्तरेण च समासस्याऽसम्भवात्तस्य सामर्थ्यं लब्धत्वात् पदग्रहणानर्थक्यप्रसङ्गादिति शिरस्पदम् स्थानं, अत्र "[2]सप्तमी शौण्डाद्यैः" इति सः, षष्ठीतत्पुरुषो वा। अधः पदमधस्तनं पदमित्यत्र। "[3]अव्ययं प्रवृद्धादिभिः" इति नित्यं से प्राप्ते बाहुलकाद्वाक्यमपि। "[4]ऋते 5
तृतीयासमासे" इतिवत्समास इत्युक्तेऽपि तौ चेन्निमित्तनिमित्तिनावेकत्र समासे स्त इति लभ्यते, ऐक्यग्रहणं तु 'विचित्रा सूत्राणां कृति'रिति न्यायदर्शनार्थम्। यतः क्वाऽप्यार्थ्या वृत्त्या क्वापि शाब्द्या वृत्त्या निर्दिश्यत इति न कोऽपि दोषः।

'अतः कृकमिकंसकुम्भकुशाकर्णीपात्रेऽनव्ययस्य'। २। ३। ५॥
अयस्कार इत्यत्राऽयः करोतीत्यर्थकथनमिदं यतोऽयस् अम् कृ अण् इति समासः। 10
ततोऽण्योगे कर्मनिमित्ता षष्ठी न भवति। "[5]नाम्येकस्वरात्०" इत्यत्र सूत्रेऽमोऽलुप्समासविधानात्। यशस्काम इति-णिङो विकल्पेन विधानात्कमिर्भवति। वाक्यं तु णिङन्तस्यैव कार्यं यतोऽशविषये स विकल्पः। शविषये तु नित्यमेव। अयस्कुशेति-अयोविकारस्याऽविवक्षितत्वात् "[6]भाजगोण०" इति ङीर्न। अयः प्रधानं यस्याः सा अयः-प्रधाना सा चाऽसौ कुशा चेति कर्मधारयः। अयस्कर्णीति-अय इव कर्णौ 15
यस्या इति बहुव्रीहौ "[7]नासिकोदर०" इति वैकल्पिको ङीः। समुदायस्य तु जातिवाचित्वे प्रतिपाद्ये "[8]पाककर्ण०" इति नित्यः। अय इव कर्णोऽस्या इत्यपि कृते गौरादित्वाद् ङीः। न त्वयस्कृतमित्यादौ कृग्धातुरुत्तरपदं नाऽस्ति तत्कथं सकार इत्याह इह कृकम्योरिति। कथं पयस्कामेति कमेर्णिङि "[9]शीलिकामि०" इति णे पयस्कामा णिजभावे तु कर्मणोऽणि पयस्कामीति प्राप्नोति। तत्कथं पयस्कामे- 20
त्याह-कमनमित्यादि, अयस्कुम्भीति गौरादित्वाद् ङीः। शुनस्कर्ण इति शुनः कर्णाविव कर्णावस्य।

'प्रत्यये'। २। ३। ६॥ अत इतीह नाऽऽश्रीयते तेन वा स्कल्पेत्यादि सिद्धम्। इह प्रत्ययेन समासासम्भवात् समास इति तत्सम्बद्धमैक्य इति च नाऽनुवर्तते। प्रत्यय इति किमिति-अत्र प्रत्ययग्रहणाभावे "रोः काम्ये" चेति कार्यं तस्य 25
चाऽयमर्थः। रोः स्थाने काम्ये चकारात् कखि पफि च सो भवति। तर्हि नियमः कथमिति? उच्यते-कखपफमध्यपतितत्वात् काम्यग्रहणे लब्धे यत्काम्यग्रहणं करोति तज्ज्ञापयति रोरेव काम्ये।

---

१ १-१-२०। २ ३-१-८८। ३ ३-१-४८। ४ १-२-८। ५ ३-२-९। ६ २-४-३०। ७ २-४-३९। ८ २-४-५५। ९ ५-१-७३।

'रोः काम्ये'। २ । ३ । ७ ॥ नियमार्थमिति–विपरीतनियमस्तु वर्चस्केति- निर्देशात् प्रत्यये रोः काम्ये चेत्येकयोगाभावाद्वा न ।

'नामिनस्तयोः षः'। २ । ३ । ८ ॥ अत्राऽनव्ययस्येति वर्तते यतः पूर्व- सूत्राभ्यां सकारे प्राप्तेऽयं ष इति । सार्पिष्क इति–"[1]प्रत्यये" इति सूत्रे पाशकल्पका इत्युपलक्षणत्वादिकणोऽपि ग्रहणम् यद्वा इकारे लुप्तेऽयमपि क इत्यनेनाऽत्राऽपि षत्वं सर्पिषा संस्कृतः "[2]संस्कृते" इतीकण् । सप्तमी वाक्ये तु "संस्कृते भक्ष्ये" इत्यने- नाऽण् स्यात् । धानुष्क इति धनुः प्रहरणमस्येति "[3]प्रहरणम्" इकण् ।

'निर्दुर्बहिराविष्पादुश्चतुराम्'। २ । ३ । ९ ॥ चतुष्कण्टकमिति–अत्र बहु- व्रीहिः समाहारो वा । समाहारे तु पात्रादित्वात् स्त्रीत्वप्रतिषेधाद् ङीर्न भवति । कथ- मिति ?–अयमाशयः निर्दुरोः षत्वमुच्यमानमन्यत्वात् कथमत्र, तथा ह्यत्र परत्वात् षकारात् पूर्वं "[4]दूराद्दामन्त्र्यस्य०" इति प्लुतः ध्याणि वृद्धिश्चेति ।

'सुचो वा'। २ । ३ । १० ॥ सुच इति रेफस्य विशेषणं तेन चतुष्पचती- त्यत्राऽपि विकल्पः । न ह्यत्र सुचः स्थाने रेफः । "[5]रात्सः" इति सुचो लोपादतः सुजिति प्रकृतिविशेषणं, तत्र च तदन्तविज्ञानमित्याह–सुजन्तानामिति एवं । हि विज्ञाय- माने सुचो लोपेऽपि स्थानिवद्भावेन सुजन्त एवाऽयं चतुःशब्द इति । न चैवं त्रिष्क- रोतीति त्रिशब्दरेफस्याऽपि सुजन्तसम्बन्धित्वात् कस्मान्न भवतीति वाच्यमनन्तरे कृतार्थत्वादिति ।

'वेसुसोऽपेक्षायाम्'। २ । ३ । ११ ॥ प्रत्यययोर्ग्रहणादिति–इह प्रत्यया- प्रत्यययोः लक्षणप्रतिपदोक्तयोः अर्थवद्ग्रहणेनाऽनर्थकस्येत्यनेन च इसुसोः प्रत्यययो- रेव ग्रहणादिह न भवतीत्यर्थः । फेनायत इति–फेनमुद्वमति फनोष्मेति क्यङ् ।

'समासेऽसमस्तस्य'। २ । ३ । १२ ॥ इदमेवेति–ननु परमसर्पिष्करोति परम- धनुष्करोतीति परमसर्पिःपरमधनुःशब्दयोरिसुसन्तत्वाभावान्मा भूत्षकारः उत्तरपदा- र्थप्रधानत्वात्समासस्य, सर्पिर्धनुःशब्दयोरिसुसन्तत्वात्तदाश्रयः षो भविष्यति किं तद- र्थेन ज्ञापकेन ? न चैवं सति परमसर्पिःकुण्डमित्यत्राऽपि प्राप्नोति । सर्पिःशब्दस्य कुण्डेनाऽसमासात् किन्तु परमसर्पिःशब्दस्य ? उच्यते, यद्यपि परमं सर्पिः परमसर्पिः- करोतीत्युत्तरपदार्थप्रधाने समासे प्रधानस्यापेक्षाया योगात् षत्वं सिध्यति । तथापि परमं सर्पिर्यस्य सर्पिषः समीपं सर्पिषो निष्क्रान्तमिति परमसर्पिष्करोति उपसर्पि

१ २-३-६ । २ ६-४-३ । ३ ६-२-१४० । ४ ६-४-६२ । ५ ७-४-९९ । ६ २-१-९०।

ष्करोति निःसर्पिःष्करोत्यत्र न सिध्यति, सर्पिः शब्दस्य करोतिक्रियायाश्च व्यपेक्षाया अभावादिति तदर्थमिदं ज्ञापकमिति भावः ।

**'भ्रातुष्पुत्रकस्कादयः'** । २ । ३ । १४ ॥ साद्यस्क्रः सद्यस्क्रीशब्दादेव प्रत्यये साद्यस्क्रस्य सिद्धत्वात् पृथगुपादानं प्रत्ययान्तरनिवृत्त्यर्थं तेन सद्यस्क्रिया भावः सद्यस्क्रीतेत्यत्र न सत्वम् । कौतस्कुतः-गणपाठादण् । अन्यथा "[1]क्वेहा- मात्र०" इति त्यच् स्यात् । किञ्च तसन्तस्य प्रथमान्तत्वेन तत इति पञ्चम्यन्ताद्विधीय- मानो न प्राप्नोति, केचित् त्वपञ्चम्यन्तादप्यणमिच्छन्ति । ततस्तन्मते न "[2]तत आगते" इत्यनेन वाऽण् । ननु द्वित्वे कृते एकपदत्वाभावात् कथं "[2]तत आगते" इत्यण् ? सत्यम्, भूतपूर्वकन्यायाद्भविष्यति । अहस्करः-अहः किरति लिहाद्यचितिकार्य कृगस्तु "[3]अतः कृकमि०" इति सिद्धमेव । अयस्कान्तेति-कनै इत्यस्य रूपं कामयते- स्तु "[3]अतः कृकमि" इति सिद्धमेव कामयतेर्वा समस्तार्थमिह पाठः तेन परमायस्कान्त इत्यपि भवति । कस्क इति-यद्येवं कः कः कुत्र न घुर्घुरा(यित)यति घुरीघोरो घुरे- त्स्वकर इत्यादि कथं ? यतस्तत्राऽपि कस्क इति स्यात् ? सत्यम् परमताभिप्रायेण । ते हि भ्रातुष्पुत्र० इदं सूत्रं सन्धिविधौ विदधति ततो विरामे विवक्षिते सति "[4]न सन्धिः" इत्यस्य प्रवृत्तेर्न सत्वम् ।

**'नाम्यन्तस्थाकवर्गात्पदान्तःकृतस्य सः शिड्नान्तरेऽपि'** । २ । ३ । १५ ॥ अनुस्वारभवनान्नित्यत्वादन्तरङ्गत्वाच्चेत्यर्थः, निसमिति-अव्युत्पन्नो ग्राह्यः ।

**'समासेऽग्नेः स्तुतः'** । २ । ३ । १६ ॥ असष इति वचनात् सकारस्य पदमध्यत्वं नाऽस्तीति वचनम् ।

**'ज्योतिरायुभ्यां च स्तोमस्य'** । २ । ३ । १७ ॥ ज्योतिः स्तोमं दर्शय- तीति ज्योतिः प्रदीपादिकर्तृसमूहं दर्शयतीत्यर्थः ।

**'मातृपितुः स्वसुः'** २ । ३ । १८ ॥ अकृतत्वात् पदादित्वाच्चाऽप्राप्ते विधा- नम् । सूत्रत्वाद् "[5]आद्वन्द्वे" इति न प्रवर्तते ।

**'अलुपि वा'** । २ । ३ । १९ ॥ पूर्वेणाऽप्राप्ते विभाषेयमारभ्यते । मातुः- ष्वसेति-"[6]शषसे शषसं वा" इति पाक्षिके रस्य सत्वे चातूरूप्यम् ।

**'निनद्याः स्नातेः कौशले'** । २ । ३ । २० ॥ निष्ण इति, "[7]उपसर्गादातोडोऽश्यः"

---

१ ६-३-१६ । २ ६-३-१४९ । ३ २-३-५ । ४ ७-४-१११ । ५ ३-२-३९ । ६ १-३-६ । ७ ५-१-५६ ।

इति डप्रत्ययः, नदीष्ण इति नद्यां स्नातीति “ स्थापास्नात्रः कः ” इति कप्रत्ययः । नदीष्णातः प्रतरणे इत्यादिष्ववयवार्थो व्युत्पत्त्यर्थमेवाऽऽश्रीयते । कुतपत्वेन, त्वनेन क्रियासु तात्पर्येणाऽनुष्ठातोच्यते ।

‘ **प्रतेः स्नातस्य सूत्रे** ’ । २ । ३ । २१ ॥ प्रत्ययान्तरनिवृत्त्यर्थमिति, अन्यथा
5 पूर्वसूत्रात् स्नातिरनुवर्तिष्यत एव किं तदुपादानेनेत्यर्थः ।

‘ **वस्त्रः** ’ । २ । ३ । २३ ॥ विष्टर इति विस्तृणातीत्यच्, विस्तीर्यत इत्यल् विष्टार पङ्क्तिरिति–विस्तीर्यते “ छन्दो नाम्नि ” इति घञ्, विस्तरस्य पङ्क्तिर्विस्तरस्य बृहतीति वाक्ये तु न घञ् संज्ञाया अभावात् समुदाये नहि संज्ञागम्यते ।

‘ **अभिनिष्टानः** ’ । २ । ३ । २४ ॥ अत्रोपलक्षणत्वान्निरोऽपि ग्रहः ।

10 ‘ **गवियुधेः स्थिरस्य** ’ । २ । ३ । २५ ॥ अनयोः सप्तम्यन्तानुकरणयोरपि युच्छब्दस्य यथा प्राप्तः “ अद्व्यञ्जनात् ” इत्यनेनैवाऽलुप् ।

‘ **एत्यकः** ’ । २ । ३ । २६ । विष्वक्सेनः–विषुवति परसेनां विषूः प्रेरकस्तमश्चति क्विपि ङ्यां विषूची, विषुशब्दोऽव्ययं वा नानात्वे वर्तते तदश्चति । यद्वा विष्वगित्यव्ययं सामस्त्ये वर्तते पश्चात्त्रिष्वपि बहुव्रीहिः ।

15 ‘ **भादितो वा** ’ । २ । ३ । २७ ॥ बिभर्तेः करणेऽनटि “ त्रयँह ” इत्याद्यणौ वा भरणिः । रोहिण्य इव, रेवत्य इव, भरण्य इव कल्याणिनी सेना यस्येति । पुनर्वस्वनयोराराधितयोः पुनर्वसू । शतभिषज्–शतभिषा नक्षत्रमतो भ इति व्यावृत्तेर्न द्वृथङ्गवैकल्यम् ।

‘ **विकुशमिपरेः स्थलस्य** ’ । २ । ३ । २८ ॥ नाम्नीति निवृत्तम्–विष्ठलादि-
20 शब्दैः संज्ञाया अप्रतीतेः । अत्र विकुशब्दावव्ययानव्ययौ विशेषानुपादानाद्वावपि गृह्यते, तत्राऽव्ययपक्षे “ गतिक्न्य० ” इति “ प्रात्यँवय० ” इति च तत्पुरुषोऽन्यत्र षष्ठीसमासः इत्याह–विगतं वीनां वेति–दीर्घान्न भवतीति–बाहुलकान्न ह्रस्व इत्यर्थः ॥

‘ **कपेर्गोत्रे** ’ । २ । ३ । २९ ॥ गोत्रमिहेत्यादि–ननु स्वापत्यसन्तानस्येत्यादि लक्षणं शास्त्रीयं ।

25 ‘ **गोऽम्बाम्बसव्यापद्वित्रिभूम्यग्निशेकुशङ्कुकङ्गुमञ्जिपुञ्जिबर्हिःपर-**

१ ५-१-१४२ । २ ५-३-७० । ३ ३-२-१८ । ४ उणा० ६३८ । ५ ३-१-४२ । ६ ३-१-४७ ।

**मदिवेः स्थस्य** ' । २ । ३ । ३० ॥ गोष्ठमिति–गावस्तिष्ठन्त्यस्मिन्निति " [1]स्थादिभ्यः कः " इति कप्रत्ययः । अम्ब्यते अपह्नवकारितया घञि अम्बोऽपह्नवकर्ता तस्याऽयं कार्यभूतोऽणि आम्बोऽपह्नवरूपो धर्मस्तत्र तिष्ठतीत्यधिकरणे तु सर्वत्र "स्थादिभ्यः कः" शीङ्कशभूदमित्यनयोः " क शीशमि० " इति, कौशेकु उद्भिद्विशेषः । " शङ्कुः पत्र-शिराजाले, संख्याकीलकशम्भुषु " सवनीयः सव्यः " य ऐचाऽतः " मञ्जेः सौत्रस्य 5
" [6]पदिपठि० " इति इप्रत्यये मञ्जिः । पूङ्पवने इत्यस्मात् " [7]पुंवः पुन् च " इति पुञ्जः । स इवाऽऽचरति । " [8]कर्तुः क्विप् " तस्य लुप् पुञ्जतीति " [9]स्वरेभ्य इः " पुञ्जिः ।

' **निर्दुस्सोः सेधसन्धिसाम्नाम्** ' । २ । ३ । ३१ ॥ निर्गतः सेधात् । दुष्षेध इति दुष्टः सेधः, अत्र रेफस्य सकारेऽनेन शिऽन्तरत्वात् परसकारस्य षत्वे पूर्व-सकारस्य च " सस्य शषौ " इति षत्वे निष्षेधादयः । 10

' **प्रष्ठोऽग्रगे** ' । २ । ३ । ३२ ॥ प्रतिष्ठते प्रष्ठः । " [10]उपसर्गादातो डः " न तु " स्थापा० " इति कस्तस्य नाम पूर्वाद्धातोर्विहितत्वान्नामग्रहणे च प्रायेणोपसर्गस्य न ग्रहणमित्यस्याऽर्थस्य ज्ञापयिष्यमाणत्वात् ।

' **भीरुष्ठानादयः** ' । २ । ३ । ३३ ॥ सव्ये तिष्ठति " [11]संख्यात्स्थः " इति डिति ऋप्रत्यये सव्येष्टृ " [12]तत्पुरुषे कृति " इति सप्तम्यलुप् । असौ सव्येष्ठा सारथिः । अन्ये 15
तृप्रत्ययान्तस्य च्छन्दोविषयत्वादाकारान्तः क्विबन्तोऽयमिति मन्यन्ते । तन्मते सव्येष्ठा इति विसर्गान्तः । " तत्पुरुषे कृती "त्यलुप्, परमेष्ठिन्नित्यत्र गणपाठसामर्थ्यादलुप् । गौरिषक्थः–गौर्या इव सक्थिनी यस्य स " [12]सक्थ्यक्ष्णः " इति टः । "[13]ङ्यापो बहुल०" इति ह्रस्वः । प्रतिस्नात्यस्यामिति " [14]स्थादिभ्यः " इति कप्रत्ययः । कुत्सिता प्रतिष्ठा नावः सेचिका । 20

' **ह्रस्वान्नाम्नस्ति** ' । २ । ३ । ३४ ॥ सर्पिष्ट इत्यत्र अहीयरुह इति तस् । निर्गतो वर्णाश्रमेभ्यो " निशो गते " यच् प्रत्ययः । अन्तरङ्ग इति–अयमर्थः परत्वा-त्पूर्वमपि प्लुते आमन्त्र्याद्याश्रयत्वेन बहिरङ्गत्वं प्लुतस्य–सर्पिस्तत्र–ननु सर्पिस्तत्रे-त्यादौ "वेसुसोऽपेक्षयाम्" इति कखपफीति व्यावृत्त्यैव षत्वव्यावृत्तेः सिद्धत्वात्किमनेन ? नैवम् । अपेक्षायां प्राप्तिरनेन तु अनपेक्षायामपि शङ्क्यते । यथा पश्याऽत्र सर्पिस्तत्र 25
यजुर्वर्तत इति ।

---

१ ५-३-८२ । २ ५-३-८२ । ३ ५-१-२८ । ४ उणा० ६०७ । ५ उणा० १२८ । ६ ५-१-११७ । ७ उणा० ६०६ । ८ ५-१-१२६ । ९ ५-१-१४२ । १० उणा० ८५५ । ११ ३-२-२० । १२ ७-३-१२६ । १३ २-४-९९ । १४ ५-३-८२ ।

'**निसस्तपेऽनासेवायाम्**' । २ । ३ । ३५ ॥ निरतपत्-अत्र पूर्वं कृतमपि षत्वं परस्मिन्नडागमे । "[1]णषमसत्" इत्यनेनाऽसिद्धम् । निस्तातप्तीति-अत्र भृशं निष्टपतीति वाक्यं कार्यम् । आभीक्ष्ण्ये त्वनासेवायामिति व्यावृत्त्यैव निरस्तत्वात् अन्त्यत्वादप्राप्ते वचनम् ।

5 '**घस्वसः**' । २ । ३ । ३६ ॥ अत्र वसो भौवादिकस्य ग्रहः वसिक् आच्छादने इत्यस्य य्वृदभावेन नामिनः सस्याऽसम्भवात् । अदाद्यनदाद्योरिति न्यायाद्वा । बहूषीति-वसतीति क्विपि य्वृतिः उषः बहव उषो येषु तानि । अत्र नागमरूपे स्यादिविधौ प्रथमं कृतमपि षत्वं निवर्तत इति प्राग्नागमस्तस्मिंश्च नामिनो व्यवधानेऽपि शिड्नान्तरेऽपीति षत्वम् ।

10 '**णिस्तोरेवास्वदस्विदसहः षणि**' । २ । ३ । ३७ ॥ प्रतीषिषतीति-अत्र 'इंण्क्' गताविति लिख्यते तस्य च ज्ञानार्थत्वात् "[2]सनीङश्च" इति न गम्वादेशः । 'इंक्' स्मरणे, 'इङ्क्' अध्ययने इत्यनयोस्तु अज्ञान इति विशेषणं नाऽसम्भवात् । अतोऽनयोर्गस्वादेशः प्राप्नोतीत्येतौ न लिख्येते । 'इंण्क्' गतावित्यस्याऽप्यज्ञानार्थत्वविवक्षायामादेशप्राप्तिः । इंढुं इत्यस्य तु ज्ञानार्थत्वविवक्षायामविवक्षायामपि नादेशः ।

15 "[3]इणिकोर्गाः" इत्यत इणिकोरेवाऽनुकृष्टत्वात् "सनीङश्चे"ति चकारेण । सोषुपिषत इति-अत्र यङोऽकारस्य स्थानित्वेन न गुणः । तथा "[4]नाम्यन्त०" इत्यस्यैवाऽयं नियमः, एतद्विषय एवाऽऽरम्भात् ।

'**सञ्जेर्वा**' । २ । १ । ३८ ॥ इकारान्तनिर्देशादिति-अत एवेह इकार उच्चारणार्थो न क्वचिदपि विहितः ।

20 '**उपसर्गात् सुग्सुवसोस्तुस्तुभोऽट्यप्यद्वित्वे**' । २ । ३ । ३९ ॥ ण्यन्तानामिति-धात्वन्तरत्वादिति शेषः । अट्यपीति-विशेषविहितत्वेन पूर्वं कृतमपि षत्वं परस्मिन्नडागमेऽसिद्धं स्यादिति । सौति सुवत्योरिति-'षुंक्' प्रसवैश्वर्ययोः इत्यनयोः । स्तौतिस्तुयत्योरिति-ष्टुंञ्च् ष्टुञ्क् इत्यनयोः ।

'**स्थासेनिसेधसिचसञ्जां द्वित्वेऽपि**' । २ । ३ । ४० ॥ अथ सुस्थितो

25 दुःस्थित इत्यादौ कथं षत्वाभावः ? उच्यते-उपसर्गप्रतिरूपका निपाता एते इत्युपसर्गत्वाभावात्षत्वाभावः । ण्यन्तानामपीति-णिगः प्रागेवोपसर्गसम्बन्धात् । अषोपदेशार्थमिति-अषोपदेशत्वं च सह इनेन वर्तत इति व्युत्पत्तौ । सेवेति साधितस्याऽपि वा व्युत्पत्तिपक्षे । स्थासञ्जोरिति-उपसर्गस्थस्य नामिनोऽवर्णान्तेन द्विर्वचनेनेत्यर्थः ।

---

१ २-१-६० । २ ४-४-२५ । ३ ४-४-२३ । ४ २-३-१५ ।

नियमबाधनार्थमिति–सेनेस्तु " णिस्तोरेव० " इति सिद्धं तिष्ठतेस्तु सन् षत्वरूपो नाऽस्तीति ।

' अवाच्चाश्रयोर्जाविदूरे ' । २ । ३ । ४२ ॥ समुदायानुवृत्तावपि व्यभिचारादञ्ज इत्यस्यैव ग्रह इत्याह–अञ्जे इति–दुर्गमिति–दुःखेन गम्यतेऽस्मिन्निति । " सुगदुर्गमाधारे " इति सिद्धिः । कर्मव्युत्पत्तौ तु खलस्यात्, अनित्यार्थमिति–यद्येवं तर्हि वोपादित्येवंविधमतः सूत्रात् पृथगेव कथं न कृतं ? सत्यम्, विचित्रा सूत्रकृतिः ।

' सदोऽप्रतेः परोक्षायां त्वादेः ' । २ । ३ । ४४ ॥ उपसर्गादित्यनुवर्तते, व्यवादित्यनुवृत्तौ तु तयोरेव विधानात् प्रतिवर्जनानर्थक्यं स्यात् ।

' स्वञ्जश्च ' । २ । ३ । ४५ ॥ अभिषिष्वं क्षत इति–नन्वत्र " णिस्तोरेव " इति नियमात् मूलधातुसकारस्य षत्वं न प्राप्नोति । उच्यते–स्पर्धे पर इति न्यायादिदमेव प्रवर्तते । अभिषस्वञ्ज इति अत्र " स्वञ्जेर्नवा " इति परोक्षायाः वा कित्त्वम् पक्षे किद्वद्भावान्न लोपाभावः ।

योगविभागादित्यादि–ननु योगविभागात्परोक्षायां त्वादेरिति नाऽनुवर्तत इति कथं न विज्ञायते ? सत्यम्, व्याख्यानतो विशेषप्रतिपत्तिरिति ।

' परिनिवेः सेवः ' । २ । ३ । ४६ ॥ सेव इति सामान्योक्तेऽपि षेवृङिति गृह्यते । न तु सेवृङिति । कृतस्येत्यनुवृत्तेः ।

' सयसितस्य ' । २ । ३ । ४७ ॥ स्यतेर्वा नियमार्थमिति–उद्योतकरस्त्वत्राऽहसिनोतेरेव ग्रहणं न्याय्यं सयेत्यनेन साहचर्यात् । किञ्च स्यतिग्रहणे नियमार्थता जायते, सिनोतिग्रहणे तु विध्यर्थता । विधिनियमसम्भवे च विधिरेव ज्यायान् । न च वाच्यमेकेनैव सितग्रहणेन स्यतिसिनोत्युभयस्योपादानाद्विध्यर्थता नियमार्थताऽपि स्यादिति। यतोऽर्थैकत्वादेकवाक्यमिति केषांचिद्वाक्यलक्षणम् । अर्थैकत्वाच्च सयसित इति वाक्यसमाप्तौ स्यतिग्रहणार्थं वाक्यान्तरं करणीयं भवतीति सिनोतेरेव ग्रहणम् । मा विषसयदिति–विषयमाख्यत् " णिङ्बहुलं० " अत्र द्वित्वे कर्तव्ये " णषमसत्० " इत्यनेन षत्वनिवृत्तावन्यस्येति द्विर्वचनम् । व्यसयीयदिति–विषयमैच्छत् क्यन्, क्यनि ईः । पर्यसितायतेति–परिषित इवाऽऽचरत् क्यङ् " दीर्घश्च्वि० " इति दीर्घः ।

' असोङसिवूसहस्सटाम् । २ । ३ । ४८ ॥ सो ङेत्येतयोर्द्वन्द्वे पश्चान्नञोऽन्यपदार्थे । " सिवूसह० " लक्षणे बहुव्रीहौ कर्मधारये च पुनर्द्वन्द्वः ।

---

१ २–३–३७ । २ ४–३–२२ । ३ ३–४–४२ । ४ २–१–६० । ५ ४–३–१०८ ।

'स्तुस्वञ्जश्चाटि नवा'। २। ३। ४९॥ स्तुस्वञ्जोर्नित्यं प्राप्त इति–उपसर्गात्सुगिति स्वञ्जश्चेत्याभ्यामित्यर्थः।

'निरभ्यनोश्च स्यन्दस्याप्राणिनि'। २। ३। ५०॥ पर्युदासोऽयमिति–अयमर्थोऽप्राणिनीति पर्युदासत्वाद्विधिप्राधान्यात्। सम्भवति चैकवाक्यत्वे वाक्यभेदाश्रयणस्याऽयुक्तत्वात्। प्रसज्यप्रतिषेधे तु न चेदित्यादिवाक्यभेदस्याऽवश्यम्भावित्वात्। ततो यत्र प्राणी चाऽप्राणी च भवति। तत्राऽपि षत्वं भवति। प्रसज्यप्रतिषेध इति–प्रसङ्गं कृत्वा प्रतिषेधः प्रसज्यप्रतिषेधः "[1]अव्ययं प्रवृद्धादिभिः" इति सः। प्रसज्यस्तु निषेधकृदित्यत्र तु तें लुग्वेति प्रतिषेधलोपः। ननु तदा अव्ययस्येति कथं सेर्न लुप्? उच्यते–समाससम्बन्धी सिरत्र नाऽव्ययस्येति न भवति।

'परेः'। २। ३।। ५२॥ योगाविभागादिति विपरिभ्यां स्कन्दोक्तयोरित्येवरूपात्।

'निर्नेः स्फुरस्फुलो'। २। ३। ५३॥ निस्फुरतीति निसः सकारस्य रुत्वं "शषसे०" इति तस्य सत्वमनेन धातुसकारस्य षत्वं, "[2]सस्य शषौ" इति षत्वम्। षत्वा भावपक्षे कदाचिद्विसर्गः कदाचिद् "[3]व्यत्यये लुग्वा" इति लोपः। मूर्धन्याभावपक्षे कदाचित्सकारद्वयस्य श्रवणं कदाचिद्विसर्गलोपौ।

'वेः'। २। ३। ५४॥ स्फुरस्फुलोर्निनिवेरित्येकयोगाभावोऽत्र।

'स्कभ्नः'। २। ३। ५५॥ ननु श्नानिर्देशाद्यत्र श्नाप्रत्ययस्तत्रैव षत्वं प्राप्नोति न तु तदभावे विष्कम्भितेत्यादौ? नैवम् स्नानिर्देशस्य श्नुनिषेधपरतया व्याख्यातत्वात्। विष्कभ्नातीत्यत्र क्षुभ्नादित्वात् णत्वाभावः। सश्नोर्मा भूदिति–यदाह चन्द्रो यद्यत्राऽपि स्यात्तदा स्कम्भ इति निर्दिशेत्। तस्माच्छ्नानिर्देशादन्यत्र शिति प्रत्यये न षकार इति। शकटस्तु श्नानिर्देशः ष्टभुङ् स्कभुङिति भौवादिकनिवृत्त्यर्थमिति। अत एवोत्पलेनाऽपि विष्कभ्नाति विष्कभ्नोतीति श्नुप्रत्ययेऽपि षत्वं गणपाठाभावात् णत्वं चोदाहृतम्।

'निर्दुस्सुवेः समसूतेः'। २। ३। ५६॥ सम इति–समतीति प्रयोगैकदेशस्य षमष्टमेत्यजन्तस्य भवति। सूतीत्यादादिकस्य "[4]ईकिस्तिव०" इति स्तिव्यपि भवति। सूतिसूयतिसुवतीनां क्यन्तानां च। तत्र "[5]अवः स्वपः" इत्यनेन पृथग्योगान्नाम्नोरेव ग्रहणं न धात्वोरित्याहनाम्नोर्ग्रहणादिति–नामग्रहणे च लिङ्गविशिष्ट-

१ ३-१-४८। २ १-३-६१। ३ १-३-५६। ४ ५-३-१३८। ५ २-३-५७।

स्याऽपि तेन सुषमा इत्यादि । धातोरेवेच्छन्तीत्युक्त्वा कथं निःपूतमित्याद्युदाहृतम् ? सत्यमुक्तप्रत्ययात्प्रागेव सूतेरुपसर्गेण योगाद्भविष्यति ।

**'अवः स्वपः'** । २ । ३ । ५७ ॥ निःषुप्त इत्यादौ "[1]ज्ञानेच्छा०" इति क्तः ।

**'प्रादुरुपसर्गाद्यस्वरेऽस्तेः'** । २ । ३ । ५८ ॥ शुभ्रादित्वादिति, न्यासे तु "[2]चतुष्पाद्भ्य एयञ्" वृत्तौ तु सारसंग्रहाद्यभिप्रायेण "[3]शुभ्रादिभ्यः" इत्युक्तम् । 5
विसृतमित्यादि–विसरतीति क्विपि तोन्ते 'क्विबन्ता धातुत्वं नामत्वं च न त्यजन्तीति' न्यायाद्विसृदित्येवंरूपाद्धातुमात्रादमूरूपे स्वरादौ प्रत्ययेऽस्तेरिति किमिति व्यावृत्तेर्न व्यङ्गविकलता । यदा तु क्तस्तदापि अस्तौ सति यस्वरस्य प्रत्ययस्येति न चिन्तेति न व्यङ्गविकलता ।

**'न स्सः'** । २ । ३ । ५९ ॥ दधिस्यते, अत्राऽस्चलौल्ये स्सः । 10

**'सिचो यङि'** । २ । ३ । ६० ॥ षत्वमिति "[4]स्थासेनि०" इत्यनेन ।

**'गतौ सेधः'** । २ । ३ । ६१ ॥ ननु कृसरधूसरवेसरकेसरादिषु प्रत्ययसकारस्य षत्वप्रतिषेधो वक्तव्यः ? नैवम्, उणादयोऽव्युत्पन्नानि नामानीति, बुधबोधनार्थं व्युत्पाद्यमाना अपि उणादयो व्युत्पत्तिकार्यं न लभन्ते । इत्थं सति वृक्ष इत्यत्राऽपि षत्वं न प्राप्नोति ? उच्यते–तर्हि बाहुलकात् षत्वभावः । 15

**'सुगः स्यसनि'** । २ । ३ । ६२ ॥ अभ्यसोऽस्यदित्यत्राऽप्यट्यपीति वचनात् "[5]उपसर्गात्सुग०" इति प्राप्तं निषिध्यते ।

**'रषृवर्णात् नो ण एकपदेऽनन्त्यस्यालचटतवर्गशसान्तरे'** । २ । ३ । ६३ ॥ ननु ऋवर्णग्रहणं किमर्थं ? यतो ऋकारमध्ये रेफ् ऌकारमध्ये तु लोऽस्तीति वृद्धवादः, ततो ऋवर्णेऽपि तन्मध्यव्यवस्थितरेफाश्रयं णत्वं भविष्यति; अत एव पाणिनिनाऽपि 20
रषाभ्यामित्येवोक्तम्, उच्यते–न हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते तद्भिन्नत्वाद् वर्णबुद्धेरनुत्पादनात्तथाहि–मांसं न विक्रेयमिति सत्यपि निषेधे गावो विक्रीयन्ते, तत्र मांसबुद्धेरभावात् । शेषवर्णव्यवधानेऽपीति–प्रसज्यप्रतिषेधादितरैर्व्यवधानेऽपि भवति । पुष्णातीति–अत्र "[6]तवर्गस्य०" इत्यनेनैव णत्वे सिद्धे षकारग्रहणं कषणमित्यादौ व्यवहितार्थं तदर्थं च सत् परत्वात् "तवर्गस्य०" इति बाधित्वा षत्वं प्रवर्तयति । नृभिर्नृभिरिति द्विःप्रयोगो द्विर्वचनमित्याश्रयणाद्भिन्नपदत्वमित्यर्थः । विरलेनेति–विपूर्वा- 25

---

१ ५-२-९२ । २ ६-१-८३ । ३ ७-३-१८२ । ४ २-३-४० । ५ २-३-३९ । ६ १-३-६० ।

द्रुमे "सुरल०" इति निपातनात्, डित्यले। ऋषीणामित्यादौ दीर्घरूपे स्यादिविधौ कर्तव्ये पूर्वकृतमपि णत्वमसिद्धं भवति।

'पूर्वपदस्थात् नाम्न्यगः'। २। ३। ६४॥ सामर्थ्यादिति-अयमर्थः रूढेन पूर्वपदशब्देन उत्तरपदमाक्षिप्यते, तदन्तरेण तस्याऽसम्भवात्तच्च नकारस्य विशेषणम्।
5 पुष्पणन्दीति-पुष्पच् पुष्प्यन्तीत्यचि पुष्पाणि नन्दयति अण्, ङी, पुष्पणन्दी आचार्यः। वत्सऋषभकार्प्पटैर्निश्चिक्ये, दिगम्बरेण तु योपान्त्यः, स च न शिष्टसम्मतः। वाध्रीणसः-वध्रस्येयं तस्येदमण् ङीः। "तद्धितस्वरे०" इति पुंवन्निषेधः। ऋगयनमिति-शिक्षादिषु ऋगयनपाठादेव णत्वनिषेधे सिद्धे किमग इत्यनेन? सत्यम्, अबाधकान्यपि ज्ञापकानि भवन्ति। उत्तरपदसम्बन्धी नकारो न भवतीति-"प्रत्ययः प्रकृत्यादेः"
10 इति न्यायात्। पूर्वेणैव णत्वमिति-ननु पूर्वेणाऽपि कथं यतः खरपशब्दस्याऽन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वमस्ति, तत्स्थत्वाद्रेफस्य चेत्येकपदत्वाभावादिति। अत्रोच्यते-यत्र द्वावपि निमित्तनिमित्तिनावेकपदत्वं व्यभिचरतस्तत्र णत्वाभाव इह तु रेफस्य व्यभिचारेऽपि नकारस्यैकपदस्थत्वाव्यभिचारः। यद्वा सित्येवेति नियमेनायनण्प्रत्यये खरपशब्दस्य पदत्वस्य निरस्तत्वात् पूर्वेण भवत्येव। मनोहरा-वृक्षविशेषाः।

15 'निष्प्राग्रेऽन्तःखदिरकार्श्याम्रशरेक्षुप्लक्षपीयूक्षाभ्यो वनस्य'। २। ३। ६६॥ निष्प्राग्रेन्तरो नौषधिवचना नाऽपि वृक्षवचनाः तेभ्यः संज्ञायां कोटरादिनियमेन व्यावर्णितत्वादप्राप्तं णत्वं विधीयते। असंज्ञायामप्येकपदत्वाभावादप्राप्तमेव। इक्षुशरशब्दावौषधिवचनौ शेषा वृक्षवचनास्तेषां संज्ञायां कोटरादिनियमेन णत्वस्य व्यावर्तितत्वादुत्तरेणाऽप्राप्ते विध्यर्थं, असंज्ञायां तूत्तरेण विकल्पे प्राप्ते नित्या-
20 र्थम्। कार्श्यवर्णमिति-कार्श्यशब्दो वृक्षविशेषवाची अव्युत्पन्नोऽथवा कृश्यते "नाम्युपान्त्य०" इति के ट्यणि धर्मधर्मिणोरभेदोपचारात् कार्श्यगुणयुक्तो वृक्षोऽपि कार्श्यः। पीयुक्षेति-पीयुक्षाशब्दो द्राक्षापर्यायो द्राक्षाविशेषो वा। पीङ्च क्विपि पीः पियं याति "पीमृग०" इति किदुः, पीयुं क्षायति "आतो डो०" इति डः।

'द्वित्रिस्वरौषधिवृक्षेभ्यो नवाऽनिरिकादिभ्यः'। २। ३। ६७॥ कोद्र-
25 ववणमिति-केनाऽम्भसा उद्यन्ते-क्लिद्यन्ते "कैरव०" इति साधुः केनोद्रवन्त्युच्छब्दायन्तेऽचि वा। लता वल्लीकर्कोट्यादिका, गुल्मा ह्रस्वस्कन्धास्तरवो बहुकाण्डपत्राः केतक्यादयः, एतल्लतागुल्मरूपं द्वयं वीरुधः। उत्पलस्त्वेवं व्याचष्टे-लता गुल्मास्तेभ्यो विलक्षणा वीरुधः। पुष्पं विना फलमेव यस्य स प्लक्षादिः फली। पुष्पं च

---

१ २-४-९२। २ ५-१-५४। ३ उणा० ७४१। ४ ५-१-७६। ५ उणा० ५१९।

फलं चोपगच्छन्ति पुष्पफलोपगाः "[1]नाम्नो गमः०" इति डे—वृक्षाः पुष्पफलोपगा इति। न चोभयमेवोपगच्छन्ति त एव वृक्षाः किं तर्हि? येऽप्यन्यतरत् पुष्पं फलं वोपगच्छन्ति तेऽपि वृक्षा एव। तत्र वेतसादयः पुष्पमेव प्लक्षादयः फलमेवाऽऽम्रादयस्तूभयमप्युपगच्छन्ति। तत्र वृक्षो वनस्पतित्वमवकेशित्वं च न व्यभिचरति। वनस्पतिरवकेशी तु वृक्षत्वं व्यभिचरतः। यतः "फली वनस्पतिर्ज्ञेयः फलवन्ध्यस्त्ववकेशी" इति। अत एव च वनस्पत्यादिग्रहणमकृत्वा वृक्षग्रहणं कृतं तदन्तर्गतत्वाद्वनस्पत्यादेरिति। विदारी—लताविशेषः।

'गिरिनद्यादीनाम्'। २। ३। ६८॥ तूर्यमाण इति—तूर्यं मानमस्येति वाक्ये निमित्तनिमित्तिनोरेकपदस्थत्वाभावादप्राप्ते विकल्पः। तूर्यतेस्त्वानशिश्ये मागमे च "[2]रषृवर्णा०" इति नित्यं प्राप्ते। शिक्षादित्वादिति—अन्यथा बहुस्वरत्वात् प्रायो बहुस्वरादिकण् स्यात्।

'पानस्य भावकरणे'। २। ३। ६९॥ सौवीरपाणमिति—सौवीरेषु प्रायो भवं बाहुलकादकञं बाधित्वा भवेऽण्। सुवीराणामिदं "[3]तस्येदम्" इति वा।

'देशे'। २। ३। ७०॥ योगविभागादिति—अन्यथा 'पानस्य भावकरणदेशे' इति क्रियेत। तथाऽत्र कर्मसाधनः पानशब्दो गृह्यते, भावकरणप्रधानस्य तु पूर्वेण विकल्प एव उशीनरा इति—उश्यत इति "[4]स्थादिभ्यः कः" वष्टीति क्विपि ग्वृति गौरादित्वाद् ङ्यामुशी नगरी तस्या नराः। गान्धारयः—गन्धारस्याऽपत्यं वृद्धमत इञ् गान्धारिः राष्ट्रक्षत्रियसरूपः ततो गान्धारीणां राजानः, गान्धारे राज्ञोऽपत्यानि वा "[5]गान्धारिसाल्वेयाभ्याम्" "[6]यञञोऽश्या०" इति बहुष्वस्त्रियां लुप्। ननु क्षीरपाणादयः शब्दा मनुष्येषु वर्तन्ते। तत्सामानाधिकरण्यादुशीनरादयोऽपि तत्रैव तत्कथमिह देशो गम्यत इत्याह—तात्स्थ्यादित्यादि। अयमर्थः—उशीनरादयो हि शब्दाः संज्ञात्वेन पूर्वं देशेष्वेव प्रवृत्ताः पश्चात्तु तत्स्थानसम्बन्धात् मनुष्येषु तेन मनुष्याभिधानेऽपि तेन मनुष्यदेशाभिधानं गम्यते, दाक्षीणां पानमिति—अत्र कर्त्तरि षष्ठी।

'ग्रामाग्रात् नियः'। २। ३। ७१॥ ननु "[7]गतिकारक०" इति न्यायाद्विभक्त्युत्पत्तेः प्रागेव समासे निमित्तनिमित्तिनोरेकपदस्थत्वात् "[8]रषृवर्णा०" इत्यनेनैव णत्वं सिद्धमेव किमनेनेति? सत्यम्, नियमार्थं यदि नियो णत्वं स्यात्तदा ग्रामाग्रादेव तेन खरनीमेषनीत्यादौ पूर्वेणाऽपि न भवति।

---

१ ५-१-१३१। २ २-३-६३। ३ ६-३-१६०। ४ ५-३-८२। ५ ६-१-११५। ६ ६-१-१२६। ७ ३-२-८५। ८ २-३-६३।

'वाह्याद्वाहनस्य' । २ । ३ । ७२ ॥ वोढव्यं वाह्यमिति–वहेर्हेऽर्थे घ्याणि वाह्यं वहनार्हमिक्ष्वादि तेन यदापि वाहने वहनार्थमिक्ष्वादि वाह्यं नाऽऽरोपितं भवति तदर्थं तु केवलमुपकल्पितं भूतलस्थं तदापि भवत्येव ।

'अतोऽह्नस्य' । २ । ३ । ७३ ॥ दीर्घाह्णी शरदिति–दीर्घाह्णी, दीर्घाहाः, दीर्घाहा
5 रूपत्रितयम् ।

'वोत्तरपदान्तनस्यादेरयुवपक्काह्नः' । २ । ३ । ७५ ॥ प्राप्ताप्राप्तविभाषेयम् । तथाहि–लिखितेषु प्रयोगेषु "गतिकारक०" इति न्यायात् स्याद्युत्पत्तेः प्रागेव समास इत्येकपदात्प्राप्ते व्याघ्रीवत्पामा येषां तानि व्याघ्रीपामाणि व्याघ्रीपामानि वेत्यादिषु त्वदर्शितेष्वप्राप्ते । पाणिनिस्त्वप्राप्ते विभाषां मन्यते । तन्मतेऽपि वापोऽस्त्यनयोर्वापिनौ
10 व्रीहीणां वापिनाविति यदा क्रियते तदाऽप्राप्ते । अत्रोत्तरपदस्यान्तो नकारो न भवतीति–किन्तु "प्रत्ययः प्रकृत्यादेः" इति न्यायेन गर्गभग इत्यस्य समुदायस्यैव । त्र्यह्नि–चतुरह्नीति अनयोर्भवेऽर्थेऽण्विषये "सर्वांश०" इत्यनेनाऽद् अह्नादेशश्च । गर्दभवाहिनाविति–गर्दभान् वाह्यत इत्येवंशीलौ ।

'कवर्गैकस्वरवति' । २ । ३ । ७६ ॥ न चेदिति–सत्यपि त्रितयानुवर्तने
15 प्रतिषेधस्य प्राप्तिपूर्वकत्वात् कवर्गवत्त्वात् पक्कशब्दस्यैव प्रतिषेध इति । स्वर्गकामिणाविति–सुखेन पुण्यकर्मभिरर्ज्यत इति घञि न्यङ्क्वादित्वाद्गे तं कामयेते इत्येवंशीलौ । मोक्षकामिणाविति–मुच्यन्ते प्राणिनः कर्ममलकलङ्केनाऽत्रेति "भीवावधमि०" इति से । नित्यार्थमिति–अयमर्थः "गतिकारक०" इति न्यायेन निमित्तनिमित्तिनोरेकपदस्थत्वाद् "रषृवर्णा०" इति नित्यं प्राप्ते "वोत्तर०" इति विकल्पितं पुनर-
20 नेन नित्यं विधीयते इत्यर्थः ।

'अदुरुपसर्गान्तरो णहिनुमीनानेः' । २ । ३ । ७७ ॥ हिनुमीनानिग्रहणात् समासस्याऽसम्भवात् पूर्वपदस्थादित्यस्य निवृत्तावविशेषेणोपसर्गात् णत्वविधिः । हिनुमीनाग्रहण इति–अथ प्रहिणोति प्रमीणीत इत्यत्र गुणे ईकारे च कृते हिनुमीनेत्येतद्रूपविरहात् स्थानीवेत्यस्याऽप्यसद्विधौ स्वरस्य स्थानिवद्भावप्रतिषेधात् कथं ण-
25 त्वमित्याह–विकृतस्याऽपीति । प्रवपानि मांसानीति–उप्यत इति वपा भिधाद्यङ् । आनीत्यर्थवत इति–वपानीति समुदायस्याऽर्थवत्त्वादानीत्यस्य पृथगर्थाभावादनर्थकत्वमुपसर्गत्वाभावाद्वा । अत एव प्रवृद्धा इति विग्रहो वृत्तौ दर्शितः ।

---

१ ३–२–८५ । २ ७–३–११८ । ३ उणा० ५६४ । ४ ३–२–८५ । ५ २–३–६३ । ६ २–३–७५ ।

'नशः शः'। २। ३। ७८॥ प्रनष्ट इति–अत्र "नेशोऽधुटि" इति नागमस्य "नो व्यञ्जनस्य०" इति लुक्। प्रनङ्क्ष्यतीत्यादि–अत्र परेऽसदित्यन्तरङ्गत्वात् पूर्वं कृतमपि णत्वं षत्वादावसत्त्वात् षत्वे कृतेऽप्येकदेशविकृतस्याऽनन्यत्वात् प्राप्तमपि श इति वचनात् साक्षाच्छकारान्तत्वाभावात् निवर्त्यते।

'नेर्ङ्मादापतपदनदगदवपीवहीशमूचिग्यातिवातिद्रातिप्सातिस्यतिहन्तिदेग्धौ'। २। ३। ७९॥ न मातीत्यादि–नन्वेषां मारूपाभावाद्ग्रहणाशङ्काऽपि कुतः? उच्यते–"मिग्मिशोऽखैलचलि" इत्यनेनाऽऽत्वविधानात्। नाऽनुबन्धनार्थ इति–यया रीत्या धातुपाठे माङित्यपाठि तद्रीत्या यदि सूत्रेऽपि क्रियेत तदाऽनुबन्धार्थः स्यात्। अत्र तु विशेषणं ङकारेणोपलक्षितो मा इति। ननु "सप्तम्या निर्दिष्टे पूर्वस्य" तच्चाऽनन्तरस्य न व्यवहितस्येति न्यायात् प्रण्यास्यतीत्यादावाङा व्यवधाने न प्राप्नोतीत्याह–आङा व्यवधानेऽपीति–अयमर्थः "पदेन्तरे०" इति णत्वनिषेधकसूत्रे आङो वर्जनादाङा व्यवधानेऽपि भवति।

'अकखाद्यषान्ते पाठे वा'। २। ३। ८०॥ अत्राऽकखादिपान्त इति सिद्धे नञ्द्वयं सुखार्थं, नञ्द्वये हि सति कखादेः पान्तस्य च वर्जनं प्रतीयते। एकस्मिंस्तु कखादेः किंविशिष्टस्य पान्तस्येति प्रतीतिः स्यात्। असम्भवात् न भविष्यतीति न वाच्यम्। कपशिषेत्यादावेवं विधस्याऽपि दर्शनात्। सौत्रेषु पाठादिति–ननु स्तम्भेर्धातुष्वपाठात् कथं पाठविषयत्वं? उच्यते–सूत्राणां सूत्रमेव धातूपदेशः। प्रनिवेष्टेति–'विशंत्' प्रवेशने, इत्यस्य रूपम्।

'द्वित्वेऽप्यन्तेऽप्यनितेः परेस्तु वा'। २। ३। ८१॥ प्राणिणिपतीत्यादौ द्वयोरप्यनेनैव णत्वं द्वित्व इति वचनात्। हे प्राण!–अन्ते "नाऽऽमन्त्र्ये" इति नलोपप्रतिषेधात् नान्तत्वं सम्भवतीत्यामन्त्र्ये दर्शितम्। ननु द्वित्वेऽपि कृतेऽन्तेऽपीति वचनादन्तेऽपि शब्दादनन्तेऽपि भविष्यति किं द्वित्वेऽपीत्यनेन? नैवम्, द्वित्वेऽपीत्यस्याऽभावे प्राणिणिपतीत्यत्र प्रथमनकारेऽन्तेऽपीत्यस्य चरितार्थत्वाद्द्वितीयनकारस्य णत्वं न स्यात्। टवर्गेण व्यवधानात्। अन्तेऽपीत्यत्राऽपि शब्दाभावे द्वित्वेऽप्यन्त एव स्यादिति। ननु द्वित्वे सत्यन्तस्थो नकारः क्व सम्भवति? उच्यते–प्राणितेः सनि प्राणिणिषन्तं प्रयुङ्क्ते णिगि अल्लोपे क्विपि प्राणिणिषमाचष्टे णिजि पुनः "त्र्यन्त्यस्वरादेः" इत्यनेन इसिति लोपे क्विपि हे प्राणिण्? इत्यादावामन्त्र्यत्वाच्च न लोपाभावे प्राणिणिपन्तीत्याद्यनन्तेऽपि।

१ ४-४-१०९। २ ४-२-४५। ३ ४-२-८। ४ २-३-९३। ५ २-१-९२। ६ ७-४-४३।

'हनः'। २। ३। ८२॥ प्रघ्नन्तीत्यादौ हन् इत्युच्यमानेऽप्येकदेशविकृतस्याऽनन्यत्वात् णत्वं प्राप्नोतीत्याह–हनोऽघीति।

'वमि वा'। २। ३। ८३॥ पूर्वेण नित्यं प्राप्ते विकल्पार्थम्।

'निंसनिक्षनिन्दः कृति वा'। २। ३। ८४॥ नित्यं भवतीति–"अदुरुपसर्गा॰" इत्यनेन शेषः। णोपदेशत्वाद् "अदुरुपसर्गा॰" इत्यनेन गतिकारकङस्युक्तानामिति न्यायादविभक्त्यन्तैः कृदन्तैः सह प्रादीनां समासे सति निमित्तनिमित्तिनोरेकपदस्थत्वात् "रषृवर्णा॰" इत्यनेन वा नित्यं णत्वे प्राप्ते विकल्पार्थमिदम्।

'स्वरात्'। २। ३। ८५॥ "गतिकारक॰" इतिन्यायाद् "रषृवर्णा॰" इति सिद्धमेव किन्तु प्रयायिणौ परियायिणावित्यत्र "वोत्तर॰" इति वा णत्वं स्यात्तन्निवृत्त्यर्थमिदमारभ्यते। कृद्विषयस्येति–कृतीति विषयसप्तमीयं न निमित्तसप्तमी। तस्यां हि स्वरात् परस्य धातोर्नस्य कृन्निमित्ते णत्वमिति सूत्रार्थः स्यात्। न चैतदसम्भवान्न भविष्यतीति वाच्यम्, प्रेण्वनमित्यादावेवंविधस्याऽपि दर्शनात्। तथा च सति न ख्यापूग इत्यादि प्रतिषेधेऽनर्थकः प्राप्तेरभावान्नहि ख्यादीनां कृति निमित्तभूते स्वरात्परो धातुनकारोऽस्ति येन प्राप्तौ प्रतिषेधेऽर्थवान् स्यादिति स्वरादिति कृन्नकारस्य विशेषणं, न "अदुरुपसर्गान्तर॰" इत्यस्य धातोर्वा "देशेऽन्तरोऽयनहनः" इति प्रतिषेधादनेन हि प्राप्तस्य स प्रतिषेधः। न चाऽन्तःशब्दो धातुर्वा स्वरान्तो वा येन प्रतिषेधोऽर्थवान् स्यादिति। उपसर्गविशेषणे प्रभुग्न इत्यत्राऽपि स्यात्। कृद्विशेषणमपि न। तस्मिन्नपि कृते कृतो यः स्वरस्ततः परस्य नकारस्येति स्थिते प्रयाणीयमित्यादौ प्राप्तिः। प्रहीण इत्यादौ न स्यादिति। प्रक्लृप्यमानमिति–वर्णैकदेशस्य वर्णग्रहणेन ग्रहणात् समुदायव्यापारे चाऽवयवस्याऽपि स्वव्यापारानुच्छेदेन व्यापारात् लृकारे उच्चार्यमाणे तदवयवस्य लकारस्याऽप्युच्चारणमित्यलचटेति प्रवर्तत एव।

'नाम्यादेरेव ने'। २। ३। ८६॥ प्रेङ्खणमित्यादौ वोत्तरेति नागमस्य विकल्पो नाम्नामिति बहुवचनेन बाधितत्वात्।

'व्यञ्जनादेर्नाम्युपान्त्याद्वा'। २। ३। ८७॥ दुर्गूहन इति–दुर्गुह्यतेऽनेनाऽस्मिन् वा "करणाधारे" अनट् दुर्गुह्यतीति नन्द्यादिभ्यो वा–दुर्गूहन इत्यत्र "गोहः स्वरे" ऊत्।

'णेर्वा'। २। ३। ८८॥ शेषेभ्यस्त्विति–नागमरहितेभ्यः।

---

१ २–३–७७। २ २–३–६३। ३ २–३–७५। ४ २–३–९१। ५ ५–३–१२८। ६ ४–२–४२।

'निर्विण्णः' । २ । ३ । ८९ ॥ गतिकारकेतिन्यायाद् "[१]रषृवर्णा०" इति सिद्धमेव किमनेन? सत्यम्, अनेन न्यायेन निर्विण्णवानित्यत्राऽपि स्यात् तन्निवृत्त्यर्थमिदम् । एते त्रयोऽपि धातूनामनेकार्थत्वाद्वैराग्ये वर्तन्ते । निर्विण्ण इति–विदक् ज्ञाने इत्यस्य सेट्त्वान्न । अलचटेति व्यावृत्त्या चाऽप्राप्तौ क्तनकारस्य णत्वं निपात्यते, धातुनकारस्य तु "[२]तवर्गस्य०" इति । 5

'न ख्यापूग्भूभाकमगमप्यायवेपो णेश्च' । २ । ३ । ९० ॥ ख्या इति निरनुबन्धोपादानं ख्यादेशस्य ख्यांक् प्रथन इत्यस्य च परिग्रहार्थम् । नित्यमिति– "[३]स्वरात्" इत्यनेन । वेपो विकल्पेनेति–"[४]व्यञ्जनादेर्नाम्युपा०" इत्यनेन ण्यन्तेभ्यश्चेति–"णेर्वा" इत्यनेन ।

'देशेऽन्तरोऽयनहनः' । २ । ३ । ९१ ॥ स्वरादिति हन इति च यथासंख्यं 10 प्राप्ते प्रतिषेधः । अन्तर्घण इति–"[५]हनोऽन्तर्घनान्त०" इत्यलन्तो निपात्यते । वाहीकेषु देशविषयस्येयं संज्ञा । प्रायणोदेश इति–इंडुं, इंण्क् वा, प्रेयतेऽस्मिन्नित्यनटि "[३]स्वरात्" इति णत्वे । अयतौ तु "[६]उपसर्गस्याऽयौ" इति लत्वं स्यात् ।

'षात् पदे' । २ । ३ । ९२ ॥ सर्पिष्पानमिति–नन्वत्र षकाराश्रितं मा भूण्णत्वं सर्पिस्थरेफाश्रितं कथं नहि? उच्यते–यत्रोत्पद्यमानस्य णत्वस्य निमित्तद्वयं भवति तत्र 15 प्रत्यासत्त्याऽनन्तरमेव गृह्यत इति । सर्पिष्केणेति–सर्पिष्कायतीति सर्पिस्, अम् का धातुः अग्रे इति स्थिते क इत्यस्याऽविभक्त्यन्तत्वात् पदत्वाभाव इति नाऽनेनत्वप्रतिषेधः । ननु उत्तरपदमपि पदमुच्यते यथा "[७]वेदूतोऽनव्यय०" इत्यत्र पदे इत्युक्तेऽपि उत्तरपदे इति वृत्तिकृता व्याख्यातम्, तद्वदिहाऽपि पदे इत्युक्ते उत्तरपदमपि लप्स्यते तत्कथं सर्पिष्केणेत्यत्र व्यावृत्तिः?, सत्यम्; 'नाऽनिष्टार्था शास्त्रप्रवृत्तिः' इतिन्यायादेवंविधं 20 व्याख्यानं न सर्वत्राऽपि युक्तं किन्त्वभिप्रेतसिद्ध्यर्थं क्वचिदेव । यदा तु कुत्सिताद्यर्थे कप् तदा निर्विवादमेव ।

'पदेऽन्तरेऽनाङ्यतद्धिते' । २ । ३ । ९३ ॥ चतुरङ्गयोगेन–अत्र "[८]कवर्गैक०" इति प्राप्तं निषिध्यते । माषकुम्भस्य वापः माषस्य कुम्भवाप इत्यस्मिंश्च वाक्ये "[९]वृत्त्यन्तोऽसषे" इति पदसंज्ञानिषेधेऽपि भूतपूर्वकं पदत्वमाश्रीयते । कवर्गैक- 25 स्वरवतीति–कवर्गांशेन विशेषविहितत्वान्न तु "[१०]वोत्तर०" इति विकल्पः ।

'क्षुभ्नादीनाम्' । २ । ३ । ९६ ॥ क्षुभ्नेति लुप्ततिव्निर्देशेन धातुग्रहणं न तु

---

१ २–३–६३ । २ १–३–६० । ३ २–३–८५ । ४ २–३–८७ । ५ ५–३–३४ । ६ २–३–१०० । ७ ३–४–५८ । ८ २–३–७६ । ९ १–१–२५ । १० २–३–७५ ।

यङ्लुप्निवृत्त्यर्थम् । अनुबन्धनिर्देशे हि क्षोभणमित्यत्राऽपि स्यात् । एवं तृप्नुत इत्यत्राऽपि । यद्येवं तर्हि क्षुभ्नीत इत्यादौ णत्वशास्त्रस्य परेऽसत्त्वादीकारादौ कृते क्षुभ्नेति–रूपाभावान्न प्राप्नोति ? उच्यते–स्वरादेशस्य स्थानिवद्भावादेकदेशविकृतस्याऽनन्यत्वाद्वा भविष्यतीत्यदोषः । बहुवचनेन चाऽस्याऽऽकृतिगणता द्योत्यते । तेनाऽन्योऽप्यविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यस्तेन धनदवाचकनरवाहनशब्दस्य न णत्वम् । नृनमित्येक इति–अविभक्तिको निर्देशः । अकारान्तस्त्वयं ज्ञातव्यः ।

'**पाठे धात्वादेर्णो नः**' । २ । ३ । ९७ ॥ नन्वादिग्रहणं किमर्थं तमन्तरेणाऽपि णोपदेशबलाण्णत्वं न भविष्यति, अन्यथा भनित्येव पठ्यते ?, नैवम्; णोपदेशस्य । "अर्दुरुपसर्गा०" इति णत्वे फलमस्ति, तथाह्युपसर्गपूर्वस्य प्रभणति अन्यत्र तु भनतीति स्यादित्यादिग्रहणं कर्तव्यमेव । पाठ इति किमिति–पाठ इत्यनेन धातूपदेशस्य ग्रहणाण्णकारीयतेरनुपदेशान्नत्वाभावः । अथैते नादय एव पठ्यन्तां तथा च सति नेदमारब्धव्यं भवतीत्याह–णोपदेशश्चेति–एवमुत्तरत्र षोपदेशेऽपि ।

'**षः सोऽष्ट्यैष्ठिवष्वष्कः**' ।२।३।९८॥ नन्वत्राऽप्यादेरित्यधिकाराभावेऽपि पाठबलादेव लषतीत्यादौ षत्वं न भविष्यति किं तेनेति ? सत्यं, परोक्षायामुसिकृतत्वात् सस्य षत्वे व्यलेषुरित्यत्र फलम् ।

'**ऋरल्लं कृपोऽकृपीटादिषु**' । २ । ३ । ९९ ॥ "दूरादामन्त्र्यस्य०" इत्यत्र ऋद्वर्जितस्य प्लुतत्वं वदन् स्वरद्वारेणैव सिद्धे पुनरपि यत् लकारग्रहणं करोति तदेव बोधयति ऋत्प्रतिषेधे लृतोऽपि प्रतिषेधप्रसङ्ग इति '<u>ऋकारापदिष्टं कार्यं लृकारस्याऽपीति</u>' । अचीक्लृपत् अत्र "ऋद्वर्णस्य," "ऋतोऽत्" चलीकॢप्यत इत्यत्र "रिरौ च लुपि" इति सिद्धम् ।

'**ग्रो यङि**' । २ । ३ । १०१ ॥ निजेगिल्यत इति–अत्र श्वादेरित्यस्य परे लत्वेऽसत्त्वम् । यङेव नाऽस्तीति–" न गृणाशुभरुचः " इति निषेधात् ।

'**नवा स्वरे**' । २ । ३ । १०२ ॥ निगाल्यत इति–अत्र निपूर्वाद्गृतो णौ वृद्धौ लकारो णिलोपश्चेत्युभयप्राप्तौ नित्यत्वात् पूर्वं णिलोपः । न च '<u>प्रत्ययलोपे प्रत्ययलक्षणम्</u>' इतिन्यायेन लत्वस्याऽपि प्राप्तौ तस्याऽपि नित्यत्वं, वर्णाश्रये प्रत्ययलक्षणस्य प्रतिषेधात् ।

'**ऋफिडादीनां डश्च लः**' । २ । ३ । १०४ ॥ अत्तेर्बाहुलकात् फिडकृप्र-

---

१ २-३-७७ । २ ७-४-९९ । ३ ४-२-३७ । ४ ४-१-३८ । ५ ४-१-५६ । ६ ३-४-१२ ।

स्यये ऋफिडः । अर्त्तेरेव क्ते कुत्सादौ के ऋतकः । तृपौ च "तूणीकास्तीक०" इति तर्परीकं । कपिरशब्दात् के-कपिरकं । नञ्पूर्वाद्राते: "गमिजमि०" इति बहुवचनात् डित्यपि अरम् । लिखेः समानार्थात् रिखेर्भिदाद्यङि रेखा । वडेः सौत्रात् "कॄशॄगॄशलि०" इति अभे गौरादिङ्यां च वडभी । वडेः सौत्रात् " कुलिकॅनि० " इति किशि वडिशं । डिण्डिमिति ध्वनिमततीति " कॅचित् " इति डे डिण्डिमः । 5

'जपादीनां पो वः' । २ । ३ । १०५ ॥ त्रिष्लंङ्की " विष्टपोलप० " इति । तृतीयं विष्टपं प्राच्यास्त्रिविष्टपमिति पठन्ति ।

इत्याचार्यश्रीहेमचन्द्रानुस्मृते शब्दानुशासनेऽवचूरिकायां
तृतीयः पादः ॥

 10

'स्त्रियां नृतोऽस्वस्रादेर्ङीः' । २ । ४ । १ ॥ अतिराज्ञीति-पूजितो राजा स्त्री चेदतिराज्ञीति । " पूँजास्वतेः० " इति समासान्तप्रतिषेधः । राजानमतिक्रान्तेत्यपि कृते समासान्तविधेरनित्यत्वमिति काशिका ।

'अधातूदृदितः' । २ । ४ । २ ॥ गोमदादिशब्दोऽप्युदिदिति-अवयवधर्मेण समुदायोऽपि व्यपदिश्यते-अत्राऽवयव उदित्, तद्धर्मेण समुदायोऽपीत्यर्थः। सुकन्नित्यादि 15 " न्स्महतोः " इत्यत्र महत्साहचर्यात् क्विबन्तस्य कंसो न ग्रहणमित्यर्थस्य ज्ञापितत्वादत्र न दीर्घः। प्रत्ययस्योदित्त्वादिति-अजादेरित्यत्राऽऽवृत्तिव्याख्यानेन तदन्तस्य ग्रहणे सिद्धे यदिदं व्याख्यानं तद्युक्त्यन्तरस्याऽपि दर्शनार्थम् । यत एकस्याऽपि साध्यस्य सिद्ध्यर्थं बह्वयोऽपि युक्तय उपन्यस्यन्ते ।

'अञ्चः' । २ । ४ । ३ ॥ अञ्च इति कृतनलोपाभावस्य धातुरूपस्याऽञ्चेर्निर्देश- 20 स्तेनाऽर्चाविवक्षणे नलोपाभावे तदविवक्षणे लोपेऽपि ङीः सिद्धः । अच इति निर्देशे तु " अंच्च् प्राग्दीर्घश्च " इतिवत् कृतनलोपस्यैव स्यात् । इत्थं च प्राञ्चीप्रत्यञ्चीत्यादौ ङीर्नाऽऽगच्छेत् ।

'णस्वराऽघोषाद्वनोरश्च' । २ । ४ । ४ ॥ ननु 'निरनुबन्धग्रहणे न सानुबन्धकस्य' इति क्वनिप्ङ्वनिपोर्ग्रहणं न प्राप्नोति ? उच्यते-'निरनुबन्धग्रहणे क्वचित्सानुबन्धस्य 25 ग्रहणम्' इति न्यायात् न दोषः । वनोऽन्तस्येति-ननु प्रत्ययस्येति सर्वस्याऽपि प्राप्नोति

१ उणा० ५० । २ उणा० ९३७ । ३ उणा० ३२९ । ४ उणा० ५३५ । ५ ५-१-१७१ । ६ उणा० ३०७ । ७ ७-३-७२ । ८ १-४-८६ । ९ २-१-१०४ ।

तत्कथमुक्तमन्तस्येति ? सत्यम्, वात् न् वन् इति कृते भविष्यति। अतिशुनीति-पूजितः श्वाऽतिश्वा स्त्री चेदतिशुनी। नियमार्थमिति-णस्वराघोषादेव वनो ङीर्भवति। तेन सह युद्धेत्यादौ पूर्वेणाऽपि न भवति। विपरीतनियमस्तु "स्त्रियां नृतो०" इत्यस्याऽऽरम्भात् न। विपरीतनियमे हि राज्ञीत्यादौ स्वरात् परस्य नकारस्याऽवस्थानात्
5 "स्त्रियां नृतो०" इत्यनेन ङीर्न स्यात्।

"वा बहुव्रीहेः" । २ । ४ । ६ ॥ बहुमेरुदृश्वरीति-अन्ये चन्द्रगोम्यादयो "नोपान्त्यवतः" इति प्रतिषेधमिच्छन्तो बहुमेरुदृश्वेत्येव कथयन्ति, स्वमते तु व्यक्त्या सूत्रस्य प्रवर्तनान्न निषेधः।

'ऊध्नः' । २ । ४ । ७ ॥ ऊध्नित्यादेश इति-अयमर्थः, यदि समासान्तविधौ,
10 ऊध्नित्यादेशं न कुर्यात् किन्तु न इत्येव तदाऽनो वेत्यनेन विकल्पः स्यान्न तु "स्त्रियां नृतो०" इत्यनेन नित्यं ङीरिति। पञ्चकुण्डोधेति-ननु लुपः पित्वात् "क्यङ्मानि०" इत्यनेन पुंवद्भावः कथं न भवति ? नैवम्, "स्त्रियामूधसोऽन्" इत्यत्र स्त्रियां विषये व्याख्यानात्। विषयव्याख्यानं हि निर्निमित्तत्वार्थम्। ततो यदि पुंवद्भावोऽभिप्रेतः स्यात्तदा ङ्यामूधसोऽनिति सनैमित्तिकमेव कुर्यात्। ननु ङ्यामिति कृते ङीरपि
15 कथम् ? उच्यते-तदा गौरादौ पठ्येत। निमित्तव्याख्याने हि "मूल्यैः क्रीते" इकणि तल्लुपि "ङ्यादे०" इति ङीनिवृत्तौ तन्निमित्तकसमासान्तस्याऽपि निवृत्तिः प्राप्नोति। ततश्च पञ्चकुण्डोधा इति विसर्गान्तं रूपं प्राप्नुयादिति समासान्तविधौ सन्निमित्तक आदेशो नाऽकारि।

'अशिशोः' । २ । ४ । ८ ॥ ननु ऊधन्शब्दस्याऽशिशुशब्दस्य च बहु-
20 व्रीहिविशेषणत्वेन समानार्थत्वादेकयोग एव क्रियताम् ? उच्यते-बहुव्रीहावप्यूध्न इति तदन्तस्य विधिः, अशिशोरिति च स्वरूपस्येति योगविभागः।

'संख्यादेर्हायनाद्वयसि' । २ । ४ । ९ ॥ इकणि तल्लुपि चेति-"वर्षाकालेभ्यः" इत्यस्य। शकटाभिप्रायेणेदमुक्तम्। तन्त्रोद्योतस्तु शतहायनशब्दस्य कालवाचकत्वाभावे "तत्र कृत०" इत्यनेनाऽणेवेच्छति।

25 'नोपान्त्यवतः' । २ । ४ । १३ ॥ उपान्त्यलोपो नाऽस्तीति-"न वमन्तसंयोगात्" इति निषेधेनेत्यर्थः। स्त्रियां नृत इत्यस्यापीति-अन्यथाऽनोऽनुपान्त्यवतो वेत्येकयोगः क्रियेत। अतिपर्वणीत्यत्र अव्युत्पत्तिपक्षाश्रयणात् "णस्वराघोषा०"

---

१ २-४-१ । २ २-४-१३ । ३ ३-२-५० । ४ ७-३-१६६ । ५ ६-४-१५० । ६ २-४-९५ । ७ ६-३-८० । ८ ६-३-९४ । ९ २-१-१११ । १० २-४-४ ।

इति ङी रश्च न भवति, किन्तु नान्तत्वात् " स्त्रियां नृतो० " इत्यनेन । सदण्डिनीति-अत्रेनः कच् प्राप्तः, " सहात्तुल्ययोगे " इति निषिध्यते ।

' **मनः** ' । २ । ४ । १४ ॥ ङीर्न भवतीति-बहुव्रीहौ मन्नन्तेऽप्यन्नन्तद्वारा ङीर्भवत्येव । यथा ' दातुं प्रदानोचितभूरिधाम्नीं ' इति । अतिमहिमेत्यत्राऽतिक्रान्तो महिमा ययेति बहुव्रीहौ-" अनो वा " इत्यस्य " मनः " इत्यस्य च द्वयोरन्यत्र चरितार्थत्वात् परत्वात् प्राप्तमपि प्रतिषेधं बाधित्वा विशेषविहितत्वादनो वेति विकल्प एव । योगविभागादिति-न मन्तुपान्त्यवद्भ्यामित्येवंरूपात् ।

' **ताभ्यां वाप्डित्** ' । २ । ४ । १५ ॥ पूर्वाभ्यामिति-" मनः ", "नोपान्त्यवतः " इत्येताभ्याम् । " महत्त्वयोगाय महामहिम्नामाराधनीं तां नृपदेवतानाम् । दातुं प्रदानोचितभूरिधाम्नीमुपागतः सिद्धिमिवाऽस्मि विद्याम् " ॥ १ ॥ किरा० ३. श्लो. २३ । त्रैरूप्यमिति- " वा बहुव्रीहेः " इति वचनाद् वनन्तस्याऽपि त्रैरूप्यं तेन सुधीवे सुधीवानौ सुधीवर्यौ ।

' **अजादेः** ' । २ । ४ । १६ ॥ विपूर्वाल्लातेः क्ते विलातेति न्यासः । पूर्वापहाणेति-अपहीयतेऽस्यामनया वा "करणाऽऽधारे" अनट् । अपहानशब्दोऽपि टिद्द्वारेण ङीप्रत्ययाभावार्थमजादौ द्रष्टव्यस्तेन पूर्वा च साऽपहाना चेति आबन्तेन वाक्यं कार्यम् । क्रियाशब्दत्वाच्चेति "पूर्वपदस्था०" इति णत्वाभावः । <u>नामग्रहणे न तदन्तस्येति</u> न्यायादजाद्यन्तादापः प्राप्तिरेव नाऽस्ति किमावृत्तिव्याख्यानेनेत्याह-अत एव चेति ।

' **ऋचि पादः पात्पदे** ' । २ । ४ । १७ ॥ ननु ऋचि पादो वा क्रियताम् । ऋचि अभिधेयायां वाप् भवतीति सूत्रार्थः, न; विकल्पपक्षे ऋच्यभिधेयायामपि " वा पादः " इति ङीः स्यात् । " वा पादः " इति प्राप्तेऽयमारभ्यते ।

' **आत्** ' । २ । ४ । १८ ॥ ननु यासेत्यादीनामनेकलिङ्गानां यः स इत्यादावकारान्तप्रयोगदर्शनादकारान्तत्वनिर्णयादस्तु तत आप्, खट्वादीनां तु नित्यं स्त्रियां वर्तमानत्वादकारान्तप्रयोगादर्शनात्तदनिश्चयात् कथं तेभ्य आबित्याशङ्कयाऽऽह-खट्वादीनामिति । उपदेशाच्चेति-यद्यकारान्तो न स्यात्ततो नाऽऽबन्त इति तस्याऽऽब्द्वारेण ह्रस्वोऽपि न स्यादित्यर्थः । आदिति किमिति-अवर्णादिति क्रियतामित्यर्थः । सोमपा स्त्रीति सोमं पिबतीति विच्, आदितिवचनादत्राऽऽप्न भवति । ननु चाऽत्राऽऽभावा-

१ २-४-१ । २ ७-३-१७८ । ३ २-४-११ । ४ २-४-१३ । ५ २-४-५ । ६ ५-३-१२९ । ७ २-३-६४ । ८ २-४-६ ।

भावयोराकारश्रुतेस्तथैव विद्यमानत्वात् किं तदभावेन विनश्यतीति ? उच्यते—आपि सति "[1]दीर्घङ्याब्०" इति सेर्लोपः स्यात्तथा सोमपः कन्याः पश्येत्यत्र "[2]लुगातोऽनापः" इति शसि लुक् स्यात् ।

'गौरादिभ्यो मुख्यान्ङीः' । २ । ४ । ११ ॥ कवेः शिवेरपत्यं कुर्वादिदुनादीति ञ्ये-काव्य शैव्यस्ततो ङ्यां "[3]व्यञ्जनात्तद्धितस्य०" इति यलोपे भावे कावी शैवी । अनड्वाहीभार्य इति अत्राऽनड्वाहीशब्दो व्यक्तौ प्रवर्तितो जातिवाचित्वे तु "[4]स्वाङ्गाद् ङी०" इत्यनेनैव पुंवन्निषेधः सिद्धः । ननु तथापि पृथिवीशब्दस्याऽग्रहायणीशब्दस्य च स्वतः स्त्रीत्वा "[5]परतः स्त्री०" इति पुंवद्भावो न भविष्यति किमर्थमनयोस्तथा पाठः ? उच्यते—नहि सप्रत्ययपाठस्य पुंवद्भावप्रतिषेध एव प्रयोजनं किन्तु तद्धितलोपे लुगभावोऽपि । तत्र क्वचिद्द्वयं क्वचिद्देकं यथासम्भवमूहनीयं ।

'अणञेयेकण्नञ्स्नञ्टिताम्' । २ । ४ । २० ॥ काण्डान् लविष्यामीति काण्डलावी "[6]कर्मणोऽण्" पाणिनीयमिति—पणनं पणः "[7]पणेर्माने" अल् सोऽस्याऽस्ति पणी तस्याऽपत्यं वृद्धं "[8]ङसोऽपत्ये" अण् पाणिनस्याऽपत्यं युवा "[9]अत इञ्"। पाणिनिना प्रोक्तं "[10]तेन प्रोक्ते" इति विषये "[11]यूनि लुप्" इति इञो लुप्, अन्यथा "[12]वृद्धेऽञः" इति स्यात्ततो दोशीयः । बहुकुम्भकारा नगरीति—अत्र बहवः कुम्भकारा यस्यामिति कार्यम् । यदा तु बह्व्यः कुम्भकार्यो यस्यामिति क्रियते, तदा "[13]ऋन्नित्यदितः" इति कचि बहुकुम्भकारीकेति भवति ।

'वयस्यनन्त्ये' । २ । ४ । २१ ॥ द्विवर्षा इत्यादि—द्वे वर्षे भूता "[14]प्राणिनि भूते" इत्यः । उत्तानशयेति—उत्तानः शेते "[15]ऊर्ध्वादिभ्यः०" अः ।

'द्विगोः समाहारात्' । २ । ४ । २२ ॥ सम्यगाहरणमेकीकरणं समाहारः । समाहारद्विगुसंज्ञेति—समाहारविशेषितेन द्विगुना नाम विशिष्यते । अयमर्थः—समाहृतं विना पञ्च रात्रयः प्रिया अस्य पञ्चरात्रप्रिय इत्यादावपि ङीः स्यात् । ननु द्वन्द्वसमाहारस्य द्वन्द्वैकत्वेति नपुंसकत्वविधानेन स्त्रीत्वाभावात् समाहार इत्युक्तेऽपि द्विगोः समाहारादिति लप्स्यते किं द्विगुग्रहणेन ? अथोत्तरार्थमित्यपि न वाच्यम् । तद्धितलुकीति करणात्, नैवम्; समाहारादित्युक्तौ समाहारान्तात् नाम्न इत्याशङ्केत । ततश्च वाक्त्वचमतिक्रान्ता अतिवाक्त्वचीति स्यात् । इष्टं चाऽतिवाक्त्वचेति ।

---

१ १–४–४५ । २ २–१–१०७ । ३ २–४–८८ । ४ ३–२–५६ । ५ ३–२–४९ । ६ ५–१–७२ । ७ ५–३–३२ । ८ ६–१–२८ । ९ ६–१–३१ । १० ६–३–१८१ । ११ ६–१–१३७ । १२ ६–३–२८ । १३ ७–३–१७१ । १४ ६–४–११२ । १५ ५–१–१३६ ।

**'परिमाणात्तद्धितलुक्यबिस्ताचितकम्बल्यात्'** । २ । ४ । २३ ॥ परिच्छित्तिक्रियाकरणमात्रं परिमाणं नेह ग्राह्यं मानादित्यकरणादित्याह–तच्चेति । तदन्तादिति–अर्थे कार्यासम्भवात् । परिमाणवाची यः शब्दस्तदन्तादित्यर्थः । द्विशतेत्यादि–" शताद्यः " इत्यस्य विधानसामर्थ्यात् न लुप् तस्य च विकल्पेन प्रवृत्तेः पक्षे " संख्याडतेः० " इति कः, " अनाम्न्यद्विः प्लुप् " । द्विपण्येति–" पर्णपाद० " इत ये तस्य विधानसामर्थ्यादलुपि । ननु बिस्तादय उन्मानवचनास्तथाहि बिस्तशब्देन षष्टिः पलशतान्युच्यन्ते । आचितशब्देन तौलकम् । कम्बल्यशब्देनाऽप्यूर्णापलशतम् । तत्राऽपरिमाणाद् ङीप्रसङ्गाभावात् किं निषेधेन? नैवमनेकार्थानि हि नामानि भवन्ति, तत्र देशविशेषे परिमाणार्थान्यप्येतानि सन्ति, तदर्थं युज्यत एव निषेधः ।

**'काण्डात् प्रमाणादक्षेत्रे'** । २ । ४ । २४ ॥ क्षियन्ति निवसन्त्युप्तानि बीजानि वृद्धिं वा गच्छन्त्यस्मिन्निति " हुयामा० " इति त्रे क्षेत्रम् । षोडशहस्तप्रमाणं काण्डम् । भक्तिग्रहणं तद्धितार्थस्य स्त्रीत्वार्थम् । क्षेत्रसंज्ञिताभ्यामिति–यकाभ्यां काण्डाभ्यां क्षेत्रं परिच्छिन्नं ते काण्डे अपि क्षेत्रसंज्ञिते ।

**'पुरुषाद् वा'** । २ । ४ । २५ ॥ द्विपुरुषीति–मात्रटो " हस्तिपुरुषाद्वण् " इत्यणो वा " द्विगोः संशये च " इति लुप् ।

**'रेवतरोहिणाद् भे'** । २ । ४ । २६ ॥ रेवत्यां जाता रेवतीति अत्र वाच्या । ततो गौणोऽपि रेवतीशब्दो नक्षत्रे वर्तते । ननु गौरादिभ्य इत्यतो मुख्याधिकारे मुख्यादेव प्राप्नोति तत्कथमत्र गौणात्? उच्यते–मुख्याधिकारेऽपि क्वाऽपि शाब्द्या वृत्त्या क्वाप्यार्थ्या वृत्त्या प्राधान्यं ग्राह्यम् । अत्र तावदार्थ्या वृत्त्या प्राधान्यम् । नक्षत्रलक्षणोऽर्थो यदि वाच्यो न भवेत्, तदा कथं तद्विशिष्टः कालो वाच्यः स्यादमुना प्रकारेणेति । कथं रोहिणशब्दस्याऽनक्षत्रार्थाद् ङीर्न प्राप्नोतीत्या शङ्का । प्रकृत्यन्तरमिति–अर्थभेदात् प्रकृतिभेद इत्यर्थः ।

**'नीलात्प्राण्यौषध्योः'** । २ । ४ । २७ ॥ जातिशब्दादपि जातौ नित्यस्त्रीत्वाज्जातेरित्यप्राप्तेऽनेनैव ङीः । ये तु नीलः पट इत्यार्थान्तरेऽप्यर्थस्याऽपि दर्शनादनित्यं स्त्रीत्वमभ्युपगच्छन्ति, तेषां गुणशब्दस्यैवेदमुदाहरणम्, जातिशब्दात्तु " जाते० " इति ङीः सिद्ध एव ।

**'क्ताच्च नाम्नि वा'** । २ । ४ । २८ ॥ प्रवृद्धा चाऽसौ विलूना चेतीति–

१ ६–४–१४५ । २ ६–४–१३० । ३ ६–४–१४१ । ४ ६–४–१४८ । ५ उणा० ४५१ । ६ ७–१–१४१ । ७ ७–१–१४४ । ८ २–४–५४ ।

अर्थकथनमिदं प्रवृद्धश्चाऽसौ विलूनश्च स्त्रीचेदिति तु कार्यं, अन्यथा गौणत्वाभावाद् " गोश्चाऽन्ते० " इत्यप्रवृत्तौ विलूनशब्दस्याऽकारान्तस्याऽभावाद् ङीर्न स्यात् ।

**'केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजात्'** । २ । ४ । २९ ॥ केवलीति–केव्यते सेव्यते केवलिभिरिति " मृदिकन्दिकुण्डि० " इत्यलः । 5 मामकशब्दादिति–ननु कथं मामकग्रहणं नियमार्थं शोभनो मामकोऽस्याः सुमामकेत्यत्र तदन्तविधेरिष्टत्वाद्विध्यर्थताऽप्युपपद्यत एव । विधिनियमसम्भवे हि विधिरेव ज्यायस्त्वात् । सत्यामपि वा नियमार्थतायां विपरीतनियमः कस्मान्न भवति । मामकशब्दस्यैव नाम्नीति ? अत्रोच्यते–इह प्रकरणे तदन्तविधेरिष्टत्वेऽपि मुख्याधिकाराद-मुख्यमामकशब्दान्तान्न ङीः । केवलैरेव चैतैः संज्ञाप्रतीतिर्न त्वमुख्यतदन्तैः । अत 10 एव केवला एव केवलादय उदाहृता न कृतसमासा इत्युपपद्यत एव नियमार्थता । विपरीतनियमोऽपि न भवति । तथाहि–केवलादीनामपि संज्ञायां ङीर्निवर्तितः स्यात् । वचनारम्भसामर्थ्यात् संज्ञाऽपि बोध्यतेति तेषां वैषम्यं स्यात् । यथोक्तनियमे तु न किञ्चिन्नोपपद्यत इति । अपरीति–पिपर्तीत्यचि परस्तस्य समासेऽपरी । भेषजीति–'भेषृग्' भये, घञि भेषं जयति " क्वचित् " इति डे ।

15 **'भाजगोणनागस्थलकुण्डकालकुशकामुककटकबरात् पक्वावपनस्थूलाकृत्रिमामत्रकृष्णायसीरिरंसुश्रोणिकेशपाशे'** । २ । ४ । ३० ॥ कुण्डीति, इह कुण्डशब्दस्य ङीविधानं विस्पष्टार्थमेव । जातिवचनात् " जाते० " इत्यनेनैव सिद्धत्वात् । कुशान्येति–काष्ठमयी तदाऽऽकृतिर्वल्गावा । नागेति–न अगः "नखादयः" ।

**'नवा शोणादेः'** । २ । ४ । ३१ ॥ चण्डीति–कोपनायामने न विकल्पो गौर्यां 20 तु गौरादिपाठात् नित्यं ङीः । अरालशब्दो वक्रार्थोऽत्र द्रष्टव्यः, पक्षिविशेषे तु गौरादौ । भरोर्ऋषेर्जातो भरुज ऋषिविशेषो भरूजेति तु पाठान्तरम्, 'भृजैङ्' भर्जने, णिगन्तादचि । अत एव पाठाद् रेफात् परतो दीर्घ ऊकारागमे भरूजाः स्नेहभृष्टाः किल तण्डुलाः । वृत्रघ्नीति–केवलस्य हन्शब्दस्याऽप्रयोगात्तदन्तमुदाहरति ।

**'इतोऽक्त्यर्थात्'** । २ । ४ । ३२ ॥ अञ्चतेर्भार्या, अभेदोपचारेणाऽञ्चतीति 25 अग्निभार्या अप्राप्तमपि धवयोगात् स्त्रीत्वम् । अङ्कतिर्वायुर्ब्रह्माऽग्निस्तेषां भार्याऽभेदोपचारेण अङ्कती । कथमिति–अत्राऽपि क्तिप्रत्ययोऽस्तीत्याशङ्कार्थः । अन्येत्विति–पाणिनेः पूर्वे । 'ननु कृच्छेषा उणादय' इति न्यायात् कृदन्तेभ्यश्चेत्यनेनैवाऽञ्चति प्रभृती-

---

१ २-४-१६ । २ उणा. ४६५ । ३ ५-१-१७१ । ४ २-४-५४ । ५ ३-२-१२८ ।

नामुणादीनां ङीर्भविष्यति, किं तेषां पृथगुपादानेन ? सत्यम्, तन्मते उणादीनामश्व-तिप्रभृतिश्रोण्यन्तानामेव भवति; तेनाऽणीत्यदित्यादिषु ङीर्न भवति।

'पद्धतेः'। २। ४। ३३॥ पादाभ्यां हन्यते "श्वादिभ्यः", "हिमहति०" पदादेशः।

'शक्तेः शस्त्रे'। २। ४। ४। ३३॥ शक्तिशब्दस्य क्त्यन्तत्वादक्त्यर्थत्वादिति 5
प्रतिषेधे प्राप्ते शस्त्रवाचिनो विकल्प आरभ्यत एव।

'स्वरादुतो गुणादखरो'। २। ४। ३५॥ अर्थे कार्यासम्भवादुत इत्या-दिविशेषणायोगाच्चोपचाराद्गुणवचनः शब्दो गुण इत्युच्यते। स्त्रीत्वायोगादिति-उका-रान्तस्य पुंस्त्वविधानादित्यर्थः। यद्यपि महत्त्वरूपस्याऽऽकाशगुणस्याऽपैतीति विशेषणं
न घटते, तथाप्याम्रादिस्थितनीलादिगुणस्य घटमानकं सर्वस्याऽपि विशेषणं भवति; 10
यथा-कस्यचिद्गोश्चन्द्रक इति विशेषणं चिह्नं कृतं चन्द्रकोऽयं गौरिति, पश्चाद्गोस-मूहेऽपि चन्द्रकोऽयमित्युच्यते तथाऽत्राऽपि भविष्यति।

'श्यतैतहरितभरतरोहिताद् वर्णात्तो नश्च'। २। ४। ३६॥ वाऽधिकार-प्रधानत्वात् प्रत्ययविधिनैव सम्बध्यते।

'असहनञ्विद्यमानपूर्वपदात्स्वाङ्गादक्रोडादिभ्यः'। २। ४। ३८॥ 15
सहनञ्विद्यमानशब्दानां पूर्वपदरूपाणां वर्जनात् मध्यपदेन स्वाङ्गस्य व्यवधानेऽपि ङीप्रतिषेधो यथा विद्यमानं कल्याणं मुखं यस्याः सा विद्यमानकल्याणमुखेति।

'नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात्'। २। ४। ३९॥
सह नासिकेति-सहस्य सो विकल्पेन भवतीत्यत्र न।

'नखमुखादनाम्नि'। २। ४। ४०॥ संज्ञाशब्दा एते इति, न तु 20
योगिका इत्यर्थः।

'पुच्छात्'। २। ४। ४१॥ नासिकादिनियमात् निवृत्तौ वचनम्, यद्येवं नासिकादि सूत्र एव कुतो न पठ्यते ?, किमर्थं पृथगुद्दिश्यत इति ?; उच्यते-पुच्छादि-त्यस्यैवोत्तरत्राऽनुवृत्त्यर्थम्।

'कबरमणिविषशरादेः'। २। ४। ४२। "न सप्तमीन्द्वादिभ्यश्च" इत्य- 25
नेन मणिपुच्छीत्यादिषु मण्यादिशब्दानां पूर्वनिपातः।

---

१ ५-३-९२। २ ३-२-९६। ३ ३-१-१५५।

'**पक्षाच्चोपमादेः**' । २ । ४ । ४३ ॥ "कबरमणिविषशरादेः" पक्षाच्चोपमादेस्तु इत्येकयोगाकरणात् स्वाङ्गादिति निवृत्तम् । उलूकस्येव पक्षावस्या इति—अत्र उलूकशब्द उलूकपक्षे उलूकपुच्छे च वर्तते । यथोष्ट्रमुखे उष्ट्रशब्दः, अतश्चोलूकशब्द उपमानं भवतीत्युलूकः इव पक्षावस्या इत्यादिविग्रहः । उलूकस्येव पक्षावित्यादि त्वर्थकथनम् ।

5 '**क्रीतात्करणादेः**' । २ । ४ । ४४ ॥ केचित्त्विति—तन्मतेऽपि प्रत्ययोत्पत्तेः प्रागिति समासो बहुलाधिकाराल्लभ्यते । मन्मतेऽपि बहुलाधिकाराश्रयणात्तथैव ।

'**क्तादल्पे**' । २ । ४ । ४५ ॥ अभ्रविलिप्तीति—पूर्वपदस्य क्तान्तेन समासः । सूपविलिप्तीति—ङ्यन्तेऽल्पार्थस्य गम्यमानत्वादल्पशब्दस्याऽप्रयोगः ।

'**स्वाङ्गादेरकृतमितजातप्रतिपन्नाद् बहुव्रीहेः**' । २ । ४ । ४६ ॥ पूर्व-
10 वत्पारिभाषिकं स्वाङ्गम् । क्तान्ताद्बहुव्रीहेरिति—कृतादिवर्जितो यः क्तान्तोविशेषणमिति न्यायात् सोऽन्ते यस्य बहुव्रीहेः । हस्ताभ्यां पतितेति—कार्यमन्यथाऽदन्तत्वाभावेनैव ङीप्राप्तिर्नाऽस्ति ।

'**अनाच्छादजात्यादेर्नवा**' । २ । ४ । ४७ ॥ मासयातेत्यादिषु—माससंवत्सरशब्दयोः कालवचनत्वाद्बहुसुखदुःखानां च गुणवचनत्वान्नजस्त्वभाववचनत्वा-
15 दजात्यादेरिति व्यावृत्त्या निषिध्यते ।

'**पत्युर्नः**' । २ । ४ । ४८ ॥ पत्युरिति पञ्चम्यन्तमधिकृतस्य बहुव्रीहेर्विशेषणं तेन च तदन्तविधिरित्याह—पत्यन्तादिति । बहुस्थूलपतिः पुरीति—स्थूलाः पतयो यासां ताः स्थूलपतय इति कृते पत्युर्न इति न विकल्पनाद्बहवः स्थूलपतयो यस्याम् । मुख्यो न भवतीति—द्वितीयेन बहुव्रीहिणा बाधितत्वात् । पत्यन्तो न भवतीति—किं
20 तर्हि ? स्थूलपत्यन्तः ।

'**सादेः**' । २ । ४ । ४९ ॥ सह विद्यमानवचनो, न तु तुल्ययोगवचनः सपत्न्यादाविति निर्देशात् । तुल्ययोगे हि पूर्वेण शब्देन सह पतिशब्दस्य नकारो न भवति सूत्रार्थे सपत्नीति निर्देशो न स्यात् । ननु सादेः पत्युर्न इत्येकयोगो विधीयतां सादित्वेन बहुव्रीहावपि अन्यस्मिन् वा भविष्यति ? नैवम्, मुख्यादित्यधिकारात्
25 सादावेव स्यान्न तु बहुव्रीहौ । पृथग्योगे तु पूर्वसूत्रे मुख्यादिति बहुव्रीहिसमासस्यैव विशेषणं न पत्युः ।

'**सपत्न्यादौ**' । २ । ४ । ५० ॥ समाधार्थमिति—धर्मादिषु पत्नीशब्दस्याऽ-

---

१ २-४-४२ ।

पाठादित्यर्थः । पुंवद्भावप्रतिषेधार्थं चेति-" परतः स्त्री० " इति " जातिश्च णि० " इति च प्राप्तस्य ।

'पाणिगृहीतीति' । २ । ४ । ५१ ॥ पाणिगृहीतीति-इति-प्रकारो येषां ते तथा जस् सूत्रत्वात् लुप् ।

'पतिवत्न्यन्तर्वत्न्यौ भार्यागर्भिण्योः' । २ । ४ । ५३ ॥ अधिकरणप्रधानादपीति-"तदस्याऽस्त्यस्मिन्०" इत्यत्र तदिति प्रथमान्ताद्विहितत्वेनाऽप्राप्त इत्यर्थः । 5

'जातेरयान्तनित्यस्त्रीशूद्रात्' । २ । ४ । ५४ ॥ जातिः सामान्यमभिन्नबुद्धिध्वनिप्रसवनिबन्धनमर्थस्तत्र च कार्यासम्भवात्तद्वाचिनो ग्रहणमित्याह-जातिवाचिन इति । सकृदुपदेशव्यङ्ग्यत्वे इति-उभयोरपि सम्बध्यते । पात्रीति-अव्युत्पन्नोऽयं " हुयामा० " इति त्रप्रत्ययान्तो वा । त्रडन्तस्य तु टिद्द्वारा ङीः सिद्ध एव । ब्राह्मणीति-अयमप्यव्युत्पन्नः विकणेति निपातो वा । ब्रह्म अणति कर्मणोऽणि पृषोदरादिनिपाते, अपत्याणि वाऽणन्तत्वाद् ङीः सिद्ध एव । बह्वृचीति-" नाऽप्रियादौ " इत्यनेन न पुंवन्निषेधः । तत्र पूरण्यन्तस्य ग्रहणात् । यद्यपि कठादयोऽपि ब्राह्मणविशेषास्तथापि कठादीनामत्रिलिङ्गत्वं न, यथा कठेन प्रोक्तं वेत्त्यधीते वा कठं ब्राह्मणकुलमिति तुर्यं जातिलक्षणं विधेयमेव । कुटीति-मतान्तरेण कुटीशब्दस्य नित्यस्त्रीत्वं स्वमते तु ' गृहे कुट ' इति लक्षणेन पुंस्त्रीत्वमिति, मतान्तरेणेदं दर्शितम् । कथं सुपर्णीति-सुपर्णशब्दस्यैव जातित्वं तस्य च कृते समासे मुख्यत्वमित्यभिप्रायः । 10 15

' पाककर्णपर्णवालान्तात् ' । २ । ४ । ५५ ॥ आखुकर्णीति-आखोः कर्ण इव कर्णपत्रं यस्याः । ' सल ' गतौ सल्यत इति घञि सालो दन्त्यादिः ।

' असम्भस्त्राजिनैकशणपिण्डात् फलात् ' । २ । ४ । ५७ ॥ पिण्डफलेति-पिण्डाकाराणि फलान्यस्याः, पिण्डफला कटुतुम्बी । यन्निघण्टुः-" कटुकालाबुती तुम्बी, लम्बा पिण्डफला तथा । " 20

' धवाद्योगादपालकान्तात् ' । २ । ४ । ५९ ॥ सम्बन्धादिति-सम्बन्धश्च सम्बन्धिनमपेक्षते, स च प्रत्यासन्नत्वाद्धवस्यैव विज्ञायते, तेन धवेन स्त्रियाः सम्बन्धादित्यर्थः । कौमारीति-कुमार्येव प्रतीयते । योगात् सोऽयमिति-अत्र सोऽयमित्यभिसम्बन्धेन वृत्तिर्वेदितव्या । न ह्ययमेवाऽभिसम्बन्धस्तस्येदमिति, किन्तु सोऽयमित्यपि। 25

---

१ ३-२-४९ । २ ३-२-५१ । ३ ७-२-१ । ४ उणा० ४५१ । ५ ३-२-५३ । ६ लिङ्गा० स्त्रीपुंस प्रक० श्लो. २ ।

अभेदाच्च भेदस्य निवृत्तत्वात् तद्धितानुपपत्तिः । व्यतिरेकविवक्षेति–प्रष्ठस्येयमिति भेदविवक्षेत्यर्थः ।

'पूतक्रतुवृषाकप्यग्निकुसीतकुसीदादै च' । २ । ४ । ६० ॥ ननु कुसिदादै चेति–पञ्चमीनिर्देशादैकारः प्रत्यय एव विज्ञायते । ततश्च ङीः, ऐकारश्चप्रत्ययौ

5 भवत इति सूत्रार्थः कथं न लभ्यते ?, कथमुक्तमैकारश्चाऽन्तादेश इति ?, नैष दोषः; "एयेऽग्नायी" इति निर्देशात् । न ह्यैकारस्य प्रत्ययत्वेऽग्नायीति भवति । वृषो धर्मः कपिर्वरा हस्ताद्रूप्यात् पृषोदरादित्वाद्दीर्घे वृषाकपिः । वृषं दानवमाकम्पितवान् वा, "अंभिकुण्ठि०"[1] इति इः ।

'मनोरौ च वा' । २ । ४ । ६१ । प्रत्ययसंनियोगार्थश्चकारोऽनुवर्तते । वा

10 शब्दः प्रथमं विधेयतया प्रधानेन ङीप्रत्ययेन सम्बध्यते, न त्वौकारेण तत्संनियोगविधानेनाऽप्रधानत्वादिति ।

'वरुणेन्द्ररुद्रभवशर्वमृडादान् चान्तः' । २ । ४ । ६२ ॥ आनन्त आगमो भवतीति–आनितिदीर्घोच्चारणं मतसङ्ग्रहार्थम् । अन्तग्रहणाभावे तु आनपि भिन्नप्रत्ययः स्यात् । किञ्चाऽन्तग्रहणाभावे "अनेकवर्णः सर्वस्य"[3] इति स्यात् ।

15 'सूर्याद्देवतायां वा' । २ । ४ । ६४ ॥ सूर्यस्याऽऽदित्यस्येति–यथा कुन्ती ।

'यवयवनारण्यहिमाद्दोषलिप्युरुमहत्त्वे' । २ । ४ । ६५ ॥ यौतेरचि यवः नन्द्यादित्वादने च यवनः । धवाद्योगादिति च निवृत्तमिति–दोषाद्यर्थविशेषोपादानादिति शेषः, उरुमहत्त्वयोरेकार्थत्वेऽपि पृथगुपादानं यथासंख्यार्थम् । अण् न भवतीति–तद्विषये ङीविधानादित्यर्थः ।

20 'यञो डायन् च वा' । २ । ४ । ६७ ॥ डायन् चेत्यत्र ङित्करणमासुरायणीत्यत्र प्रयोजनार्थम् । डायन् चान्तो वा भवतीति–साक्षान्निर्दिष्टस्य डायन एव वाशब्देन सम्बन्धो नानुमितेन ङीप्रत्ययेन प्रत्यासत्तेः । षावटाद्वेति सूत्रकरणाद् वा ।

'लोहितादिशकलान्तात्' । २ । ४ । ६८ ॥ कायतेः "पुंषिरञ्जि०"[4] इति क्रित्यत आकारलोपे च कतः ।

25 'षावटाद्वा' । २ । ४ । ६९ ॥ अत्र ङीडायनोरुभयोरनुवर्तनात् प्राधान्याद् ङीप्रत्ययेनैव वाशब्दस्य सम्बन्धो नाऽन्वाचीयमानेन डायनेत्याह–स्त्रियां वा ङीर्भवति ।

---

१ ३–२–५२ । २ उणा० ६१४ । ३ ७–४–१०७ । ४ उणा० २०८ ।

'**कौरव्यमाण्डूकासुरेः**' । २ । ४ । ७० ॥ कौरव्यायणीति-यदा कुरोर्ब्राह्मणस्याऽपत्यं तदा "कुर्वादे[1]र्ञ्यः"। यदा तु कुरो राज्ञोऽपत्यं तदा "दु[2]नादि०" इत्यनेन। अयं चाऽनयोर्विशेषः दुनादीत्यस्य द्रिसंज्ञत्वाद्बहुषु लुब्भवति। मण्डूकस्याऽपत्यं "पीला[3]साल्वा०" इत्यण्। असुरस्य ऋषेरपत्यं स्त्री बाह्वादीञ्।

'**इञ इतः**'। २ । ४ । ७१ ॥ पूर्वसूत्रे आसुरिग्रहणात्। डायन्नाऽनुवर्तते, अन्यथेञन्तद्वारेण सिद्धम्।

'**नुर्जातेः**' । २ । ४ । ७२ ॥ अवन्ती, कुन्ती-"दु[2]नादि०" इति ञ्यः। "कु[4]न्त्यवन्तेः०" इति लुप्। तैकायनी-"तिका[5]देरायनिञ्"। ग्लुचुकायनी- "अ[6]दोरायनिः०" तस्य लोपे इति-"राष्ट्र[7]क्षत्रियात्०" इति विहितस्य "द्रेर[8]ञणः०" इत्यनेनेत्यर्थः। एवं दरदिति-"पुरु[9]मगध०" इति विहितस्याऽण एवं चाऽस्य गोत्रं च चरणैः सहेति जातित्वम्। यद्वा मनुष्यपर्यायत्वात् स्वयमेव जातित्वम्। अवन्तीः स्त्रीति-अवन्तेरपत्यं बहवो माणवकाः "दु[2]नादि०" इति ञ्यः। "ब[10]हुष्व०" इति लुप्। अवन्तीनिच्छति या स्त्री क्यन्। अवन्तेरपत्यं या स्त्रीति तु कृते दुनादिञ्यस्य "कु[4]न्त्यवन्तेः" इत्यनेन लुपि क्यनः प्रागेव ङीः स्यात्।

'**उतोऽप्राणिनश्चायुरज्ज्वादिभ्य ऊङ्**'। २ । ४ । ७३ ॥ ऊङिति दीर्घनिर्देश उत्तरार्थस्तेन "नारीसखी०" इत्यत्र श्वश्रूरिति दीर्घो निपातः सिद्धः। तत्र बहुलाधिकारादिति-समासप्रकरणे इत्यर्थः। यद्वा ऊश्चाऽसावूङ् चेति द्विर्विधानात् कैयटमतम्।

'**उपमानसहितसंहितसहशफवामलक्ष्मणाद्यूरोः**' । २ । ४ । ७५ ॥ लक्ष्मणाद्यूरोरिति कृते सहिता ऊरुः, हे संहित ऊरुर्वर्त्तते इत्यादावपि स्यात्। आदिशब्दः पूर्वावयववचनस्तेन च समासलाभादूरोरुत्तरपदत्वं गम्यते, अत आह-उपमानादिपूर्वपदादिति-कथमिति? यद्यत्राऽऽदिग्रहणमकृत्वाऽन्तग्रहणं क्रियेत। तदा ऊर्वन्तादिति विज्ञायमानेऽत्राऽप्यूङ् प्रसज्येत। अस्ति ह्यत्रोपमानात् परोऽयमूर्वन्तः स्वाम्यूरुशब्दः। हस्तिन इवेत्यादि-यथा हस्तिनः सम्बन्धित्वेन स्वाम्यूरू आयातस्तथा वडवाया अपि। एतावतोच्चैस्त्वं वडवाया निवेदितम्।

'**नारीसखीपङ्गूश्वश्रू**' । २ । ४ । ७६ ॥ पङ्गुशब्दादजातावूङिति-

---

१ ६-१-१०० । २ ६-१-११८ । ३ ६-१-६८ । ४ ६-१-१२१ । ५ ६-१-१०७ । ६ ६-१-११३ । ७ ६-१-११४ । ८ ६-१-१२३ । ९ ६-१-११६ । १० ६-१-१२४ ।

यद्यप्ययं गुणवचनस्तथापि नाऽत्रैकवर्णव्यवहितः स्वरात् पर उकार इति "स्वरादुतो०" इत्यमनुष्यजातित्वादप्राणिजातित्वाभावाच्च "उतोऽप्राणिन०" इति चाऽप्राप्तेऽन्नेनोङ् । यदा श्वशुरशब्दः संज्ञाशब्दस्तदाऽऽपि श्वशुरा इत्येव भवति ।

'यूनस्तिः'। २। ४। ७७॥ युवतिरित्यत्र ङीरिति 'जातिग्रहणे सकृद्बाधित'
5 इति न्यायात् पश्चात् "ईतोऽक्त्यर्थात्" इत्यपि न ।

**'अनार्षे वृद्धेऽणिञो बहुस्वरगुरूपान्त्यस्यान्त्यस्य ष्यः'। २। ४। ७८॥** अन्तस्य ष्य इति—अणन्तमिञन्तं च बहुस्वरं नाम निर्दिष्टमिति निर्दिश्यमानानामिति न्यायेन सकलस्याऽप्यादेशे प्राप्तेऽन्तग्रहणं, उत्तरार्थं च तेन "भोजसूतयोः०" इत्यत्र- "अनेकवर्णः सर्वस्य" इति न्यायात् न सर्वयोर्भोजसूतयोः ष्यादेशः । दैवदत्त्येति—शब्द-
10 शक्तिस्वाभाव्यात् ष्यादेश आबन्तसहित एव स्त्रीलिङ्गमभिव्यनक्ति। एवं कारिषगन्ध्ये- त्यपि । कान्यकुब्जीत्यत्र—कन्या कुब्जा यत्रेति "ङ्यापो बहुलं०" इति ह्रस्वः । यद्वा कन्याशब्दं केचित्परतः स्त्रीलिङ्गं मन्यन्ते । आर्तभागीति—ननु च ऋषिवचन एवाऽय- मृतभागशब्दस्तत्राऽनार्षत्वमपि नाऽस्तीति व्यङ्गविकलत्वम्, सत्यम्; शास्त्रेऽस्मिन् प्रदेशान्तरेऽपि ऋषिश्रुत्या विहित "ऋषिवृष्ण्यन्धक०" इति प्रत्यय आर्ष इति रूढः ।
15 अयं तु बिदादिभ्य इत्येवं विहितत्वादनार्ष इति प्रत्युदाह्रियते । बहुकारिषगन्धा निर्वाराहिरित्यत्राऽणिञन्तस्य स्त्रीवृत्तित्वेऽपि मुख्याधिकारात्तस्याऽन्यपदार्थे गुणीभूत- त्वेन मुख्यत्वाभावान्न भवति । नन्वेते ङ्याब्रादयः स्त्रीप्रत्ययाः स्त्रीत्वस्य द्योतका न तु वाचकास्तत्र यथा विद्युदादयः शब्दाः स्त्रीप्रत्ययमन्तरेण स्वमहिम्नैव स्त्रीत्वं प्रति- पादयन्ति, तथा खट्वादयोऽपि प्रतिपादयिष्यन्ति; किमेभ्यः स्त्रीप्रत्ययविधानतः ?
20 उच्यते—विचित्रशक्तयो हि भावा भवन्ति । तत्र यथा घनतरतिमिरनिकरनिरुद्धपदार्थ- सार्थेऽपि निशीथे गगनतलप्रसृमरांशुरचिरांशुरितरनिरपेक्षयैवाऽऽत्मानं प्रकाशयति । न चैवं स्तम्भादयस्तेऽपि चाऽस्मदादीनां प्रदीपादिप्रकाशकसव्यपेक्षा आत्मानं प्रका- शयन्त्येव । संश्लिष्टानां तु प्रदीपादिनिरपेक्षा एव । यथा वा सूर्योपलश्चण्डच- ण्डांशुकरनिकरसम्पर्कसमासादितमाहात्म्यः स्वयं शीतोऽपि सान्तरमधःस्थितं दाह्यं
25 दहति न तु प्रत्यासन्नं प्रत्युत तत्र शैत्यमुपदर्शयति । तथा शब्दा अपि शक्ति- वैचित्र्यात् क्वचित्पदत्वेन पदान्तरसापेक्षया पदान्तरानपेक्षेण च स्त्रीत्वं प्रतिपाद- यन्ति । तत्र पदान्तरसापेक्षेण यथेयं गौरित्यादि । अत्र गवाद्यर्थस्योभयलिङ्ग- त्वादियमिति पदान्तरापेक्षेण गवादिशब्देन स्त्रीत्वं प्रतिपाद्यते । तस्य स्त्रीत्वाप्रति- पादने इयमिति न स्यात् । पदान्तरानपेक्षेण नाममात्रेणाऽऽदेशप्रत्ययाभ्यां च ।

---

१ २-४-३५ । २ २-४-७३ । ३ २-४-३२ । ४ २-४-८१ । ५ २-४-९९ । ६ ६-१-६१ ।

तत्र नाममात्रेण यथा स्वसादुहितेत्यादयः । अत्र नाममात्रमेव स्त्रीत्वप्रतिपत्तौ समर्थमिति स्त्रीप्रत्ययाभावः । आदेशेन सप्रत्ययेनाऽप्रत्ययेन च, सप्रत्ययेन क्रोष्ट्री कारिषगन्ध्येति; अप्रत्ययेन तिस्रश्चतस्र इति, प्रत्ययेनैकेनाऽनेकेन च, तत्रैकेन राज्ञी खट्वेति, अनेकेन सान्तरेण निरन्तरेण सान्तरनिरन्तरेण च, सान्तरेण कालितरा हरिणितरेति, निरन्तरेण आर्याणी भवानी, सान्तरनिरन्तरेण आर्याणितरा भवानितरेति । 5
तदेवमनेकप्रकारायां लिङ्गप्रतिपत्तौ नैकः प्रकारः शक्यो नियन्तुम् । शब्दशक्तिस्वाभाव्यात् ।

'कुलाख्यानाम्' । २ । ४ । ७९ ॥ गौरादित्वात्तु भोरिकी–भौलिकी । अयमर्थः–प्रथममनेन प्राप्तावस्य बाधनार्थं गौरादौ पाठः । ततस्तत्र पाठाद् ङीरेव केवलो मा भूदिति क्रौड्यादौ पाठः । 10

'भोजसूतयोः क्षत्रियायुवत्योः' । २ । ४ । ८१ ॥ जातेरिति ङीप्रत्ययापवादोऽनेन ष्यादेशः ।

'दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धेर्वा' । २ । ४ । ८२ ॥ दैवयज्ञ्येति, देव एव यज्ञः पूजनीयो यस्य स तथा । सात्यमुग्र्येति सत्यमुग्रं यस्याऽसौ सत्यमुग्रः अत एव निर्देशात् मोन्तः । मान्तमव्ययं वा । सत्यमुचं रातीति वा डे । 15
काण्ठेविद्ध्येति–यदा कण्ठे विध्यते स तदा "[1]तत्पुरुषे कृति" इत्यलुप् । यदा तु कण्ठे विद्धमनेन तदा "[2]अमूर्धमस्तकात्०" इत्यलुप् ।

'ष्यापुत्रपत्योः केवलयोरीच् तत्पुरुषे' । २ । ४ । ८३ ॥ ष्याशब्दाद्दीर्घङ्याप् सूत्रत्वाद्वा सेर्लुप् । पुत्रपत्योरित्यत्र सौत्रनिर्देशात् "[3]लघ्वक्षरा०" इति पतिशब्दस्य न पूर्वनिपातः । 20

'अस्य ङ्यां लुक्' । २ । ४ । ८६ ॥ ईजधिकारे समानदीर्घत्वेनैव प्रयोगजातं सेत्स्यति किं लुग्ग्रहणेन ? सत्यम्, यदा पञ्चभिः क्रीत इति इकणो लुपि 'उभयोः स्थाने' इति न्यायादीचोऽपि ङीव्यपदेशे ङीनिवृत्तौ व्यञ्जनान्तता ईजूव्यपदेशे त्वीकारान्तता मा भूदिति लुग्ग्रहणम् ।

'मत्स्यस्य यः' । २ । ४ । ८७ ॥ मत्सीति–ननु ङ्यामिति–"सप्तम्या निर्दिष्टे 25
पूर्वस्य" तच्चानन्तरस्येति न्यायात् मत्सीत्यत्र "[4]स्वरस्य परे प्राग्विधौ" इत्यकारलुचः स्थानिवद्भावाद् ङ्यां निमित्ते यकारासम्भवात् कथं लुगिति ? नैवम्, वचनादेकेन

---

१ ३-२-२० । २ ३-२-२२ । ३ ३-१-१६० । ४ ७-४-११० ।

वर्णेन व्यवधानमाश्रीयते । ननु भवत्वेवं परं मत्स्यस्येयं "तस्येदम्" इत्यणि मत्स्याकारलोपेऽणन्तत्वाद् ङ्यामस्य ङ्यामित्यणोऽकारलोपे द्वयोरकारयोः स्थानिवद्भावात् मात्सीत्यत्र यलुग् न प्राप्नोति, नैवम्; "न सन्धि०" इति स्थानिवद्भावप्रतिषेधात्, प्रथमपक्षे तु "न सन्धि०" इत्यस्य चिन्ताऽपि न कृता । उत्तरान्तरेणैव सिद्धत्वात् ।

5 'व्यञ्जनात्तद्धितस्य' । २ । ४ । ८८ ॥ तद्धितस्येत्यत्र–तद्धितसम्बन्धिनो यकारस्येति वैयधिकरण्ये षष्ठी । यकारस्य किंविशिष्टस्य तद्धितस्य ? तद्धितरूपस्येति तु सामानाधिकरण्ये सामिधेनीत्यादौ न स्यात् । औचितीति–उचच् समवाये उच्यति समवैति प्रकृतैः स्वभावैः "पुंषिहृषि०" इति किदितः । वैश्यीति–येषां मते विशोऽपत्यमिति वैश्यः शब्दः साध्यते, तन्मते–यलोपः प्राप्नोत्येव ।

10 'आपत्यस्य क्यच्व्योः' । २ । ४ । ९१ ॥ अपत्ये भव आपत्यस्तस्य स्थानसम्बन्धिषष्ठी । गार्गीयतीति–'येन नाऽव्यवधानमिति' न्यायादीकाराऽकारादिना व्यवहितस्याऽपि यस्य लुक् । गार्गायते इति–यदा गार्ग्य इवाऽऽचरति कर्तुः क्विपि तल्लुपि ते प्रत्यये "क्यः शिति" इति क्य आनीयते तदाऽनेन यलोपो न भवति । च्वि साहचर्यात्, यतश्च्विर्नाम्न एव सम्भवति ततः क्योऽपि नाम्न एव परतो विहितो 15 गृह्यतेऽयं तु नामधातोरिति ।

'तद्धितयस्वरेऽनाति' । २ । ४ । ९२ ॥ गार्गकमिति–गर्गस्याऽपत्यानि यञ् तस्य च "न प्राग्जितीये०" इत्यनेन निषेधाद् "यञञोऽश्यापर्णान्त०" इति न लुप् । ततो गर्गाणां समूहो गार्गकं गोत्रोक्षाकञ् । गार्गीय इति–गार्ग्यस्याऽयं शिष्यश्चेदन्यथा "गोत्रादद्दण्ड०" इत्यकञ् स्यात् ।

20 'बिल्वकीयादेरीयस्य' । २ । ४ । ९३ ॥ ननु बिल्वकीयादयो द्विधा केचिन्नडादेः कीये सति, अपरे कुत्सिताद्यर्थकप्रत्ययान्तादीये सति तत्केषामिह ग्रहणं ? उच्यते–आदिशब्दस्य व्यवस्थावाचित्वादित्याह–नडादिष्वित्यादि । बिल्वा वेणवो वेत्राणि वेतसास्त्रयस्तक्षाण इक्षवः काष्ठानि कपोताः क्रुञ्चाः सन्त्यस्यामिति विग्रहे नडादेः कीयः । "आत्" इत्याप् ततो भवार्थेऽण् । काष्ठकीया इत्यत्र तु काष्ठकीयशब्दः 25 कच्छादौ द्रष्टव्यः, ततः कच्छादिपाठात् कोपान्त्याच्चाऽण्; अन्यथा "दोरीयः" स्यात् । क्रौञ्चका इति–क्रुञ्चाशब्दस्य कीये नडादिपाठाद् ह्रस्वः । क्रुञ्चकीयायां भवाः । नन्वत्र ईयग्रहणं किमर्थं बिल्वकीयादेरित्येव क्रियतामेवमपि कृते बैल्वका इत्यादीन्यपि

---

१ ६-३-१६० । २ ७-४-१११ । ३ उणा० ६३६ । ४ ३-४-७० । ५ ६-१-१३५ । ६ ६-१-१२६ । ७ ६-३-१६९ । ८ २-४-१८ । ९ ६-३-३२ ।

" अवर्णेवर्णस्य " इति ईयाऽकारलोपे ततो बिल्वकीयादेरित्यनेनाऽधिकारायातस्य य-कारमात्रस्य लोपे पुनः " अवर्णेवर्णस्य " इति ईकारलोपे बिल्वकीयादेरित्यनेन यकारलोपे कर्तव्ये " स्वरस्य० " इति परिभाषयाऽकारलोपस्य स्थानित्वम् । " न सन्धि० " इति यविधौ स्थानित्वनिरासात् ? सत्यम्, यविधौ स्थानित्वनिषेधेऽपि ईकारलोपे स्थानित्वमस्त्येवेति ईयग्रहणम् । ननु तर्हि बिल्वकीयादेर्यस्येति क्रियताम् ? एवं कृते य-काराधिकारे पुनर्यत् ग्रहणं करोति तदेवं ज्ञापयत्यत्र सस्वरस्यैव यस्य लुक्, सस्वरय-लोपे च स्वरव्यञ्जनसमुदायत्वात् " स्वरस्य० " इति स्थानित्वाभावे सर्वं भविष्यति, सत्यम्; एवं कृते एषाऽप्याशङ्का स्यादनेन यकारलोपे ईकारस्य लुग्भवतीति । यदी-कारलोपोऽपि सम्मतः स्यात्तदा ईयस्येति कुर्यादिति ।

' ङ्यादेर्गौणस्याक्विपस्तद्धितलुक्यगोणीसूच्योः ' । २ । ४ । ९५ ॥ लुगिति-लुप एवोपलक्षणं तेनाऽगोमती गोमतीभूता गोमतीभूतेत्यत्र च्वेरभावेऽपि लुबभावात् ङीनिवृत्तेरभावः ।

' गोश्चाऽन्ते ह्रस्वोऽनंशिसमासेयो बहुव्रीहौ ' । २ । ४ । ९६ ॥ अंशिसमासवर्जनात् समासस्याऽन्त एव ह्रस्वः । नन्वर्धपिप्पलीति-अनंशिसमासेयो बहुव्रीहाविति व्यावृत्तौ किमिति दर्शितम् । यतो ह्रस्वत्वे कृतेऽपि 'परलिङ्गो द्वन्द्वोऽशीति' वचनात् पिप्पलीलिङ्गे "इतोऽक्त्यर्थात्०" इति ङ्यां रूपं तथैव, सत्यम्; इतोऽक्त्यर्था-दिति वैकल्पिको ङीः ततोऽर्धपिप्पलिरर्धपिप्पलीति रूपद्वयं स्यादिष्यते चाऽर्धपिप्पली-त्येव । ननु तर्हि तुर्यभिक्षेति किमर्थं दर्शितम् ? यतोऽत्राऽपि 'परलिङ्गो द्वन्द्वोऽशीति' वचनात् भिक्षेत्युत्तरपदस्य स्त्रीत्वे ह्रस्वत्वे कृतेऽपि पुनरापि सति तुर्यभिक्षामतिक्रान्तो यः सोऽतितुर्यभिक्ष इति । पूर्वपदार्थप्रधानत्वादंशिसमासस्य " गौणो ङ्यादिः " इति न्यायोपढौकनात् " गोश्चाऽन्ते० " इति ह्रस्वत्वं स्यादतितुर्यभिक्षा इति च साधुः ।

' क्लीबे ' । २ । ४ । ९७ ॥ काण्डे कुड्ये इति-नन्वत्र पदं वाक्यमव्ययं चेति वचनादलिङ्गत्वे ह्रस्वत्वप्राप्तिरेव नाऽस्ति तत्कथमुक्तमसिद्धत्वादिति ? सत्यम्, पद-स्याऽलिङ्गत्वेऽपि काण्डकुड्ययोरवयवयोर्यल्लिङ्गं तद्यदा समुदाये काण्डेकुड्ये इत्येवं रूपे उपचर्यते तदा प्राप्तिः । यद्वा काण्डेकुड्ये इत्यत्र योऽस्य स्थाने परेणेका-रेण सह एकारः स क्वचिन्नपुंसकाकारसम्बन्धी क्वचित्पदसम्बन्धी कथ्यते-'उभयोः स्थाने' निष्पन्नत्वात् ।

' वेदूतोऽनव्ययय्वृदीच्ङीयुवः पदे ' । २ । ४ । ९८ ॥ इन्द्रहूपुत्र इति-

१ ७-४-६८ । २ ७-४-११० । ३ ७-४-१११ । ४ २-४-३२ । ५ ७-४-११६ । ६ २-४-१६ ।

इन्द्रं ह्वयति "[1]असरूपोऽपवादे०" इत्यणपवादे क्विपि "[2]यजादिवचेः०" इति य्वृति "[3]दीर्घमेवोऽन्त्यम्" इन्द्रहूः पुत्रः । शकहू इति–शकस्याऽपत्यानि "[4]पुरुमगध०" इत्यण् "[5]शकादिभ्यो द्रेर्लुप्" शकान् ह्वयति, शेषं पूर्ववत् । वृषलीभूतमिति–अवृषलं वृषलं भूतं मतान्तरेणेदं वाक्यम्, अन्यथा अत्रिलिङ्गत्वान्न प्राप्नोति । अत्रिलिङ्गान्या इति च
5 जातिलक्षणे लिखितत्वादस्याऽत्रिलिङ्गत्वम् ।

'ङ्यापो बहुलं नाम्नि' । २ । ४ । ९९ ॥ ङीसाहचर्यादापः प्रत्ययस्य ग्रहणं न तु क्विबन्तस्याऽऽप्नोतेरित्याह–आबन्तस्य चेति–नन्देः "[6]पदिपठि०" इति इः । बाहुलकाद्दीर्घे नान्दी तस्या मुखम् । विष्टापुरमिति–विशं तायते क्विपि, "[7]य्वोः प्वय्व्यञ्जनेलुक्" पृषोदरादित्वात् डत्वाभावे विष्टा त्रिष्टः पूः "[8]ऋक्पूः०" अत्समासन्तः ।

10 'भ्रुवोऽच्च कुंसकुट्योः' । २ । ४ । १०१ ॥ भ्रूकुंसभ्रूकुटिशब्दावपि नारायणकण्ठी ।

'मालेषीकेष्टकस्यान्तेऽपि भारितूलचिते' । २ । ४ । १०२ ॥ मालादिभिः प्रकृतस्य नाम्नो विशेषणात्तदन्तलाभात् केवलस्य व्यपदेशिवद्भावात् ह्रस्वसिद्धौ किमर्थमन्तग्रहणमित्याशङ्कायामाह–इदमेवेति ।

15 'गोण्या मेये' । २ । ४ । १०३ ॥ विनैव तद्धितेन गोणीशब्दो गोणीप्रमितेऽर्थे व्रीह्यादावुपचाराद्वर्तते, यथा प्रस्थप्रमिते प्रस्थ इति । तस्य ह्रस्व इत्यर्थः । सत्यामपि वा तद्धितलुचि अगोणीसूच्योरिति प्रतिषेधे "[9]गोश्चाऽन्ते०" इति च समासे ह्रस्वस्य विज्ञानादिह ह्रस्वो नाऽस्तीति तदर्थमिदमारभ्यते ।

'ङ्यादीदूतः के' । २ । ४ । १०४ ॥ सोमपिकेत्यादौ ह्रस्वस्य दारादिकेत्यादौ
20 च पिति पुंवद्भावस्य सावकाशत्वात् पट्विकेत्यादौ चोभयप्राप्तौ परत्वात् पुंवद्भावे पट्विकेत्यादि न सिध्यतीत्याह–ङीग्रहणमित्यादि । ङीग्रहणमनवकाशत्वात् पुंवद्भावं बाधत इत्यर्थः । प्रत्ययाप्रत्यययोरिति न्यायान्न भवतीति–ककतेरचि पृषोदरादित्वादात्वं, पचनं पाको घञि "[10]क्तेऽनिट०" इति कत्वम् । अथ कायतेः पिबतेश्च "[11]भीण् शलिवलि०" इति, यदा कस्तदा ह्रस्वः कस्मान्न भवति ? उच्यते–उणादीनामव्युत्पन्नत्वाद्, व्युत्प-
25 त्तिपक्षे तु बहुलवचनान्न भवति ।

'न कचि' । २ । ४ । १०५ ॥ बहुलक्ष्मीक इत्त्रैकत्वे "[12]पुमनडुन्नौ०" बहुत्वे

---

१ ५-१-१६ । २ ४-१-७९ । ३ ४-१-१०३ । ४ ६-१-११६ । ५ ६-१-१२० । ६ उणा० ६०७ । ७ ४-४-१२१ । ८ ७-३-७६ । ९ २-४-९६ । १० ४-१-१११ । ११ उणा० २१ । १२ ७-३-१७३ ।

तु " शेषाद्वा " कच्। पूर्वसूत्रे क इति निरनुबन्धे कचि प्राप्तिरेव नाऽस्तीत्याह—न कचीति प्रतिषेध इति। नैपादकर्षुक इति—उवर्णादिकणिति इति।

'इचाऽपुंसोऽनित्क्याप्परे'। २। ४। १०७॥ आपीति कृत उपश्लेषसप्तम्यैव। आबुपश्लिष्टे ककारे इत्वमित्यर्थस्य सिद्धेः परग्रहणं नियमार्थमित्याह—आवेव पर इति। सर्विकेति—सर्वा नाम काचित्ततः स्वार्थे " यावादिभ्यः कः "। " ङ्यादीदूतः के " ह्रस्वत्वेऽस्याऽयत्तदिकारः। सर्वादेः सर्वशब्दस्य तु त्यादिसर्वादेरित्यनेनाऽन्त्यस्वरात् प्रागकि सर्विकेति न स्यात्। मातृकेति—ननु यथेहाऽऽब् नाऽस्ति तथा मिमीते इति धान्यमातुरपि मातृशब्देनाऽभिधानादपुंस इत्यपि नाऽस्ति। ततो द्व्यङ्गविकलत्वान्नेदं प्रत्युदाहरणं युज्यते। प्रत्युदाहरणं हि तदङ्गाभावे कार्याभावं प्रदर्शयत्तदङ्गसामर्थ्यप्रदर्शनार्थमुपादीयते। तत्राऽङ्गद्वयवैकल्ये कस्याऽङ्गस्य वैकल्यादिह कार्याभाव इति निर्णयाभावादेकस्याऽप्यभाव इति, नैष दोषः। जननीवचनस्याऽन्यस्यैवाऽव्युत्पन्नस्य मातृशब्दस्य ग्रहणात्। यद्वा प्रत्युदाहरणदिङ्मात्रमिदं तेन स्वसृकेत्यादि प्रत्युदाहरणं द्रष्टव्यम्।

'स्वज्ञाऽजभस्त्राऽधाऽतुत्ययकात्'। २। ४। १०८॥ स्वा ज्ञातिः स्विकेति—यद्यपि स्वशब्दः ' स्वो ज्ञातावात्मनि क्लीबे, त्रिष्वात्मीये धनेऽस्त्रियाम् ' इति पठ्यते तथापि कुत्सिताद्यर्थविषये ज्ञातावपि स्त्रीत्वमत एव पाठात्। भवति ह्युपाधिभेदाल्लिङ्गयोगस्तदन्यलिङ्गत्वं च यथा पचति रूपमित्यलिङ्गस्याऽपि नपुंसकलिङ्गत्वम्। कुटीरमिति—स्त्रीलिङ्गस्याऽपि नपुंसकलिङ्गत्वम्। विचित्रा हि शब्दशक्तयः। यद्वा ज्ञातिरत्र स्त्रीरूपा विवक्षिता तेन योनिमन्नामत्वात् स्वशब्दस्य स्त्रीत्वम्। न विद्यते स्वा यस्या इति कृते कपि अस्विका अस्वकेति रूपे। कचि तु अस्विका अस्वकेति रूपे। कपि निमित्तभूते विकल्पपक्षे "अस्याऽयत्०" इति न विकल्पसामर्थ्यात्। कचि तु " नवाऽऽप " इति ह्रस्वे कृते अस्याऽयत्तद्भवत्येव। न च सूत्रविकल्पः प्रवर्तते। सूत्रं विनाऽपि अस्विका अस्वकेति सिध्यत इति। अस्विकेति रूपमेकं रूपेणैव गतार्थमिति। स्वा आत्मा आत्मीया चेति—स्त्रीसम्बन्ध्यत्राऽऽत्माविवक्षितस्तस्य च योनिमता स्त्रीशरीरेणाऽभेदोपचारात् योनिमन्नामत्वात् स्वा इत्यत्र स्त्रीत्वम्।

'द्व्येषसूतपुत्रवृन्दारकस्य'। २। ४। १०९॥ यदा तु न द्वे न एषेति एषद्विशब्दौ नञ्पूर्वावित्वविकल्पं न प्रयोजयतस्तत्राऽपि कृते नञ्समासेऽनञ्समासे वाऽगिति द्वयी गतिः। उभयोरपि च पक्षयोर्विभक्तेः पर आबिति। यतोऽन्तरङ्गानपि विधीन् बहिरङ्गाऽपि लुब्बाधत इति समासार्थाया विभक्तेस्त्यदाद्यत्वात् पूर्वं लुपा

१ ७-३-१७५। २ ७-३-१५। ३ २-४-१०४। ४ २-४-१०६।

भाव्यं, प्रत्ययलोपे प्रत्ययलक्षणं च नाऽस्ति, समुदायाद् या विभक्तिस्तामाश्रित्य त्यदाद्यत्वे सत्यापा भाव्यं, स च विग्रहकालभाविन्या विभक्त्या व्यवधीयते। तर्हि द्विके इति मूलप्रयोगेऽपि कुत्सिते द्वे इति तद्धितवृत्तौ "[१]त्यादिसर्वादेः०" इत्यकि औकारस्य लोपे तद्धितान्तादौकारे तदाश्रये त्यदाद्यत्वे आपि च तद्धितवृत्तिनिमित्तस्य औकारस्य स्थानिवद्भावान्न प्राप्नोति ? नैवम्, उभयोरपि औकारयोरेकपदभक्तत्वेन व्यवधानं न भवति। अद्वके इत्यत्र तु समासभक्तस्य औकारस्य प्रथमेन द्विशब्द-भक्तेन औकारेण व्यवधानं भवत्येव। कृत्रिमः पुत्रः–"तनुपुत्राणु०"[२] इति के पुत्रकः स्त्रीचेत् पुत्रिका। वृन्दारिकेति–प्रशस्तं वृन्दमस्याऽस्तीति वृन्दादारकस्ततो "[३]जान्तेरयान्त०" इति बाधायै "[४]अजादेः" इत्यापा।

'अस्याऽयत्तत्क्षिपकादीनाम्'। २।४।१११॥ पृथग्योगादिति–अयमर्थो यद्यत्राऽपि विकल्पः स्यात्तदा स्विका स्वकेत्यादौ "[५]ङ्याादीदूतः के" इति ह्रस्वत्वेऽनेन वैकल्पिकस्य इत्वस्य सिद्धत्वात्, "[६]स्वज्ञाजभस्त्रा०" इत्यादीनां पृथगुपादानमनर्थकं स्यादित्यर्थः।

'तारकावर्णकाऽष्टका ज्योतिस्तान्तवपितृदेवत्ये'। २।४।११३॥ णिजन्ताद्वर्ण्यत इति कर्मणि संज्ञायां णके वर्णका। वर्णयतीति तु चौरादिकप्रतिप-त्त्यर्थं तिवा निर्देशो न तु णकारम्भकः। अथवा वर्णयत्याधारविशेषगतमाधेय-गुणं वादयतीति।

॥ इत्याचार्यश्रीहेमचन्द्रस्मृतायामवचूर्णिकायां द्वितीयस्याऽ-ध्यायस्य चतुर्थः पादः॥



'धातोःपूजार्थस्वतिगतार्थाधिपर्यतिक्रमार्थाऽतिवर्जः प्रादिरुपसर्गः प्राक् च'। ३।१।१॥ प्राक्छब्दस्याऽव्यवहिते वर्तनादाह–न पर इति। धात्वर्थः प्रश-स्यते इति–शोभनत्वोद्भावनेन सिचि स्तौत्योरर्थस्य कर्तुः पूजा प्रतीयत इत्यर्थः। गता-र्थावधिपरीति–गतो ज्ञातोऽर्थोऽभिधेयं ययोस्तौ गतार्थौ, योऽर्थोऽनयोर्द्योत्यस्तस्य प्रक-रणादिवशादवगमे निष्प्रयोजनावेतावुच्येते इति गतार्थत्वम्। यद्येवं प्रकरणादिनोक्त-त्वात्तदर्थस्य तयोः प्रयोगाऽयोगः, उच्यते–प्रकरणादेव गतार्थानामपि स्फुटतरार्थाऽव-गत्यर्थः प्रयोगो लोके भवति। यथाऽपूपौ द्वौ ब्राह्मणौ द्वावनयेत्यपूपावित्यत्र द्विवचना-दवगतेऽपि द्वित्वे द्विशब्दस्य प्रयोग इति। समासाभावादिति–गतिसंज्ञाया अभावात्

१ ७–३–२९। २ ७–३–२३। ३ २–४–१६। ४ २–४–१६। ५ २–४–१०४। ६ २–४–१०८।

“ [1]गतिकन्य० ” इत्यनेन । “ [2]अतिरतिक्रमे च ” इत्यपि बाहुलकात् न । वृक्षं वृक्षमभि-सिञ्चतीति–वीप्सार्थेनाऽभिना योगात् “ [3]लक्षणवीप्स्ये० ” इति द्वितीया । धात्वर्थं बाधत इति–प्रादेरव्ययत्वादनेकार्थतां दर्शयति । धातुपाठे योऽर्थस्तदपेक्षया धात्वर्थं बाधत इत्युक्तमन्यथाऽनेकार्थत्वाद्धातूनामयमर्थो न स्यात् । अभ्यन्तरीकृत्येति–बुद्धिं-स्थीकृत्येत्यर्थः । यस्माद्विशिष्टैव क्रियेति–क्रियायाः क्षणिकत्वात् सामान्यक्रियाया उत्पत्त्यनन्तरमेव विनाशादुपसर्गयोगे न स्याद्विशिष्टत्वमित्यर्थः । अन्तरङ्गत्वादेत्व-दीर्घत्वयोरिति–सम्पन्नकारणत्वादेत्वदीर्घत्वयोरन्तरङ्गत्वं तागमस्य तु सम्पत्स्यमान-कारणत्वाद्बहिरङ्गत्वम् । कृते च यबादेशे एकपदत्वात्तागमस्यैवाऽन्तरङ्गत्वम् । “ [4]व्यञ्जनस्यानादेर्लुक् ” इतीति–उभयोः स्थाने निष्पन्नत्वाद् यकारवकारयोर्धातुव्यपदे-शात् पुनरपि “[4]व्यञ्जनस्याऽनादेर्लुग्” भवति । तस्याऽधातुत्वादिति–सन्नादेः प्रत्ययस्य क्रियार्थत्वेऽपि न धातुत्वं भ्वादिसाहचर्याद् भ्वादयोऽप्रत्यया एव धातवोऽन्येऽपि तथा । अमनो मनः सुभवति दुर्भवति अभिभवतीति वाक्यं कर्तव्यं “ [5]च्व्यर्थे भृशादे-स्तोः ” क्यङ् सलोपश्च । सुशब्दस्य भवतिना सम्बन्ध इति । यदा तु असुमनाः सुमना इति मनसा सम्बन्धस्तदा सुशब्दस्य प्राक्त्वं सिद्धमेव । ननु सुकटंकराणि वीरणानि दुष्कटंकराणि वीरणानीत्यत्र गतिसंज्ञकस्य सुशब्दस्य धातोः प्राक् प्रयोगः प्राप्नोति ?, नैवम् ; “ [6]दुःस्वीषतः कृच्छ्राकृच्छ्रार्थात् खल् , ” “ [7]च्व्यर्थे कर्त्राप्याद् भूकृगः ” इत्यत्र च खित्करणात् । तस्य ह्येतत्प्रयोजनं खिति मोऽन्तो यथा स्यात् । यदि च सुशब्दस्य प्राग्धातोः प्रयोगः स्यात्तदा खित्करणमनर्थकं स्यादिति । सुशब्दादिना कटादेर्व्यवधानात् । सुशब्दात्त्वव्ययत्वान्न भवति ।

‘ ऊर्याद्यनुकरणच्विडाचश्च गतिः ’ । ३ । १ । २ ॥ सोऽयमित्यभेदोपचा-रेण कुतश्चित्सादृश्यात् , येनाऽनुक्रियते तदनुकरणमित्याह । अनुकरणानीति–च्विडाचोः प्रत्ययत्वात् प्रकृतेराक्षेपात् प्रत्ययमात्रस्य धातुसम्बन्धासम्भवाच्च तदन्तप्रतिपत्तिरित्या-हच्व्यन्ता इति । डाजिति चित्करणात्पिता कृत्वेत्यादौ पितृशब्दात् “ ऋदुशनस्० ” इत्यनेन डा इति तदन्तस्य गतित्वाभावात्क्त्वो यबादेशाभावः । खाडिति कृत्वेति–कृत्वेत्यस्येतिना सम्बन्धः । इतश्च खाडित्यनेन अतो धातोः खाटश्च परस्परं न सम्बन्धः ।

स्वधापितृभ्य इति श्रुतेः, कथं स्वधा देवता सम्प्रदाने वर्तते ? उच्यते–पितृणा-मपि देवतारूपत्वाददोषः ।

---

१ ३–१–४२ । २ ३–१–४५ । ३ २–२–३६ । ४ ४–१–४ । ५ ३–४–२९ । ६ ५–३–१३९ । ७ ५–३–१४० । ८ १–४–८४ ।

'**कारिका स्थित्यादौ**'। ३। १। ३॥ श्लोकवाचिनस्तु कारिकाशब्दस्य सत्यपि धातुसम्बन्धसम्भवे प्रयोगादर्शनात् ग्रहणाभाव इति।

'**अग्रहाऽनुपदेशेऽन्तरदः**'। ३। १। ५॥ मध्ये हिंसित्वेति–अन्तः शब्दो मध्येऽधिकरणभूते वर्तते परिग्रहे च, तत्र परिग्रहे प्रतिषेधादितरत्र गतिसंज्ञा विज्ञायते
5 इति दर्शयति। विशेषानाख्यायने चिन्तयतीत्यस्य स्थाने कथयतीति प्रयोगो ज्ञेयः।

'**कणे मनस्तृप्तौ**'। ३। १। ६। सूत्रेऽव्ययमित्यस्याऽकरणात्कणे मनस् इत्येते अव्यये इति स्वरूपनिरूपणमात्रमेवेति। तृप्ताविति व्यावृत्तेर्न द्व्यङ्गवैकल्यम्।

'**पुरोऽस्तमव्ययम्**'। ३। १। ७। पुरः कृत्वेत्यत्र–पुर्शब्दात् शसि सकारान्तोऽस्त्येवेति न द्व्यङ्गवैकल्यम्।

10 '**गत्यर्थवदोऽच्छः**'। ३। १। ८। अत्र समासान्तविधेरनित्यत्वादत एव निर्देशाद्वा "चवर्गदषहः०"[1] इति समासान्तो न भवति। अवतेरचि पृषोदरादित्वाद्वकारस्य छकारे "स्वरेभ्यः"[2] इति द्वित्वे अच्छ इति अभ्यादावर्थेऽव्ययं निर्मलादावनव्ययम्।

'**मध्येपदेनिवचनेमनस्युरस्यनत्याधाने**'। ३। १। ११॥ अनत्याधाने
15 इति अत्र–"विभक्तिसमीप०"[3] इत्यनेनाऽर्थाभावेऽव्ययीभावः। तस्मिन्नपि "सप्तम्या वा"[4] इति विकल्पादम्भावाभावः तत्पुरुषो वा। मध्ये कृत्वा वाचं तिष्ठतीति–औपचारिकोऽयमाधार इति वाचोऽनत्याधानमस्ति। वचनं हि शब्दप्रकाशनफलं न केनाऽपि सह समवैति।

'**उपाजेऽन्वाजे**'। ३। १। १२॥ उप अनु इत्येवं पूर्वादजतेर्घञि पृषोदरा-
20 दित्वादेकारे–उपाजेऽन्वाजे।

'**स्वाम्येऽधिः**' ३। १। १३॥ प्रादिरुपसर्ग इति वर्तत इति–अत्रैव सूत्रे मण्डूकप्लुतन्यायेन प्रादिरुपसर्ग इति वर्तते, न ऊर्यादि सूत्रेषु तेन ऊर्यादीनां न उपसर्गसंज्ञा। ततश्च ऊरी स्यादित्यादौ "प्रादुरुपसर्गा०"[5] इति न षत्वम्। प्राक्त्वेऽप्यनियम इति–न केवलं समास एवेत्यर्थः। नन्वधिपूर्वः करोतिर्विनियोगे वर्तते तत्कथं
25 स्वामित्वे गम्यमान इति? उच्यते–सत्यम्, विनियोगोऽपि चेत्स्वामित्वविषयो भवति।

'**साक्षादादिश्च्व्यर्थे**'। ३। १। १४॥ च्व्यन्तानामिति–अर्थग्रहणाच्च्व्यन्तानां विकल्पो न भवतीति। मान्तत्वं निपात्यत इति–तेन लवणीकृत्येत्यादौ पूर्वसू-

---

१ ७-३-९८। २ १-३-३०। ३ ३-१-३९। ४ ३-२-४। ५ २-३-५८।

त्रविहितगतिसंज्ञासन्नियोगे न भवति । तथा लवणां कृत्वा यवागूं भुङ्क्ते । शीतः कृतः शीता कृता शीताः कृता इत्यादावभिधेयवल्लिङ्गे गतिसंज्ञाया अभावात् मान्ताभावः ।

' **प्राध्वं बन्धे** ' । ३ । १ । १६ ॥ बन्धहेतुकमिति–बन्धजनितमित्यर्थः । दुष्टाश्वादिर्हि बन्धनेनाऽऽनुकूल्ये व्यवस्थाप्यते । बन्ध इत्युच्यत इति–कारणे कार्योपचारात्, कारणं बन्धः कार्यमानुकूल्यं बन्ध एवाऽऽनुकूल्ये वर्तते । 5

' **नाम नाम्नैकार्थ्ये समासो बहुलम्** ' । ३ । १ । १८ ॥ सामर्थ्यमनुभूय भवतीति–ननु भवनक्रियायाः सामर्थ्यविशेषः कर्ता, अनुभवनक्रियायास्तु पदानि कर्तॄणीति भिन्नकर्तृकतायां क्त्वा न प्राप्नोति, नैवम्; वर्तनक्रियापेक्षया तुल्यकर्तृकत्वं, वर्तनक्रियायास्तु पदान्येव कर्तॄणि, कोऽर्थः ? पदानां सामर्थ्यमनुभूय वर्तमानानां सामर्थ्यविशेषो भवति । न च वाच्यमनुभवनक्रियाया भवनक्रियायाश्च सामर्थ्यविशेष एव कर्तेति तुल्यकर्तृत्वं, यतः परस्परव्यपेक्षा पदानामेव सम्भवतीत्यनुभवनक्रियायाः पदान्येव कर्तॄणि । अननुभूयैवेति–नित्यसमासत्वादिति शेषः । जामदग्न्य इति–प्रथमापत्यस्याऽपि पौत्रकार्यकरणाद् वृद्धत्वविवक्षायां " गर्गादेर्यञ्[1] " विस्पष्टादयः पट्वादीनां प्रवृत्तिनिमित्तस्य पाटवादेर्विशेषणानि, न तु द्रव्यस्येति विस्पष्टमिति नपुंसकत्वम् । अत एव मुख्यं सामानाधिकरण्यं नाऽस्तीति कर्मधारयतत्पुरुषाभावः । काष्ठा परं प्रकर्षमिति–काष्ठाशब्दस्य स्त्रीलिङ्गस्य क्रियाविशेषणत्वात् नपुंसकत्वे " अनतो लुप्[2] " भवति ह्रस्वत्वं तु बाहुलकान्न भवति । ऊर्ध्वमौहूर्तिकमिति–ऊर्ध्वं मुहूर्ताद्यो भवः कालस्तत्र भवः, " अध्यात्मादिभ्य इकण्,[3] " सप्तमी चोर्ध्वमौहूर्तिके[4] " इति निर्देशादुत्तरपदवृद्धिः । वाससी इवेति–अत्रोत्तरपदप्राधान्यात् सेः " अव्ययस्य[5] " इति लुप् । एवं दृष्टपूर्व इति–पूर्वं दृष्टा इत्यपि कृते निपातनाद् ह्रस्वत्वम्, तेन न मे श्रुता नाऽपि च दृष्टपूर्वा इति सिद्धम् । सामान्येन समासं कृत्वा पश्चात् स्त्रीत्वे वा । चरन्ति गावो धनमस्येति–अत्र समासे चरन्तिगुरिति स्यात् । नित्यसन्ध्यादिरिति–ऐकपद्यात् " ह्रस्वोऽपदे वा[6] " इति ह्रस्वविकल्पाप्रवृत्तेर्नित्यं यत्वादि भवतीत्यर्थः । पदत्वार्थमिति–अन्ये त्वाहुरेको द्वावित्यादिवदुक्तेष्वप्येकत्वादिषु नामार्थत्वात् केवलायाश्च प्रकृतेः प्रयोगाभावाद् भाव्यमत्र प्रथमैकवचनेन तस्य च " दीर्घङ्याब्०[7] " इत्यनेन लुक्, " अनतो लुप् " इति वेति तन्मतग्रहणायाऽऽह पदत्वार्थमिति । त्याद्यन्तार्थप्राधान्यादिति–त्याद्यन्तस्य साध्यार्थप्रधानत्वादसत्त्ववाचित्वं, असत्त्वं च सामान्यं; सामान्यं च नपुंसकं ततः " अनतो लुप् " ।

१ ६–१–४२ । २ १–४–५९ । ३ ६–३–७८ । ४ ५–४–३० । ५ ३–२–७ । ६ १–२–२२ । ७ १–४–४५ ।

**'सुज्वार्थे सङ्ख्या सङ्ख्येये सङ्ख्यया बहुव्रीहिः'। ३। १। १९॥**

विकल्पः संशयो वेति—ननु विकल्पसंशययोः को भेदः? उच्यते—निर्णये सति विकल्पः, यथा—देवदत्तो भोज्यतां चैत्रो वा, यद्वा विकल्पे क्रियाप्रवृत्तिः संशये तु न। विकल्पे क्रियाप्रवृत्तिर्यथा द्वित्रिभ्यो देहि भोजनं, ततश्च द्वाभ्यां त्रिभ्यो वा देहीति 5 विकल्पो गम्यते। अतोऽस्मिन् सति क्रियाप्रवृत्तिः। संशये क्रियाप्रवृत्त्यभावो यथा पुरुषेभ्यो देहीत्युक्ते त्रिभ्यो दापितं चतुर्भ्यो वेति संशेते। न जाने त्रयश्चत्वारो वाऽऽगता इति च संशयः। ननु द्विदशा इत्यादौ तु सुजर्थे समासः कस्मान्न क्रियते? उच्यते, यदि नेष्यते तदाऽनभिधानात्।

**'आसन्नादूराधिकाध्यर्द्धार्द्धादिपूरणं द्वितीयाद्यन्यार्थे'। ३। १। २०॥**

10 आसन्न—पूरणमभिधेयत्वेन विद्यते यस्य प्रत्ययस्य यस्मिन् वाऽभ्रादित्वादकारे पूरणार्थविहितः प्रत्यय उच्यते, तस्य च केवलस्याऽसम्भवात् तदन्तशब्दस्य चाऽर्धादीति विशेषणमित्याह—पूरणप्रत्ययान्तमिति। द्वितीयादिर्यासां विभक्तीनां ता द्वितीयादयो द्वितीयादयश्च तदन्यच्च तस्याऽर्थः। आसन्नदशा इति—आदशभ्यः संख्येत्यस्य प्रायिकत्वादत्र दशन्शब्दः संख्याने वर्तते। परं संख्येयेन सहाऽभेदेन बहुवचनम्। यदि 15 संख्येयवृत्तिना दशन्शब्देनाऽऽसन्ना दश येषामित्येव वाक्यं क्रियते न दशत्वमिति तदा संख्येयेऽभिधेय इति वृत्त्यंशेन निषेधान्न स्यादनेन समासः। नवैकादश चेति पर्यायश्च विघटेत। यत इत्थं कृते एकोनविंशति—एकविंशतिसंख्याप्रतीतिः। यथा दशशब्दो दशत्वे संख्याने वृत्तस्तथा विंशत्यादयोऽपीत्याह—एवमासन्नविंशा इति। अदूरदशा इत्यादिषु "विशेषणंसर्वादि०" इति संख्यायाः पूर्वनिपातो न भवति। 20 "प्रमाणीसंख्याड्डः"—इति संख्यायाः समासान्तविधानात्। अधिका दश येभ्यो येषु वेति—एकाद्यवयवापेक्षया यद्दशानामधिकत्वं तत् एकादशादिसमुदायापेक्षयाऽपि ज्ञेयं, तेनाऽधिकयोगे "अधिकेन भूयसस्ते" इति सप्तमीपञ्चम्यौ सिद्धये यच्छब्देन च बहूनामेकादीनामभिधानात् पञ्चमीसप्तम्योर्बहुवचनमित्याह—येभ्यो येषु वेति। एकादशादिषु दशानामधिकत्वं किमपेक्षमित्याह—एकाद्यपेक्षमिति। ननु तर्हि कथमधिका दश 25 यस्येत्येकवचनेन वाक्यं न कृतं? उच्यते—बहुवचनमवयवावयविनोरभेदविवक्षया। एकादशादयोऽवयविन एकादयोऽवयवास्तत उपचारादवयवस्यैकस्याऽवयविनां च बहुवचनम् कोऽर्थो? । येभ्यो येषु वा एकादशादिसमुदायेष्वेकाद्यपेक्षयाऽधिका दश इत्यर्थः। अधिकविंशा इति—अव्युत्पन्नोऽयमधिकशब्दस्तेन "तद्धिताकको०" इति न पुंवन्निषेधः अन्यथा कोपान्त्यद्वारा निषेधः स्यात्। एवमधिकत्रिंशा इत्यपि। अर्द्ध-

---

१ ३-१-१५०। २ ७-३-१२८। ३ २-२-१११। ४ ३-२-५४।

पञ्चमविंशा इति–"प्रत्ययः प्रकृत्यादेः" इति न्यायेन पूरणप्रत्यये मटि पञ्चमीत्यस्य पूरणप्रत्ययान्तता नाऽर्धपञ्चमेत्यस्य तेन " तद्धिताकको० " इति न पुंवन्निषेधः। ननु यथा बहुव्रीहिणा विभक्त्यर्थस्याऽभिधानात् षष्ठ्यादयो न भवन्त्येवं लिङ्गसंख्ययोरभिधानात्तयोर्द्योतकत्वात् ङ्यादयो न प्राप्नुवन्ति, उच्यते–स्वार्थिकत्वाद् ङ्यादीनां समासेनाऽभिहितेऽपि स्त्रीत्वादौ तद्द्योतनाय भवन्ति। स्त्रियां यद्वर्तते नाम तस्माद् ङ्यादयो भवन्तीति हि तत्राऽर्थः। तथा चित्रगुरिति समासेन नामार्थमात्रस्य कर्मादिशक्तिरहितस्यैकत्वादय उक्तास्ततः कर्मादिगतैकत्वादिप्रतिपादनाय वचनानि भवन्ति। चित्रगुं पश्य, चित्रगुणा कृतमिति; प्रथमा तर्हि न प्राप्नोति समासेन संख्याया अभिधानात्, नैवम्; साऽपि न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्यय इति समयाद् भविष्यति। अथवा यदा चित्रगुरेकत्वविशिष्टो नामार्थः प्रतिपिपादयिषितस्तदा विभक्त्या विनाऽसौ न शक्यते प्रत्याययितुमिति प्रथमैकवचनं विधेयमेवं द्वित्वबहुत्वयोर्द्विवचनबहुवचनविधिः।

'एकार्थं चानेकं च'। ३। १। २२॥ समानोऽर्थोऽधिकरणमिति–यथाऽऽरूढो वानरो यमित्यत्र–आरूढोऽपि स वानरोऽपि सः। चित्रगुश्चैत्र इति–ननु यथा चार्थे द्वन्द्वविधानाद् द्वन्द्वे चकारस्याऽप्रयोगः, एवमिहाऽपि चैत्रादेः प्रयोगो न प्राप्नोति, नैष दोषः; चित्रगुशब्देन तद्वन्मात्रं सामान्यमुच्यते न तु विशेष इति तत्राऽवश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः। चित्रगुः कश्चैत्र इति वा विकल्पेन नरो वने रमते "क्वचित्" इति डे वनरस्तस्याऽयमिति वा वानरः, अन्तेषु शितीनीति–अर्थकथनमिदं विग्रहस्तु अन्तेषु शितीनि, अन्तशितीनीति। अवान्तरसमासः कार्यः। अन्यथैकार्थत्वं न स्यात्। पञ्चनावप्रिय–इत्यत्राटि समासान्तात् ङीर्न बाधन्ते स्वार्थिकाः क्वचिदित्यतः अकारान्तान्नाम्नो ङीविधानात् समासमध्ये ङीर्न भवतीति न्यासकारः। यथा मे माता तथा मे पितेति–मे मातेत्याद्यर्थकथनं मे माता मन्मातेति तु विग्रहः। ततो यथेति मन्मात्रिति तथेति च त्रयाणां पदानां मत्पित्रा सह समासः प्राप्तः। न च वाच्यमेकार्थत्वात्त्वाभावान्न समासः। यतो य एव मातृसदृशः स एव मत्पितेत्येकार्थत्वमस्ति। अस्योदाहरणस्याऽयमर्थः–यथा-कश्चित्केनचित्पृष्टः कीदृशः कुलशीलादिना तव पितेति? स आह–यथा मे मातेति। अथवा स्नाहीति कश्चिदुक्तः स आह यथा–मे मातेति। यथा शुद्धा मे माता तथा पिताऽपीत्यभिजनशुद्धिरपि स्नानं किं बाह्येन स्नानेन ?, ततः सुस्नातं भो इति।

'उष्ट्रमुखादयः'। ३। १। २३॥ उपमानमुपमेयेन समस्यमानं नैकार्थतां भेजे, स एव चन्द्रस्तदेव मुखं न भवत्यतो भिन्नसूत्रम्। सामान्यवाचिना चेति–साधारणधर्मवाचिनावस्थानादिरूपेणेत्यर्थः।

१ ३-२-१४। २ ५-१-१७१।

'**सहस्तेन**' । ३ । १ । २४ ॥ तेनेति तृतीयान्तप्रतिरूपका निपातात्तृतीया । न तुल्ययोग इति–ननु तुल्ययोगविद्यमानार्थयोः को भेदः ? उच्यते–क्रियागुणद्रव्यैरुभयोः सदृशः सम्बन्धस्तुल्ययोगः । विद्यमानार्थता तु न तथा । तथाहि–सकर्मकाद्वात्मनेपदमित्युक्ते यथा धातोरात्मनेपदं न भवति तथा कर्मणोऽपि । तथा सलोमको भोज्यतामिति यथा देवदत्तो भोज्यते न तथा लोमान्यपि । क्वचिन्न भवतीति–तुल्ययोगे तु भवत्येव । वहति गर्दभीति–अत्र तत्पुत्राणामस्तित्वमेव विवक्षितं न तु वहनक्रियेति विद्यमानार्थता ।

'**दिशो रूढ्याऽन्तराले**' । ३ । १ । २५ ॥ अन्तरालस्याऽन्यपदार्थत्वेऽपि प्रथमान्तत्वाद् "ऐकार्थ्ये चा०" इत्यनेन न प्राप्नोतीति वचनं कजभावार्थं च, कथमिति चेत् ? उच्यते–"शेषाद्वा" इत्यत्र हि शेषे सामान्यविहिते बहुव्रीहौ न त्वन्यस्मिन्निति व्याख्यानात् । एवं "सुज्वार्थे०" इत्यादिसूत्रत्रयमपि ।

'**तत्राऽऽदाय मिथस्तेन प्रहृत्येति सरूपेण युद्धेऽव्ययीभावः**' । ३ । १ । २६ ॥ 'काकाक्षगोलकन्यायेन' मिथः शब्दः प्रत्येकमभिसम्बध्यते । अत एव सूत्रमध्ये पठितः । प्रहृत्येति–इति शब्दो वाक्यस्वरूपपरामर्शार्थः । स च प्रत्येकं सम्बध्यते, तत्राऽऽदाय मिथ इति मिथस्तेन प्रहृत्येति । अव्ययीभावसंज्ञेत्यत्र–'ननु संज्ञा संज्ञान्तरबाधिका नेति' न्यायाद्बहुव्रीहिसंज्ञाऽप्यस्तु ?, नैवम् ; द्विगुश्चेति चकारकरणात्–द्वितीया संज्ञा न । केशाकेशीति–नन्वन्यचिकीर्षितायाः क्रियाया अन्येन करणं क्रियाव्यतिहारः ततश्च यदेकेन केशग्रहणमकारि तदपरो न विधत्ते परचिकीर्षितं, किन्तु स्वचिकीर्षितमिति क्रियाव्यतिहारो नाऽस्तीति कथं समासः ? उच्यते–यद्यपि स्वचिकीर्षिताऽन्या क्रिया तथापि तत्सदृशत्वादेकैव । यथा यद्ययं मे ओदनं दास्यति तदाऽहमप्यस्मै तमेव दास्यामि पश्चात्किं तमेव ददाति ? परं तत्सादृश्यादन्योऽप्योदनः स एवोच्यते । एवमत्राऽपि । केशेषु च केशेषु गृहीत्वा युद्धमनेनेति–एकः सकेशः अन्यश्च मुण्डोऽतो न मिथोऽभावः ।

हस्ते च पादे च गृहीत्वेति–यदा तु हस्तश्च पादश्चेति कृत्वा "प्राणितूर्याङ्गाणाम्" इत्येकत्वे हस्तपादे च हस्तपादे च मिथो गृहीत्वा कृतं युद्धमिति क्रियते तदा हस्तपादाहस्तपादीति भवति । व्यासजेतामिति–बाह्वोश्च बाह्वोश्च मिथो गृहीत्वा व्यासङ्गः कृतः । क्रियाव्यतिहारे आत्मनेपदं ह्यस्तनी आताम् व्यासङ्गं कृतवन्तावित्यर्थः ।

'**नदीभिर्नाम्नि**' । ३ । १ । २७ ॥ शनैर्गङ्गमिति शनैर्योगाद्गङ्गाऽपि शनैः सा

---

१ ३-१-२२ । २ ७-३-१७५ । ३ ३-१-१९ । ४ ३-१-१३७ ।

विद्यते यत्र । स्वरूपस्य च ग्रहणमिति–उत्तरसूत्रे पञ्चनदमित्यत्र । स्वरूपग्रहणाच्च पर्यायाणां स्रोतस्विनीनिम्नगासिन्धुप्रभृतीनां न ग्रहः ।

'**संख्या समाहारे**' । ३ । १ । २८ ॥ निवृत्तमिति–समाहारे इति भणनात् । उभयपदप्रधानः । समासोऽनेन विधीयते । समाहार इति किमिति–समाहृतिं विना द्वीरावतीको देश इत्यादौ द्विगोरिव बहुव्रीहेरपि बाधकः स्यात् । द्विगुबाधनार्थमिति–ननु तर्हि तस्य काऽवकाशः ? सत्यम्, नदीनाम्नोऽन्यत्र गोदावरीणां सप्तत्वमिति–आ दशभ्यः संख्या संख्येये वर्तत इत्यस्य प्रायिकत्वात्, वृत्तिविषये द्व्यादयः संख्यानेऽपि वर्तन्ते । सप्तगोदावरीति–अन्यस्तु सर्वो नपुंसकत्वे "[1]क्लीबे" इति ह्रस्वः, एवं द्विगोदावरि ।

'**वंश्येन पूर्वार्थे**' । ३ । १ । २९ ॥ स इहाऽऽद्य इति–ननु वंशे भवा इति व्युत्पत्त्या सर्वेऽपि पाठकाः कारकाश्च कथं न लभ्यन्ते, आद्य एव कथं गृह्यते ? उच्यते–<u>गौणमुख्ययोरि</u>रितिन्यायात् । एकमुनिव्याकरणस्येति–एको मुनिर्वंश्य एतावानेव विग्रहः । व्याकरणस्येत्येतत्तु भिन्नपदम्, अतोऽन्यपदार्थाभावान्न बहुव्रीहिः । पूर्वपदार्थप्राधान्याच्च यथाक्रममेकवचनद्विवचनबहुवचनानि तेषां च "[2]अनतो लुप्" । सप्त काशय इति–काशे राज्ञोऽपत्यानि "[3]दुनादि०" इतिञ्यः । '[4]बहुष्वस्त्रियां" लुप् । एकविंशतिभारद्वाजमिति–भरद्वाजस्येमे इत्येव कार्यं "[5]तस्येदम्" इत्यण् अपत्ये तु बिदाद्यञो "[6]यञञः०" इति बहुषु लोपः स्यात् । यद्यप्यत्रैकविंशतिशब्दस्य विशेषलक्षणेनैकत्वं तथापि पूर्वपदार्थप्रधानस्यैकविंशतिशब्दवाच्यस्य बहुत्वाद्भारद्वाजाद्बहुत्वमेव शब्दशक्तिस्वाभाव्यात् ।

'**पारे मध्येऽग्रेऽन्तः षष्ठ्या वा**' । ३ । १ । ३० ॥ समासे निपातयिष्यमाणैकारान्तानामिदमनुकरणम् । पारं गङ्गाया इति विग्रहः । दिङ्मात्रमेतत् गङ्गायाः पारमित्यपि कृते पारेगङ्गमिति भवत्येव । "[7]प्रथमोक्तं०" इत्यतः । गिर्यन्त इति वेत्यस्य प्रत्येकं सम्बन्धस्तेन यत्र षष्ठीसमासः प्राप्तस्तत्राऽनुज्ञायते । गिर्यन्त इत्यत्र तु "[8]तृप्तार्थ०" इत्यनेनाऽव्ययत्वान्निषिद्धोऽपि विधीयते ।

'**यावदियत्त्वे**' । ३ । १ । ३१ ॥ इयतां परिच्छिन्नसंख्यानामियतो वा परिच्छिन्नपरिमाणस्य भाव इयत्त्वं तस्मिन् । यावन्तीति–अव्यये तु यावदमत्राणीति कार्यम् । यावदमत्रमिति–पूर्वार्थप्रधानत्वादव्ययत्वे सिः । अनव्ययत्वे तु जस्समासात् । याव-

---

१ २-४-९७ । २ ३-४-५९ । ३ ६-१-११८ । ४ ६-१-१२४ । ५ ६-३-१६० । ६ ६-१-५४ । ७ ३-१-१४८ । ८ ३-१-८५ ।

इत्तमिति–असमस्तमिदम् । अतएव तावदित्युपादीयते । समासे हि गुणीभूतत्वात्ताव-
दित्यस्योपादानाभावः स्याद्यथा यावदमत्रमित्यत्र ।

'पर्यपाङ्बहिरच् पञ्चम्या' । ३ । १ । ३२ ॥ परित्रिगर्तमिति पञ्चम्यर्थ-
प्रधानात् प्रथमा । क्रियाविशेषणत्वविवक्षायां तु द्वितीया, यथा आमेखलं संचरतामि-
5 त्यत्रैवं सर्वत्राऽपि । प्रतिपदविहतायाश्चेति–लक्षणप्रतिपदोक्तयोरिति न्यायात् । अप-
शाख इति–न च वाच्यं शाखाया अपेन सह सम्बन्धाभावादेव न भविष्यति समासः ।
यतो गतार्थस्याऽपेनैवाऽभिधानादस्त्यपेन शाखायाः सम्बन्ध इति । न च परत्वात्
"प्रात्यव०" इति तत्पुरुषेणाऽस्य बाधेति वाच्यं, तत्राऽन्यग्रहणात् ।

'लक्षणेनाभिप्रत्याभिमुख्ये' । ३ । १ । ३३ ॥ प्रत्यग्निमिति–वैचित्र्यार्थं
10 ससन्धिवाक्यम् । अभ्यग्नीति–अत्राऽग्निना शलभपातो लक्ष्यते इत्यग्निर्लक्षणं भवति ।
तस्य चाऽभिप्रतिभ्यामाभिमुख्यं प्रतिपाद्यते । अग्नौ हि शलभाः संमुखा एव पतन्ति ।
लक्ष्यीकृत्येति–लक्षणत्वेन लक्ष्यीकृत्येत्यर्थः । यद्वा दर्शनक्रियापेक्षयाऽग्निर्लक्ष्यः
पतनक्रियापेक्षया लक्षणं यतः पूर्वं पश्यंति ततः पतंति । स्रुघ्नं प्रति गत इति–अत्र
स्रुघ्नादन्यान्नगरान्तरं गन्तुकामः पथि व्यामोहात्तमेव प्रत्यागत इति नाऽस्ति
15 गमनं प्रति स्रुघ्नस्य लक्षणता । यदुद्दिश्य हि गमनं क्रियते तल्लक्षणं भवति ।
अत्र तु व्यामोहादेवेत्थं गतः । गतक्रियापेक्षया च स्रुघ्नस्य कर्मत्वम् । येनाऽग्निस्तेन
गत इति–लक्ष्यं तेनेति लक्ष्यस्य द्योतकमग्निर्लक्षणं येनेति लक्षणस्य द्योतकमिति
लक्ष्यलक्षणभावः ।

'दैर्घ्येऽनुः' । ३ । १ । ३४ ॥ वृक्षमनु विद्योतत इति,–अत्र वृक्षो विद्योतन-
20 स्य लक्षणत्वेन विवक्ष्यते न दैर्घ्यस्येति ।

'तिष्ठद्ग्वित्यादयः' । ३ । १ । ३६ ॥ आयतीगवमिति–'इंण्क्' आयन्तीति
शतरि "ह्निणोरप्वि०" इति यत्वे ङ्यां आयत्यो गावो यस्मिन्निति कार्यम् । वृत्तौ त्व-
र्थकथनमात्रमेवं पूर्वत्र तिष्ठद्ग्वित्यत्राऽपि । असाधव इति–द्वितीयाद्यन्ता इति शेषः ।
एवं प्रान्तमिति–प्रगतत्वमन्तस्य प्रगतोऽन्तः प्रगतोऽन्तोऽस्मिन्निति वा । समत्वं समा-
25 नत्वं वा पक्षस्य तीर्थस्य तीरस्य चेति विग्रहत्रयं दर्शनीयम् । एवं प्रान्तमिति, स्वमतं
परमतं चेहाऽपि द्रष्टव्यमित्येवं शब्दार्थः । इति करणाच्च कृतापसव्यादिषु समासो न
भवति । यत्र च दृश्यते तत्र चिन्तनीयम् ।

---

१ ३-१-४७ । २ ४-३-१५ ।

'**नित्यं प्रतिनाऽल्पे**' । ३ । १ । ३७ ॥ शाकप्रतीति-पूर्वार्थे इत्यधिकारेऽप्यसम्भवादस्योत्तरपदार्थप्रधान एवाऽयं समासः ।

'**संख्याऽक्षशलाकं परिणा द्यूतेऽन्यथावृत्तौ**' । ३ । १ । ३८ ॥ ननु "[१]नाम नाम्न्यैकार्थ्ये०" इत्यतः सूत्रात् ऐकार्थ्ये सतीत्यनुवर्तते । तत ऐकार्थ्ये सति समासः ऐकार्थ्यं चैकपद्यं तच्च समासे सति भवति । तत इतरेतराश्रये दोषे समासः कथं ? उच्यते-यत्र यत्र येन सूत्रेण समासः कर्तुमिष्यते तत्र तत्र तस्मादेव ऐकार्थ्यं प्रथमं ज्ञातव्यम् । ततः समासः । अन्यथा हि सर्वाण्यपि सूत्राणि निरर्थकतां भजेरन्निति हि न्यासविदः । षडादिभिर्द्यूताभावात् षट्परीत्यादि न भवति । उत्कर्षतस्तु चतुष्परीत्येव नित्यसमासोऽयमिति परिप्रयोगो वाक्ये नाऽकथि, किन्तु न तथा वृत्तमितिपर्यायः । समविषमद्यूते इति-एकिकाद्विके रूपे । अन्ये पूर्वमितितस्मिन्नेव द्यूते ।

'**विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिपश्चात्क्रमख्यातियुगपत्सदृक्सम्पत्साकल्यान्तेऽव्ययम्**' । ३ । १ । ३९ ॥ समस्यत इति-अन्वर्थरूपत्वं समाससंज्ञायाः प्रदर्श्याऽव्ययीभावसंज्ञो भवतीत्युपसंहरति । अधिस्त्रीति-अत्राऽधिशब्दस्य क्लृप्ताऽनेकार्थवृत्तेराधाररूपविभक्त्यर्थवृत्तित्वं प्रकाशयितुमुक्ताधारस्याऽपि सप्तम्यन्तेन स्त्रीशब्देन समासः । ऋद्ध्यभाव इति-ऋद्धेरुत्तरपदार्थधर्मस्याऽभावो न तूत्तरपदार्थस्यैव धर्मिण इत्यर्थाभावाद्भिद्यते । तत्र हि धर्मिण एवाऽभावः । धर्मिणोऽसत्त्वमिति-अत्र धर्मिणोऽनुत्पत्तिरेव न तु सतोऽभाव इत्यर्थाभावोऽत्ययाद् विशिष्यते । अत्ययो हि सतोऽतिक्रान्तकालसम्बन्धिनी सत्तैवोच्यते । उपभोगादेः प्रतिषेध इति-न तु वस्तुन इति तदभावाद्भिद्यते । तैसृकमिति-त्रयो मुख्या आसां "[२]सोऽस्य मुख्यः" इति कः । पृषोदरादित्वात्तिस्रादेशः । तिसृकासु भवोऽण् । अनुरथं यातीति-ननु नित्यसमासत्वात् पश्चाद्रूपेणाऽर्थान्तरेणाऽन्वित्यव्ययं समस्यते तथा पश्चाच्छब्दोऽपि अव्ययत्वादर्थान्तरेण समस्यतां नित्यसमासत्वात् प्रयोगसमवायि वाक्यं न प्राप्नोति, उच्यते-"[३]सर्वपश्चादादयः" इति वचनात् पश्चाच्छब्दस्य अव्ययीभावसमासं प्रत्यव्ययत्वं नाऽङ्गीकार्यम्, अव्ययत्वे हि अव्ययीभावः स्यात् तत्र चाऽन्य इत्यधिकारात् समासान्तरप्राप्तावन्यत्वाभावात्तत्पुरुषो न स्यात् । युगपद्व्रीहीति-शब्दशक्तिस्वाभाव्याच्चाऽन्यपदार्थप्रधानोऽयम् । सम्पत्तिसिद्धिरिति-सिद्धिरात्मभावनिष्पत्तिः समृद्धिस्त्वन्यभावनिष्पत्तिरिति सिद्धिः समृद्धेरन्या ।

---

१ ३-१-१८ । २ ७-१-१९० । ३ ३-१-८० ।

'योग्यतावीप्सार्थानतिवृत्तिसादृश्ये' । ३ । १ । ४० ॥ प्रत्यर्थमिति-समासेन वीप्साया द्योतितत्वात्तन्निमित्ताद् द्विरुक्तिर्न प्रवर्तते । वाक्ये तु लक्षणादेरनेकस्याऽर्थस्य द्योत्यस्य सम्भवाद् द्विरुक्तिमन्तरेण वीप्सा द्योतयितुं न शक्येति। पदार्थानतिक्रम इति-पदमुत्तरपदं शक्त्यादिरूपं तस्याऽर्थः सामर्थ्यं तस्याऽनतिवृत्तिः ।
5 विन्यासविशेष इति-मूर्त्तस्याऽनेकस्य पदार्थस्य नियतदेशाद्यपेक्षं व्यवस्थापनं विन्यासः स एव विशेषः । यदि सदृगित्येव कुर्यात्तदा सकिखि देवदत्त इति सामानाधिकरण्यमेव स्यादित्याह-सादृश्यग्रहणमित्यादि । तेन देवदत्तस्य सकिखीति वैयधिकरण्यमपि सिद्धम् । सदृग्शब्दो हि धर्मिवाची, सादृश्यशब्दस्तु धर्मवाची ।

'यथाऽथा' । ३ । १ । ४१ ॥ यथावृद्धमिति-अत्र क्रमोऽपि प्रतीयते, ननु
10 कथमुक्तं ये ये वृद्धा इत्यादि ? उच्यते-प्रतीयतां क्रमो वीप्साऽपि प्रतीयते । न ह्येकोऽनेकार्थो न भवति । पूर्वेणैव सिद्ध इति-पूर्वसूत्रोपात्तेष्वेवार्थेष्वस्याऽपि प्रवृत्तेः । सादृश्ये प्रतिषेधार्थमिति-ननु यथा चैत्र इत्यादौ चैत्रसदृशो मैत्र इत्यर्थः । ततश्च थाप्रत्ययान्तः सादृश्ये न प्रवर्ततेऽपि तु सदृशि ततः किमुक्तं सादृश्ये प्रतिषेधार्थम् ? उच्यते-सादृश्योपाधिकत्वात् सदृगपि सादृश्यशब्दनोच्यतेऽतो वचनम् । सदृशि तु
15 "विभक्तिसमीप०" इति प्राप्ते निषेधः । अव्युत्पन्नस्य सादृश्यं विना योग्यतादिष्वर्थेषु "योग्यता०" इति सिद्धः समासः परं व्युत्पन्नस्य सदृगर्थे "विभक्ति०" इत्यादिना समासः प्राप्तस्तन्निषेधार्थं वचनम् ।

'गतिक्वन्यस्तत्पुरुषः' । ३ । १ । ४२ ॥ कु इत्यव्ययमिति-गतिसाहचर्याद्व्ययमित्यधिकाराद्वा सम्भवे व्यभिचारेति न्यायात् कुइत्यस्य विशेषणं न तु गति-
20 संज्ञानां तेषामव्यभिचारात् । कुब्राह्मण इति नित्यसमासत्वात्कुत्सितो ब्राह्मण इत्यस्वपदविग्रहः ।

'सुः पूजायाम्' । ३ । १ । ४४ ॥ पूजाया अन्यत्राऽतिशयार्थेऽनुक्ताऽपि व्यावृत्तिर्द्रष्टव्या ।

'प्रात्यवपरिनिरादयो गतक्रान्तक्रुष्टग्लानक्रान्ताद्यर्थाः प्रथमाद्यन्तैः'।
25 ३।१।४७॥ प्रान्तेवासीति-अन्ते वसतीत्येवं व्रती "व्रताभीक्ष्ण्ये" णिन्, "शयवासिवासेष्व०" इत्यलुप्। अनुलोम इति-"प्रत्यन्वचा०" इति अत् समासान्तः "नोऽपदस्य०" इत्यन्त्यस्वरादिलोपः । प्रत्युरसमिति-"प्रतेरुरसः०" इत्यत्समासान्तः ।

---

१ ३-१-४० । २ ५-१-१५७ । ३ ३-२-२५ । ४ ७-३-८२ । ५ ७-४-६१ । ६ ७-३-८४ ।

'अव्ययं प्रवृद्धादिभिः'। ३। १। ४८॥ पुनः प्रवृद्धमिति–पुनः प्रवर्धते स्मेति कार्यं न तु भूयः प्रवृद्धमिति तस्याऽप्यव्ययत्वादनेनैव नित्यसमासत्वात्समुदायस्यैवाऽयं पर्यायो भवति। एवमुत्तरेष्वपि। अधस्पदमिति–अधःस्थाने पदमित्येव कार्यं न त्वधस्तादिति तस्याऽप्यव्ययत्वात्। ससंशयः पुरुषः अनद्धापुरुषः।

'ङस्युक्तं कृता'। ३। १। ४९॥ कृदन्तेनेति–प्रत्यासत्त्यातत्सूत्रविहितेनैव। 5 आपः प्राप्ताविति–आप् किल स्त्रीत्वमात्रनिमित्तः। स्यादिस्तु संख्याकर्मादिनिमित्तः।

'तृतीयोक्तं वा'। ३। १। ५०॥ वाशब्द इति–इह पृथग्योगादेव नित्यत्वस्य निवृत्तिर्वा शब्दस्तु नित्यसमासाधिकारनिवृत्त्यर्थ इति।

'नञ्'। ३। १। ५१॥ ननु न इत्येव निरनुबन्धः पठ्यतां किं सानुबन्धेन नञित्युपादानेन? सत्यम्। चादिषु ञकारोपदेशं स्मारयितुं ञकारो निर्दिश्यते, प्रति- 10 षेधशङ्काव्युदासार्थं च; नेत्युक्ते हि समासस्य प्रतिषेधः सम्भाव्यते। अगौरिति–नञा विशेषित आरोपितगवादिस्वरूपो गवयादिरित्यर्थः। निवर्त्यमानतद्भाव इति–निवर्त्यमानो यस्तस्योत्तरपदस्य भाव उत्तरपदप्रवृत्तिनिमित्तं गोत्वब्राह्मणत्वादि तद्वानिहाऽर्थ उत्तरपदस्यैवाऽर्थः। नञ्समासस्याऽपि निवृत्तिविशिष्टोत्तरपदार्थप्राधान्यमित्यर्थः। स चाऽयमिति–उत्तरपदार्थ इत्यर्थः। प्रतीयत इति–सर्वत्र शब्दशक्तिस्वाभाव्यादिति 15 योज्यम्। नन्विदं सूत्रं विनाऽप्यब्राह्मण इत्यादयो विशेषणमित्यनेन कर्मधारयेऽपि सेत्स्यन्ति, यतो नञ्विशेषणं ब्राह्मणो विशेष्यमिति? उच्यते–यत्र द्वौ गुणशब्दौ भवतस्तत्राऽनियमेन पूर्वनिपातः प्राप्तः, यथा–अखञ्जः, नञ् निषेधमात्रे वर्तते खञ्जशब्दोऽपि गुणमात्रे इत्यनियमेन प्राप्नोतीति वचनम्।

'पूर्वापराधरोत्तरमभिन्नेनांशिना'। ३। १। ५२॥ पूर्वः कायस्येति–पूर्वो 20 भागः कस्मान्नाभ्यादेः कस्य कायस्येति सम्बन्धाद्दिक्पञ्चमी कायशब्दान्न भवति। पूर्वं छात्राणामिति–बहुवचनाद्भेदप्रतीतिः, छात्राणां सम्बन्धिनं कस्मादपि छात्रात् पूर्वमित्यर्थः। प्रसज्यप्रतिषेधः किमिति–यद्यत्राऽभिन्नेन भवतीति पर्युदासः स्यात्तदा समाहारस्यैकत्वादत्राऽपि समासः स्यात्। भिन्नेन न भवतीति प्रसज्यप्रतिषेधे तु विज्ञायमाने समाहारद्वन्द्वस्य भेदपूर्वत्वाद्भेदनिमित्तः प्रतिषेधोऽपीति समासाभावः। अंशिनेति 25 किमिति–ननु नाभेर्यः पूर्वो भागो व्यवस्थितः कायस्य शोभनो रिक्तो वेत्याद्यर्थोऽत्र विवक्षितस्तत्र पूर्वस्य कायापेक्षत्वेनाऽसमर्थत्वादेव नाभ्या सह समासो न प्राप्तः किमंशिवर्जनेन?। सत्यम्। यद्यपि कायापेक्षत्वं पूर्वस्य तथापि प्रधानसापेक्षत्वे वृत्तिर्भवतीति।

'सायाह्लादयः' । ३ । १ । ५३ ॥ स्यतेर्घञि औणादिको वा सायशब्दो, मान्तमव्ययं वा । सायमह्न इति-ननु सायम्शब्देनाऽहरन्त उच्यते इत्युक्तार्थत्वात् सायमह्न इति विग्रहेऽहन् शब्दस्य प्रयोगो न प्राप्नोति ? सत्यम्, दिनान्ते यानि कार्याणि क्रियन्ते तान्यप्युपचारात् सायम् शब्देनोच्यन्ते; ततः सन्देहः किं कार्याण्य-
5 भिधीयत उत दिनान्त इत्यहन्शब्दः प्रयुज्यते । सूत्रसामर्थ्याद्वा तस्माच्च दिनान्त एव लभ्यते । षष्ठीसमासबाधनार्थमिति-ननु तावदिह सायंशब्दस्याऽव्ययत्वात् "तृप्तार्थ०" इति निषेधादेव भविष्यति किं तद्बाधनार्थमनेन ? उच्यते-यदाऽकारान्तः सायशब्दोऽनव्ययं नपुंसकलिङ्गस्तदा प्राप्नोति ।

'समेंऽशेऽर्धं नवा' । ३ । १ । ५४ ॥ अर्धं पिप्पल्या-इत्यत्राऽर्धशब्दस्य
10 तुल्यभागेऽर्धमिति क्लीबत्वम् । अर्धपिप्पलीति समुदायस्य तु परलिङ्गो द्वन्द्वोऽंशीति-वचनात्स्त्रीत्वमेवमुत्तरत्र । अतुल्यभागे तु ग्रामार्ध इत्यादावर्धसुदर्शनेति पुंस्त्वम् । षष्ठीसमासबाधनार्थमिति-अयमर्थः-सूत्राभावे भेदाभेदविवक्षायां प्रयोगद्वयं सिध्यति । सूत्रकृतौ तु भेदविवक्षाया मेवपक्षे षष्ठीसमासं बाधित्वा प्रयोगद्वयं सिद्धम्, अन्यथा भेदे षष्ठीसमास एव स्यात् । अर्द्धं पिप्पलीनामिति-पिप्पल्याख्यस्यांऽशिनोऽनेकद्र-
15 व्यस्वभावत्वादभिन्नत्वाभावात् समासाभावः । षष्ठीसमासस्तु भवत्येव पिप्पल्यर्धमिति । प्रकरणादिना बहुत्वस्याऽप्यवगतेर्बहुवचनान्तस्याऽपि प्रवृत्तिरविरुद्धा ।

'जरत्यादिभिः' । ३ । १ । ५५ ॥ अर्धवैशसमिति-'शसू' हिंसायाम्, विशसनं "कुत्सम्प०" विशसेव प्रज्ञाद्यण्; अर्धो वैशसस्याऽर्धमरणमित्यर्थः ।

'द्वित्रिचतुष्पूरणाग्रादय' । ३ । १ । ५६ ॥ पञ्चमं भिक्षाया इति-षष्ठी-
20 समासोऽपि वाग्रहणेन यस्यैवाऽयमंशिसमासस्तस्यैव प्राप्नोतीति न भवतीति । द्वितीयं भिक्षाणामिति-अत्र बहुत्वाद्भिक्षा भिन्ना ।

'कालो द्विगौ च मेयैः' । ३ । १ । ५७ ॥ अंशांशिनिवृत्ताविति-कालमेयै-रित्यभिनवार्थग्रहणात् । जातोत्तरपदानि मासजात इत्यादीनि बहुव्रीहावपि सिध्यन्ति । परं मासो मृतस्य मासमृत इत्यत्राऽन्यपदार्थासम्भवात् द्विगौ च द्व्यहसुप्त इत्यादा-
25 विति वचनम् । शब्दशक्तिस्वाभाव्यादिति-अन्यथा मासो जाताया इति स्त्रीत्व-विवक्षायां मासजातेत्यत्र ह्रस्वत्वं स्यात् । पूर्वपदप्राधान्याच्च पश्चादाब् न स्यात् । द्वे अहनी सुप्तस्येति-द्वे इति चाऽहनी इति च नामद्वयं सुप्तस्येति नाम्ना समस्यते ।

---

१ ३-१-८५ । २ ५-३-११४ ।

ततस्त्रिपदे समासे जाते सुप्त इत्युत्तरपदे परे " संख्या समाहारे च० " इति द्विगुसंज्ञायां द्विगुविषये द्वयोः पदयोरुत्तरपदनिमित्ते द्विगौ भाविनि त्रयाणां तत्पुरुषः, अन्यत्र प्रयोजकमिति–अन्यत्र चरितार्थमित्यर्थः । द्विगौ तु द्विवचनाद्यन्तमपि समस्यते इति भावः ।

**' स्वयंसामी क्तेन '** । ३ । १ । ५८ ॥ करणशक्तेः कर्तृशक्तेर्वा वाचकः स्वयंशब्दः । आत्मनेत्यर्थ इति–अत्र करणे कर्तरि वा तृतीया । सामिकृतमित्यत्र–" विशेषणं विशेष्येणै० " इत्यनेन कर्मधारयेणैव सिध्यति परं यदृच्छया पूर्वापरभावः स्यात्तद्बाधनार्थमिहोपादीयते ।

**' द्वितीया खट्वा क्षेपे '** । ३ । १ । ५९ ॥ क्षेपः समासार्थ इति–तत्रैव तस्य प्रसिद्धेः । नित्य एवेति–यत्तु खट्वामारूढ इति वाक्यं तत्पूर्वोत्तरपदविभागमात्रदर्शनार्थम् ।

**' कालः '** । ३ । १ । ६० ॥ कालयति भूतानि अच् । अव्याप्त्यर्थ इति–अह्नोरात्रेश्च तैर्व्याप्त्यभावात् । मासप्रमित इत्यत्र च प्रथमो दिवसः प्रतिपच्चन्द्रमसा व्याप्तो न तु समग्रो मास इत्युत्तरेण न प्राप्नोति ।

**' व्याप्तौ '** । ३ । १ । ६१ ॥ क्तेनेति निवृत्तमिति । पृथग्योगादिति शेषः । सर्वरात्रकल्याणीति–यद्यपि सर्वशब्दो न कालवृत्तिस्तथाप्युत्तरपदार्थप्रधानत्वेन समासस्य सर्वरात्र इति समुदायोऽपि कालः । मासं पूरक इति–पूरयिष्यतीति " क्रियायां क्रिया० " इति णकचि णके तु " कर्मणि कृतः " इति षष्ठी स्यात्, णकचि तु " तृन्नुदन्ता० " इति निषेधात् न ।

**' श्रितादिभिः '** । ३ । १ । ६२ ॥ यद्यपि बहुव्रीहिणैव धर्मश्रित इत्यादीनि सिध्यन्ति तथापि यत्तत्पुरुषं शास्ति तज्ज्ञापयति यत्र समासेऽर्थे विग्रहभेदात्तत्पुरुषबहुव्रीही प्राप्नुतस्तत्र तत्पुरुष एव । तेन राजसरव इत्यादौ न बहुव्रीहिः । किञ्च बहुव्रीहौ कच् स्यात् । निर्वाणगत इति–क्ते निर्वाति सुखी भवत्यत्रेत्यनटि वा ।

**' प्राप्तापन्नौ तयाच '** । ३ । १ । ६३ ॥ प्राप्ता जीविका ययेत्यादि बहुव्रीहिणाऽपि सिध्यति, प्राप्तगवीत्यादौ तु समासान्तो न स्यादिति वचनम् । स्त्रीलिङ्गार्थमिति–ह्यैकार्थ्योत्तरपदाभावात् "परतः स्त्री०" इति पुम्भावो न प्राप्नोतीत्यत्करणम् ।

**' ईषद्गुणवचनैः '** । ३ । १ । ६४ ॥ गुणं वचन्तीति रम्याद्यनटि गुणवचनाः । ईषत्पिङ्गल इति–पिङ्गत्वमस्याऽस्ति सिध्मादित्वाल्लः । न च वाच्यमीषत्पिङ्ग-

---

१ ३-१-५१ । २ ३-१-९६ । ३ ५-३-१३ । ४ २-२-८३ । ५ २-२-१० । ६ ३-२-४१ ।

श्ययोगात् पुरुषोऽपीषत् स चाऽसौ पिङ्गलश्चेति कर्मधारयेण सिध्यति। यतस्तत्र पूर्वनिपाते कामचारः। ईषच्छब्दात् क्रियाविशेषणत्वादम्। उन्नतरक्तशब्दावौणादिकौ "पुर्तेपित्त॰" इति साधू ततो गुणवचनौ। क्ते तु क्रियावचनौ स्याताम्। समासान्तराणीति—अन्यथा "नाम्नि नाम्नै॰" इत्यनुवर्तमाने कोपेन इषद्रक्त इति त्रिपदो न स्यात्।

5 'तृतीया तत्कृतैः'। ३। १। ६५॥ प्रत्ययः प्रकृत्यविनाभावीति तृतीयान्तं नामेह गृह्यते। अत एवेति—गुणवचनत्वाभावादेवेत्यर्थः।

'ऊनार्थपूर्वाद्यैः' । ३। १। ६७॥ हेत्वादाविति—आदिशब्दात्तुल्यार्थैरित्यादि। एकेन द्रव्यवत्त्वमिति—एकं च तद्द्रव्यं चेति कर्मधारये एकद्रव्यमस्याऽस्तीति कृते "एकादेः कर्मधारयात्" इतीकण् स्यादित्येवं समासः।

10 कारकं कृता'। ३। १। ६८॥ काकपेया नदीत्यादिषु निन्दा सुगमैवेति न दर्शिता। तेन सहेत्यर्थ इति—एवं शिखया परिव्राजक इतीत्थम्भूतलक्षणेऽप्यनुक्तमपि ज्ञेयम्, अनीयप्रयोगोऽपि द्रष्टव्यः।

'चतुर्थी प्रकृत्या'। ३। १। ७०॥ रन्धनाय स्थालीति—यथा यूपाद्यात्मना दार्वादि प्रतिष्ठमानं यूपादेः प्रकृतित्वेन विज्ञायते नैवं रन्धनादेः स्थाल्यादीति। मूत्राय
15 सम्पद्यत इति—यद्यप्यार्थ्या विधेयतया मूत्रस्य प्राधान्यं तथापि शाब्द्या प्रथमं यवाग्वा सह क्रियासम्बन्धः, यथा—राज्ञः पुरुष इति आर्थ्या राज्ञः प्राधान्येऽपि शाब्द्या पुरुषस्यैव।

'हितादिभिः'। ३। १। ७१॥ गोभ्यो हितमिति—आशीर्विवक्षायां तु "तद्भद्रायुष्य॰" इति चतुर्थी आशंसायां हितयोगे या चतुर्थी तदन्तस्य समासो न
20 भवति समासादाशिषोऽनवगमादिति। आत्मनेपदमिति—पचत इत्येवमादीनामात्मा स्वभावस्तदर्थं ते आते इत्यादि आत्मनेपदम्। तिवाद्यवयवापेक्षया प्रकृतिप्रत्ययसमुदायः पचतीत्यादिलक्षणः परोऽर्थस्तदर्थं तिवादिकं पदं परस्मैपदम्।

'तदर्थार्थेन'। ३। १। ७२॥ तस्याश्चतुर्थ्या अर्थो यस्येत्युष्ट्रमुखादित्वाद् व्यधिकरणो बहुव्रीहिस्ततस्तदर्थश्चाऽसावर्थश्चेति कर्मधारयः। समासस्त्विति—पित्रर्थ इ-
25 त्यादि—समासे अर्थशब्दप्रयोग इत्यर्थः।

'षष्ठ्ययत्नाच्छेषे'। ३। १। ७६॥ गमकत्वादिति—अवश्यसापेक्षत्वादित्यर्थः।

---

१ उणा॰ २०४। २ ३-१-१८। ३ ७-२-५८। ४ २-२-६६।

'कृति'। ३। १। ७७॥ चौरोज्ञासनमिति–"कर्मणि कृतः" "कर्तरि" वाऽस्य विधानात् यत्नजाया अपि षष्ठ्याः समासः।

'याजकादिभिः'। ३। १। ७८॥ कृतीत्यनेनैव सिद्धे किमर्थोऽयं योग इत्याह "कर्मजा तृचा च" इतीति। विष्यर्थश्चेति–तुल्यार्थैरिति या षष्ठी सा शैषिका न भवतीति अप्राप्तौ। 5

'सर्वपश्चादादयः'। ३। १। ८०॥ प्रतिषेधं वक्ष्यतीति–यदा सम्बन्धषष्ठी तदेत्यर्थः। तत्र सम्बन्धषष्ठीग्रहणात्। उपलक्षणमिदं तेन यदा रिरिष्टादिति षष्ठी तदाऽप्राप्ते समासः।

'अकेनक्रीडाजीवे'। ३। १। ८१॥ "कर्मजा तृचा च" इत्यस्याऽपवादस्ततश्च भनक्तीति भञ्जिका, उद्दालपुष्पाणां भञ्जिकेति कृते "कृति" इति प्राप्नोति 10 तत उत्तरेण निषेधस्तदाऽस्य सूत्रस्य फलम्। यदा तु उद्दालकपुष्पाणि भज्यन्ते यस्यां क्रीडायामिति विग्रहस्तदा निषेधाभावे कृतीत्यनेनैव सिद्धत्वादस्य न किञ्चित्फलम्। ननु भनक्तीति भञ्जिकेति कर्तरि कथं साधयन्ति यथा उद्दालकपुष्पभञ्जिकेति क्रीडानाम ततस्तस्याः कर्तृत्वं न सङ्गच्छते? उच्यते–अस्यां क्रीडायां भञ्जनक्रियाकरणादुपचारात् साऽपि कर्त्री भण्यते। 15

'न कर्तरि'। ३। १। ८२॥ अग्रगामिकेति–कृत्सगतिकारकस्येति न्यायादग्रगामिकेत्यस्याऽपि कृदन्तत्वम्।

'कर्मजा तृचा च'। ३। १। ८३॥ तच्चाऽकस्येति–तृचोऽव्यभिचारात्। क्रियाशब्दस्य त्विति–बिभर्तीति भरणक्रियामात्रमुपादाय वर्तमानस्येत्यर्थः।

'तृप्तार्थपूरणाव्ययातृशत्रानशा'। ३। १। ८५॥ ग्रामस्य पुरस्ता- 20 दिति–अव्युत्पन्नमव्ययं व्युत्पत्तौ तु "रिरिष्टा॰" इति षष्ठ्या विधानात् समासो न प्राप्नोत्येव। अध्वगानामिति–अत्राऽपि सम्बन्धे षष्ठी न निर्धारणे तस्य सतोऽप्यविवक्षा अनियमेन पूर्वनिपातः स्यादिति–"प्रथमोक्तं॰" इत्यत्र विशेषणविशेष्ययोर्द्वयोरपि प्रथमोक्तत्वात् विशेषणसमासे तु प्रधानानुयायिनो व्यवहारा इति न प्राग्निपातः।

'ज्ञानेच्छार्चार्थाधारक्तेन'। ३। १। ८६॥ सर्वत्र कर्तरि षष्ठी। सत्याधारे 25 च क्तविधानात् "क्तयोरसदाधारे" इति षष्ठ्या न निषेधः। इष्टेनेति–"तेन प्रोक्ते" इत्यतस्तृतीयाधिकारे यदुपज्ञात इत्यर्थे यथाविहितं प्रत्ययं विधत्ते तज्ज्ञापयति न वर्त-

१ २-२-८३। २ २-२-८६। ३ २-२-८२। ४ ३-१-७६। ५ २-२-९१। ६ ६-३-१८१।

माने काले विहितोऽयं क्तप्रत्ययः किन्तु भूते काले । तथा राजपूजित इत्यादावपि । तृतीया समासा इति–अत्र भूते क्तविधानात् "क्तयोरसदाधारे" इति षष्ठीनिषेधात्तृतीया समासा इत्यर्थः । कृद्योगजाया इति–कर्तृकर्मविहिताया इत्यर्थः ।

'अस्वस्थगुणैः' । ३ । १ । ८७ ॥ स्वात्मन्येवाऽवतिष्ठन्त इति–ननु द्रव्याश्रयी गुण इति गुणलक्षणं ततः कथमिदमिति ? सत्यम्, अभिधाव्यापारापेक्षया स्वस्थत्वं गुणानां यतः शौक्ल्यादि शब्दैर्धर्ममात्रमेवाऽभिधीयते । अत्राऽर्थात्प्रकरणाद्वेति–ननु शुक्लादिवर्णादेर्विशेषणं, पटस्य शुक्लो वर्ण इति ततश्च पटादेर्वर्णादिना सम्बन्धो न तद्गतेन शुक्लादिविशेषणेनेति षष्ठ्यन्तस्य समासप्राप्तिरेव नाऽस्तीत्याशङ्का । अस्वास्थ्यमस्त्येवेति–गुणग्रहणेन ये गुणा द्रव्यस्य विशेषणं भवन्ति शुक्लः पट इत्यादौ, ये च भूतपूर्वगत्या स्वाणाद्यन्ताः शौक्ल्यादयस्तेऽपि गृह्यन्ते । यतः शुक्लशौक्ल्ययोः शब्दभेदेऽपि द्वयोरपि एकमेव प्रवृत्तिनिमित्तं गुण इति, द्वावप्येकार्थावस्थौ च य एवाऽर्थः पटस्य शुक्लः स एवाऽर्थः पटस्य शौक्ल्यमिति । एवं मधुरमाधुर्यादीनामपि । नन्वनेनाऽपि व्याख्यानेन पटस्य शुक्ल इत्यादिष्वेव निषेधः प्राप्तो यतो यथा–शुक्लः पट इत्यादौ द्रव्येऽपि वृत्तिस्तथा न शौक्ल्यशब्दस्य द्रव्ये वृत्तिः, यतः शौक्ल्यशब्देन गुणमात्रमेवाऽभिधीयते न द्रव्यम् ?, उच्यते–यद्यपि शौक्ल्यशब्दो द्रव्ये न वर्तते तथापि शौक्ल्यशब्दो गुणवचनः ततो यदि स्वयं द्रव्यं वक्तुं न शक्नोति तथापि आत्मीयशुक्ललक्षणेन शब्देन यदि वादयति तर्हि भवत्येव । आत्मीयत्वं चाऽनयोर्गुणमात्रवृत्तित्वात् । यथा कश्चित्पुमान् भार्यायाः पार्श्वात्पित्रोर्भक्तिं कारयति ततो यद्यात्मना न करोति तथापि भक्तिं कुर्वन्नभिधीयन्ते एवमत्राऽपि भविष्यति । तद्विशेषैरेवाऽयमिति–तद्विशेषाश्च शुक्लादयो मधुरादयः सुरभ्यसुरभी शीतादयश्च गुणा गृह्यन्ते । तेषामेव द्रव्यविशेषणत्वसंभवात्, तेन रूपादीनां न ग्रहः । न हि ते द्रव्यस्य विशेषणं भवन्ति पटो रूपं गुडो रसः चन्दनं गन्धः स्तनः स्पर्श इति । रूपादिविशेषा ये शुक्लादयस्त एव गृह्यन्ते तेन गौरवादयः संख्यादयो वैशेषिकप्रसिद्धाश्च न गृह्यन्ते । वाङ्माधुर्यमिति–रसनेन्द्रियग्राह्य एव रसो लोके मधुरशब्दस्य रूढोऽत्र तूपचारादिति न गुडस्य माधुर्यमितिवन्निषेधः । यतो गौणमुख्यन्यायेन मुख्यो लौकिको गुणः समासाभावं प्रयोजयतीति । बहुलाधिकारादिति–ननु कण्टकस्य तैक्ष्ण्यमित्यादौ तैक्ष्ण्यं स्पर्शनेन चक्षुषाऽपि च गृह्यते ततो द्वीन्द्रियग्राह्याणां न गुणत्वं किन्त्वेकेन्द्रियग्राह्याणामेवेति वैशेषिकमतं, ततः समासः प्राप्तः । कुसुमसौरभमित्यादौ च पटस्य शौक्ल्यमितिवत्समासाभावप्रसङ्गस्तदेतदुभयं कथमित्याशङ्का ।

'सप्तमी शौण्डाद्यैः' । ३ । १ । ८८ ॥ इह गौण इति–परमार्थतो मद्यपः

शौण्ड इत्युच्यते व्यसनी तु गौणवृत्त्या । आपतनं भावे घञि, आपात आरम्भे रमणीय-आपातरमणीयः ।

'**काकाद्यैः क्षेपे**' । ३ । १ । ९० ॥ तीर्थसारमेय इति-सारो मेयोऽस्य यद्वा सरमा शुनी तस्या अपत्यं "¹चतुष्पाद्भ्य एयञ्" । अनवस्थित इति-यथा काकादिस्तीर्थफलमजानन् अचिरस्थायी भवत्येवं यो देवदत्तादिः कार्याण्यारभ्य तेष्वनिर्वाहकः स एवमुच्यते । 5

'**पात्रेसमितेत्यादयः**' । ३ । १ । ९१ ॥ गेहे क्ष्वेडीति-ञिक्ष्विदाङ् इति धातौ क्ष्विदः स्थाने क्ष्विडं केचित्पठन्ति । गेह एव क्ष्वेडते "²ग्रेहादिभ्यो णिन्" एवमग्रेतनद्वये । गेहसेव विजितमनेनेति "³ड्याप्ये क्तेन" इत्यनेन क्तप्रत्ययान्तात् यस्तद्धित इन् तदन्तस्य व्याप्ये वर्तमानात्सप्तमीविहितेति प्रथमान्तेन विग्रहः । यद्वा 10 अर्थकथनमिदं गेहे विजितीत्येव क्रियते । अवधारणेनेति-पात्रेसमिता इत्यत्र पात्रशब्देन पात्रसहचारिभोजनं लक्ष्यते ततो भोजन एव समिता मिलिताः सन्ति न कार्यान्तरे इत्यवधारणात् क्षेपो गम्यते । सप्तम्या अलुबिति-ननु पात्रेसमितेत्यादिकृत्प्रत्ययान्तेषु "⁴तत्पुरुषे कृति" इति शेषेषु तु "⁵अद् व्यञ्जनात्०" इत्यलुप् प्राप्तस्तत्किं निपाताश्रयणेन ? सत्यम्, ताभ्यां बहुलं संज्ञायां चाऽलुबुक्तेत्याह-निपा- 15 तनादिति ।

'**क्तेन**' । ३ । १ । ९२ ॥ नित्यसमासाश्चैते इति-वाक्यस्य क्रियाकारकसम्बन्धमात्रप्रत्यायकतया क्षेपप्रतिपादने सामर्थ्याभावात्समासस्यैव तत्र सामर्थ्यात् ।

'**तत्राऽहोरात्रांशम्**' । ३ । १ । ९३ ॥ पृथग्योगादिति-तत्राऽहोरात्रांशं च क्तेनेति चकारादन्यच्च नाम । तत्रेति सप्तम्यन्तमिति-सप्तमीसाधर्म्यात्त्रप् प्रत्ययोऽप्यत्र 20 सप्तमीशब्देनोक्तः । भवति हि साधर्म्यात्ताच्छब्द्यं यथा गौर्वाहीक इति ।

'**नाम्नि**' । ३ । १ । ९४ ॥ सप्तम्या अलुबिति, अरण्येतिलका इत्यादिषु-"⁶अद्व्यञ्जनात्०" इत्यनेन स्तूपेशाण इत्यादिषु तु "⁷प्राक्कारस्य०" इत्यनेन ।

'**कृत्येनावश्यके**' । ३ । १ । ९५ ॥ मासेऽवश्यमिति-"⁸यद्भावो भावलक्षणम्" इति सप्तमी मासे गते देयमिति हि मासादिभवेन देयभावो लक्ष्यत इति । 25 अथवा मासाद्येकदेशे मासादिशब्द इत्याधार एव सप्तमी । अन्यथा उपचारं विना

---

१ ६-१-८३ । २ ५-१-५३ । ३ २-२-९१ । ४ ३-२-२० । ५ ३-२-१८ । ६ ३-२-१९ । ७ २-२-१०६ ।

समग्रेऽपि मासे देयमिति यदि विवक्ष्यते तदा "कालाध्वनोर्व्याप्तौ" इति द्वितीया स्यात् । मासदेयमिति—मासस्य पूरके त्रिंशत्तमे दिने देयमित्यर्थः । अयमपि नित्यसमासो यतो न समासेऽवश्यं शब्दस्य प्रयोग इति न्यासः । "तत्पुरुषे कृति" इत्यलुप्प्राप्तौ बाहुलकात् सप्तम्या लोपः । निरनुबन्धन्यायात् क्यच्यणोर्ग्रहणाभावे मासे स्तुत्येत्यादौ न समासः ।

'विशेषणं विशेष्येणैकार्थं कर्मधारयश्च' । ३ । १ । ९६ ॥ वृत्तिरैकार्थ्यमिति—एकः साधारणोऽर्थो द्रव्यलक्षणस्तदतदात्मको यस्य तदेकार्थं तस्य भावः । शिंशपा वा भवतीति—न च वाक्येऽपि तर्हि वृक्षादिप्रयोगो न स्यादिति वाच्यम् । द्वौ द्विरदाविति वद्गतार्थस्याऽपि लोके प्रयोगदर्शनात् । यद्वा पूर्वं वृक्षप्रयोगात् सामान्यावगते-र्विशेषावगमाय शिंशपेति प्रयुज्यते । एवं च तक्षकाहिरिति—यतस्तक्षकशेषशब्दावहि-गुणादावपि वर्तेते । तक्षकः सर्प इत्यादौ तु तद्गुणविवक्षायामपि बाहुलकान्न भवति । विशेषणविशेष्यद्वयोपादानं हि बाहुलकप्रपञ्चार्थम् । प्राधान्यं च द्रव्यं शब्दानामिति—नीलादि अन्याश्रितत्वादप्रधानमुत्पलं तु तस्याऽऽश्रयत्वात्प्रधानम् उत्पलं हि द्रव्य-रूपत्वात्क्रियासिद्धये साक्षादुपयुज्यमानं प्राधान्येन विवक्ष्यते । नीलस्तु गुणत्वाद्द्रव्य-व्यवधानेन क्रियायामुपयोगादुत्पलस्य विशेषणं सम्पद्यत इति । ननु प्राधान्यं च द्रव्य-शब्दानामित्युक्तमुत्पलादयस्तु जातिशब्दास्तत्कथमित्याह—यद्यपीति । यस्तु गुणादीति—आदिशब्दाद्द्रव्यक्रिययोर्ग्रहः । क्रिया पाचक इत्यादिका दर्शितैव । द्रव्यं यथा दण्डी चाऽसौ धन्वी चाऽत्राऽपि पूर्वनिपाते कामचारः । पदयोरप्रधानत्वादिति—द्रव्यव्यवधानेन क्रियामुपयोगात् । पूर्वोत्तरेति—रविपरिवर्तनसंयोगेन दिश उच्यन्ते, अतोऽत्राऽपि गुणः प्रवृत्तिनिमित्तम् । पूर्वदक्षिणा विदिगिति—विदिगित्युपलक्षणं तत्सम्बन्धिन्यन्यत्राऽपि देशादौ भवति । जातिशब्दानामिति—यद्येवं कथं कृष्णसर्पशब्दयोः सामानाधिकरण्यं द्वयोरेव तयोर्जातिविशेषवाचकत्वादिति । समावेशार्थ इति—यदि च चकारस्तत्पुरुष इत्यस्याऽनुकर्षणार्थ इत्युच्येत तदा चाऽनुकृष्टं नोत्तरत्र इति विज्ञायेत ।

'पूर्वकालैकसर्वजरत्पुराणनवकेवलम्' । ३ । १ । ९७ ॥ पूर्वकालेत्यस्य कृतद्वन्द्वैरेकादिभिर्द्वन्द्वः । यदि पुनरेकादिभिरकृतद्वन्द्वैः पूर्वकालेत्यस्य द्वन्द्वः क्रियेत तदैकशब्दस्य स्वराद्यदन्तत्वात् पूर्वनिपातः स्यात्तथा च सर्वेषामेकरूपतायां स्वरूप-ग्रहणे पूर्वकालेत्यर्थनिर्देश इति यद्वक्ष्यते तदुपपन्नं स्यात् । मतीकृतेति—मतमस्या अस्तीति मतिनी क्षेत्रभूमिः । अमतिनी मतिनी कृतेति च्वौ पुंवद्भावे दीर्घत्वे च मतीकृता । अथवा मतं लोष्टमर्दनकाष्ठं तदस्याऽस्ति अभ्रादित्वादप्रत्ययः, ततोऽमता

---

१ २–२–४२ । २ ३–२–२० ।

मता कृतेति । अद्रव्यशब्दत्वादिति क्रियाशब्दत्वादिति शेषः । एतच्चोपलक्षणमेका- दीनामपि, यदा क्रियाशब्देन गुणशब्देन वा सामानाधिकरण्यं तदा पूर्वेण समासे खञ्जकुण्टादिवत्पूर्वनिपातस्यानियमः स्यादुभयोरपि पूर्वोत्तरशब्दयोर्विशेषणत्वादिति ।

'दिगधिकं संज्ञातद्धितोत्तरपदे'। ३ । १ । ९८ ॥ दिग्वाचीति–एतदपि च न दिश्येव वर्तमानमपि तु तद्द्वारेण जनपदादौ च वस्त्वन्तर इति अर्थप्रधानो निर्देशः। 5 संज्ञायां तद्धिते चेति–एकाऽपि सप्तम्युत्पन्ना विषयभेदाद्यथालक्ष्यं भिद्यत इति। विग्रह- वाक्यमिति–विभिन्नं गृह्यतेऽनेनाऽस्मिन् वा बाहुलकात् "[1]पुंन्नाम्नि घः"। विग्रहं च तद्वाक्यं च विग्रहवाक्यम् । अथवा विग्रहणं विग्रहस्तस्य वाक्यम् । पूर्वगवीप्रिय इति– मतान्तरेणेदमुदाहरणं स्वमते तु अणाद्यन्तान्नाम्नो ङीरुक्ता । अत्र तु पूर्वगवी इत्येवं- रूपस्य नामत्वे पूर्वगवीत्यस्य नामत्वाभावे ङीर्न स्यात् । 10

'संख्यासमाहारे च द्विगुश्चानाम्न्ययम्'। ३ । १ । ९९ ॥ पञ्चाम्रा इति–सन्निवेशादिविशेषविशिष्टानां पञ्चानामाम्राणामियं संज्ञा । फलित एकः पञ्चाम्र इति–समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्त इति बहुसंख्याक आम्राद्यभिधा- यकोऽपि पञ्चाम्रादिशब्द एकस्मिन्नप्याम्रादौ प्रयुज्यत इति । पञ्चनावप्रिय इति–मता- न्तरेऽपि बाहुलकाद्धाधन्ते स्वार्थिकाः क्वचिदित्यतो वा ङीर्न, स्वमते तु अणन्तान्ना- 15 म्नो विहितेति न प्राप्नोत्येव । द्व्यह्नजातः–त्रिमासजात इत्याद्यर्थमुत्तरपदग्रहणं कर्त- व्यमेवाऽन्यथा द्विगुविषयाभावात् "[2]कालो द्विगौ च मेयैः" इति समासाप्रवृत्तौ उत्त- रपदाभावादस्य सूत्रस्याऽप्रवृत्तिः स्यादतो न वाच्यं तद्धितविषयेऽप्येषु समासो भवि- ष्यतीति । पञ्चानां पूलानां समाहार इति–समाहारः समूह इति सामूहिकप्रत्ययो न । समासेनैव तस्योक्तत्वात् । ननु समाहारसमूहयोरेकार्थत्वात्तद्धित इत्येव समासो 20 भविता किं समाहारग्रहणेन ? अथ तद्धितोत्पत्तिः प्राप्नोतीति चेत्, उत्पद्यतां द्विगु- त्वात् "[3]द्विगोरनपत्ये०" इति लुब् भविष्यतीति न काचिद्धानिरिति, सत्यम्; पञ्च- कुमारि इत्यादौ "[4]ङ्यादेर्गौणस्य०" इति ङ्यादेर्लोपः स्यात् । पञ्चगवमिति–"[5]वाञ्ज- लेरलुकः" इत्यधिकृते "[6]गोस्तत्पुरुषात्" इत्यट् न स्यात् । अर्धपञ्चमपूलीति–संज्ञा- तद्धितोत्तरपदेषु नित्यसमासः । समाहारे तु विकल्पस्तत्र वाक्यमपि हि भवति । अ- 25 र्धपञ्चमात्पञ्चपूलानां समाहार इति । समावेशार्थ इति–तेन गोस्तत्पुरुषात्पञ्चसर्वविश्वा- दित्यादि सिद्धम् । अयं ग्रहणमिति–यद्ययमिति सूत्रांशो न स्यात्ततो यथा कर्म- धारयश्चेत्यनुवर्तते तथा द्विगुश्चेत्यप्युत्तरत्राऽनुवर्तेतेति वक्ष्यमाणा अपि समासा

---

१ ५–३–१३० । २ ३–१–५७ । ३ ६–१–२४ । ४ २–४–९५ । ५ ७–३–१०१ । ६ ७–३–१०५ ।

द्विगुसंज्ञाः स्युः ततः परमा नौः परमनौरिति " नावः " इति समासान्तः स्यात् । समाहारे दिक् शब्दो न समस्यते ।

' निन्द्यं कुत्सनैरपापाद्यैः ' । ३ । १ । १०० ॥ कुत्सितो ब्राह्मण इति–नहि ब्राह्मणः कुत्सनवचनः । अपि तु कुत्स्य एवेति व्यावृत्तिबलान्न समासः । ब्राह्मण-
5 श्चाऽसौ कुत्सितश्चेत्यपि कृते कुत्सितशब्दस्य पापाद्यङ्गीकारादनेनाऽपि समासो न ।

' उपमानं सामान्यैः ' । ३ । १ । १०१ ॥ नियमार्थमिति–शस्त्रीश्यामेत्यादावपि गुणमुपादाय प्रवर्तमानेन शस्त्र्यादिना श्यामादेर्विशेषणाच्छ्यामशस्त्रीत्युक्तेऽपि साधारणधर्मप्रतीत्यभावादुपमानस्य समासे पूर्वनिपाते च सिद्धे विधिरारभ्यमाणो विध्यसम्भवान्नियमार्थो भवति ।

10 ' उपमेयं व्याघ्राद्यैः साम्यानुक्तौ ' । ३ । १ । १०२ ॥ शब्दः प्रयुज्यत इति–यदा प्रकरणादिवशान्नियतसाधारणगुणप्रतिपत्तौ व्याघ्रादिशब्दः शौर्यादौ पुरुषार्थे एव वर्तते तदा साम्यानुक्तौ सामानाधिकरण्ये सति समासो भवति । यदा तु गुणान्तरव्यवच्छेदाय विशिष्टसाधारणगुणप्रतिपत्तये शूरादिशब्दप्रयोगस्तदा साम्यानुक्तिग्रहणात्समासाभावः । पुरुषव्याघ्रः शूर इति–नन्वत्र व्याघ्रपदस्य शूरपदापेक्षया-
15 ऽपि समासो न भविष्यति किं प्रतिषेधेनेत्याह–इदमेव चेति ।

' पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीरम् ' । ३ । १ । १०३ ॥ पूर्वपुरुष इत्यादि–दिग्वाचकत्वेऽपि सूत्रोपादानसामर्थ्यात् समासः । न तु दिगधिकमित्यनेन निषेधः । पूर्वपटुरिति–पूर्वशब्दो दिग्योगेन कालयोगेन वा द्रव्यं विशिनष्टि, पटुशब्दश्च पटुत्वेन । तत्र विशेषणसमासे द्वयोरपि गुणवचनत्वेन विशेषणत्वात् खञ्ज-
20 कुण्टादिवदनियमेन पूर्वनिपातः स्यात् ।

' श्रेण्यादि कृताद्यैश्च्व्यर्थे ' । ३ । १ । १०४ ॥ एकशिल्पपण्यजीविनां सङ्घः श्रेणिः । च्व्यर्थे गम्यमान इति–यद्यप्युत्तरपदार्थप्रधानोऽयं समासस्तथाप्युपसर्जनतया च्व्यर्थोऽपि प्रतीयते । उपसर्जनमपि ह्यर्थो भवति ।

ऊकेति–अवतेः " [2]विचिपुपि० " इति कित्कः । कन्दुं स्वेदनिकां मिमीते डे
25 कन्दुमः कान्दविकः । ब्राह्मण इति–ब्रह्म अणतीति कर्मणोऽणि पृषोदरादित्वादकारलोपे दीर्घत्वे च । यत्र सामर्थ्यमिति–अथ चपलापाकृता इत्यादौ चपलादीनां च्व्यर्थवृत्तीनामपाकृतादिभिः सामर्थ्याभावात्कथं समास इत्याशङ्का । श्रेणिकृता इत्यादाविति–नन्वत्राऽपि विशेषणविशेष्यभावोऽस्ति यतः कृताः के कर्मतापन्नाः श्रेणय-

---

१ ७–३–१०४ । २ उणा० २२ ।

स्तन्न वक्तव्यं, यतो नहि श्रेणय एवंविधं विशेषणं किन्तु अश्रेणयः श्रेणय इति पश्चात् श्रेणय इत्युक्तेऽश्रेणय इत्यपेक्षते इति श्रेणय इति विशेषणं न भवत्येव; किन्तु करण-क्रियापेक्षया कारकमेवेति क्रियाकारकसम्बन्ध एव। यतो यथा नीलोत्पलमिति नील एवंविध एव विशेषणशब्दोऽस्ति तथाऽत्र श्रेणय एवंविधो न यतोऽश्रेणय इत्यपेक्षत इति।

**'क्तं नञादिभिन्नैः'**। ३। १। १०५॥ नहि नञादयः पठ्यन्ते इत्यादि शब्दः प्रकारवाचीत्याह—नञादयो नञप्रकारा इति। कर्तव्यमकर्तव्यं अकर्तव्यं कर्तव्यं चेति, उभयत्राऽपि विशेषणसमासो भवत्येव। 5

नञादिभिन्नैरिति किमिति—अन्यथा भिन्नैरित्येवोच्येत। कृताकृतादिष्विति—ननु नञादेरपठितत्वान्नञोऽव्ययत्वात्तदादिग्रहणे प्रशब्दस्याऽव्ययस्य कुतो न ग्रहणं येनाऽपादय एव दर्श्यन्ते इत्याह—अपादय इति। 10

अवयवधर्मेणेति—अयमर्थः—एकमनेकावयवं भवतीत्येकस्याऽवयवस्य कृतत्वाद-वयवावयविनोः कथञ्चिदभेदात्तदेकं कृतमुच्यते, अवयवान्तरस्य त्वकृतत्वादकृतमित्ये-कस्य कृतत्वाकृतत्वयोः सम्भवादैकार्थ्यात्कृताकृतव्यपदेशो युज्यत इत्यर्थः।

**'सेट्नाऽनिटा'**। ३। १ १०६॥ उपलक्षमिति—तेन सविकारमविकारेण न समस्यते इत्यपि सिद्धम्। 15

**'सन्महत्परमोत्तमोत्कृष्टं पूजायाम्'**। ३। १। १०७॥ उत्तमपुरुष इति—उत्ताम्यतीत्यचि उत्तमः। उद्गतार्थवृत्तेरुच्छब्दात्तमप्। द्रव्यप्रकर्षवृत्तित्वाच्चाऽम्भावाभावः।

**'वृन्दारकनागकुञ्जरैः'**। ३। १। १०८॥ वृन्दारकादीनामिति—ननु वृन्दा-रकादयो जातिशब्दा न ते सदादिवत्पूजावचनाः कथं तैः समासे पूजा गम्यत इत्याह- 20 उपमानादिति। अयमर्थः—वृन्दारकादिगताः केचित्पूजानिमित्ता गुणाः स्वप्रवृत्ति-निमित्तैकार्थसमवायितया वृन्दारकादिशब्दैरुच्यन्ते। एवं वृन्दारकादिगुणप्रतिपादनपरे प्रयोगे उपमानगत्या पूजा गम्यत इत्यर्थः। सुसीमो नाग इति—अत्र सुसीमः संज्ञा-शब्दस्तस्य नागेनाऽभिधेयं परिच्छिद्यते न तु पूजा प्रतिपाद्यत इत्याह—नाऽत्रेत्यादि। इदं तु पूर्वैर्दर्शितत्वाद्दर्शितं, परमार्थतस्तु नेदं प्रत्युदाहरणम्। यदुपाध्यायः—सुसीमो 25 नाग इति त्वनागस्य सुसीमत्वाभावात् सुसीमस्य नागविशेषसंज्ञत्वाद्विशेषणविशेष्य-त्वाभावान्न प्रत्युदाहरणमिति। अत एव द्वितीयं प्रत्युदाह्रियते देवदत्तो नाग इव मूर्ख इति, हस्तीव मूर्ख इत्यर्थः। अत्रोपमानेनाऽपि निन्दैव गम्यते न पूजा। कुञ्जरशब्दस्य तु व्याघ्रादिपाठे प्रयोजनं चिन्त्यम्।

'कतरकतमौ जातिप्रश्ने' । ३ । १ । १०९ ॥ कतमगार्ग्य इति–कठ इत्यादि चरणं गार्ग्य इत्यादि गोत्रं, ततो गोत्रं च चरणैः सहेति जातिः । कुण्डलीती–ज्योत्स्नाद्यण्प्राप्तौ "शिखादिभ्य इन्" ।

'पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यायकधूर्त्तप्रशंसारूढैर्जातिः' ३ । १ । १११ ॥ वृन्दारकयुवतिरिति–अत्र "वृन्दारकनागकुञ्जरैः" इति बाधित्वा परत्वादयमेव विधिः । अग्निस्तोकमिति–स्तोचनं भावे घञि न्यङ्क्वादित्वात्कत्वे स्तोकः । सोऽस्याऽस्तीत्यर्शआद्यच्प्रत्यये स्तोकम् । भिन्नलिङ्गयोरपि सामानाधिकरण्यं वरं विरोध इतिवत् । सामान्यविशेषभावेनाऽयं प्रयोगः तेनाऽग्निस्तोक इत्यपि । वेहदिति–विहन्ति गर्भमिति "संश्चत्०" इति निपातः । बष्कयणीति–बस्कतेरचि पृषोदरादित्वात् "निष्कतुरुष्क०" इति वा बष्का तां यातीति ये बष्कयः प्रौढवत्साः, सोऽस्या अस्ति । तदाश्रयकुत्सायामिति–न चाऽत्र कठप्रोक्तग्रन्थाध्येतृत्वं वेदितृत्वं वा कठशब्दप्रवृत्तिनिमित्तं तेन कुत्स्यते किं तर्हि प्रवृत्तिनिमित्तावच्छिन्नमभिधेयम् । प्रशंसायामिति–असति तु रूढग्रहणे जातिगुणशब्दा अपि परं स्तोतुमुपादीयमानाः प्रशंसायां वर्त्तन्त इति तेऽपि गृह्येरन् । आविष्टलिङ्गा इति–उपलक्षणत्वादाविष्टवचनाश्च तेन तातश्च ते पादाश्चेति सिद्धम् । आविष्टं आगृहीतमपरित्यक्तं स्वं लिङ्गं यैः । लिङ्गान्तरसम्बन्धेऽपि न विशेष्यलिङ्गमुपाददते । मतल्लिकेति–मया लक्ष्म्या तल्लातीति "कुशिक०" इति निपातः । मचर्चिकेति–मां लक्ष्मीं चर्चयतीति ण्वुले "ङ्यापो०" वा इति ह्रस्वत्वे । प्रकाण्डमिति–प्रकृष्टतया कण्यते "कण्यणि०" इति णिडे । रूढग्रहणादिति–रूढग्रहणस्योक्तरूपमतल्लिकादिपरिग्राहकत्वाद्रमणीयशोभनशब्दयोश्च रमणीयत्वादिगुणमुपादाय प्रशंसायां वर्तमानत्वादाभ्यां जातिर्न समस्यत इति ।

'चतुष्पाद्गर्भिण्या' । ३ । १ । ११२ ॥ ब्राह्मणी गार्भिणीति–समासे हि सति ब्राह्मणीशब्दस्य पुंवद्भावः स्यात् । संज्ञाशब्दाविमाविति–एतौ चतुष्पादमाहतुर्न तु जातिम् ।

'युवा खलतिपलितजरद्वलिनैः' । ३ । १ । ११३ ॥ युवजरन्नित्यत्र जरत्युत्साहादियुवधर्मोपलम्भात् यूनि चाऽऽलस्यादिजरद्धर्मोपलम्भात् तद्रूपारोपात्सामानाधिकरण्यम् । विशेषणत्वादिति–विशेष्यो युवा शब्दोऽनया रीत्या युवत्वमग्रेऽपि प्रसिद्धम्, ततो युवशब्देन पुरुष एवाऽभिप्राप्ते । ततस्तस्य खलतीति विशेषणं ततः परनिपाते प्राप्ते । अथवा द्वयोरपि गुणवचनत्वं तदा युवत्वमप्रसिद्धं ततो युवशब्देन

१ ७-२-४ । २ उणा० ८८२ । ३ उणा० २६ । ४ उणा० ४५ । ५ २-४-९९ ।

युवत्वविशिष्टो नरोऽभिधीयते, खलतिशब्देनाऽपि स एवाऽभिधीयते, ततो गुणवचनत्वात् कामचारेण पूर्वनिपाते प्राप्ते पूर्वनिपातार्थं वचनमिति ।

'**कृत्यतुल्याख्यमजात्या**' । ३ । १ । ११४ ॥ आख्याग्रहणाद्ये पदान्तरनिरपेक्षास्तुल्यमर्थमाचक्षते इह ते गृह्यन्ते, समसदृशतुल्यप्रभृतयो न तु ये पदान्तरसान्निध्येन यथाऽग्निर्माणवक इति । अत्राऽपि तुल्यता प्रतीयते । परार्थे प्रयुज्यमानाः 5 शब्दाः सादृश्यं गमयन्तीति । न त्वत्र तुल्यता पदार्थ इति । लवणमिति-नन्द्याद्यनो गणपाठात् णत्वं च। भोज्य ओदन इति-ओदनत्वलक्षणाया जातेरोदनशब्दो वाचकः।

'**कुमारः श्रमणादिना**' । ३ । १ । ११५ ॥ ननु कुमारशब्दस्य पुंलिङ्गस्य निर्देशात् कथमत्र स्त्रीलिङ्गस्य समास इत्याह-नामग्रहणे इत्यादि । हिशब्दोऽत्र यस्मादर्थे । यद्येवं नामग्रहणपरिभाषयैव स्त्रीलिङ्गेऽपि समासस्य सिद्धत्वात् किमर्थं स्त्रीलि- 10 ङ्गानां श्रमणादीनां पाठ इत्याह-श्रमणादीनामित्यादि ।

'**मयूरव्यंसकेत्यादयः**' । ३ । १ । ११६ ॥ तत्पुरुषसमासा इति-कर्मधारयसमासा इत्यपि द्रष्टव्यम् । अंशण् समाघः । व्यंसयतीति-मतान्तरेण दन्त्ये । मयूरव्यंस इति-यो लुब्धकानां मयूरो गृहीतशिक्षो भवति, अन्यानन्यान् मयूरान् छलयति स उच्यते, तद्रूपेण लोकस्याऽपि वञ्चकः । व्यंसको विशेषणं मयूरो विशे- 15 ष्यमिति विशेषणसमासे प्राप्ते मयूरव्यंसक इत्ययं समास इति दर्शयति । कम्बोजमुण्ड इति-कम्बश्चाऽसौ जश्च बाहुलकाद्विभक्तेरलुप् । मुण्डनं मुण्डः, सोऽस्तीत्यभ्राद्यः । कम्बोजयवनशब्दाभ्यामपत्ये "राष्ट्रक्षत्रियात्०" इत्यञः, "शकादिभ्यो०" इति लोपः । एवं च गोत्रं च चरणैः सहेति जातित्वमनयोरित्यत्राऽपि गुणशब्दस्य पूर्वनिपाते प्राप्ते जातिशब्दस्य पूर्वनिपातार्थोऽयमारम्भः । कपर्द इति-पर्दतेरचि कुत्सितः 20 पर्दः पृषोदरादित्वात्कुशब्दस्य कभावे । उन्मृजावमृजेति-आख्यातयोः क्रियासातत्ये समासस्य वक्ष्यमाणत्वादसातत्यार्थोऽयमारम्भः । बहुव्रीहौ कच्प्रत्ययप्रसङ्गः स्यात् । मोदतेति-आत्मनेपदस्याऽनित्यत्वात् परस्मैपदम्, विकल्पणिजन्ताद्वा । जोडमिति-'जुडण्' प्रेरणे इत्यतोऽचि जोडो दासः । प्रोष्यपापीयानिति-प्रवसतेः क्त्विं यबादेशे य्वृति "घस्वसः" इति षत्वे । निषद्यश्याऽमान्तेषु स्नात्वा कालकादिष्वैकार्थ्या- 25 भावाद् "अव्ययं प्रवृद्धादिभिः" इति नियमात् क्त्वाप्रत्ययस्याऽव्ययस्य समासाप्राप्तावनेनाऽयं समासो निपात्यते । निषण्णश्यामेति-"विशेषणं०" इति समासे पूर्वनिपातेऽनियमः स्यात् ।

१ ६-१-११४ । २ ६-१-१२० । ३ २-३-३६ । ४ ३-१-४८ । ५ ३-१-९६ ।

अकिञ्चनमिति-नञः स्याद्यन्तेन समास आरभ्यमाणः समुदायस्यानामत्वात् स्याद्यन्तत्वाभावात् नञ्समासाप्रवृत्तावनेन समासः ।

कुतपवस्त्र इति-छागरोममयं केचित्कम्बलं कुतपं विदुस्तद्वस्त्रं यस्य । सर्वं निपातनात्सिद्धमिति-निपात्यन्ते-गम्यन्तेऽनुरूपाण्यविहितान्यपि लक्षणान्यस्मिन्निति निपातनम् । सूत्रे लक्ष्यस्य स्वरूपेणोपादानमिति ।

'चार्थे द्वन्द्वः सहोक्तौ' । ३ । १ । ११७ ॥ एकग्रहणादिति-तद्ध्यनेकस्य पूर्वनिपातप्रसक्तावेकस्य पूर्वनिपातनियमार्थं, द्वयोश्च द्वन्द्वेऽनेकस्य पूर्वनिपातप्रसङ्गाभावादेकग्रहणमनर्थकं स्यात् । यद्वा नाम नाम्नेति व्यक्तिपदार्थो नाऽऽश्रीयतेऽपि तु जातिः । अनुवृत्तस्य हि रूपस्य यथा लक्ष्यानुग्रहो भवति तथाऽर्थकल्पना क्रियते इति बहूनामप्ययं समासः । इत्येव स्यादिति-पूर्वपदस्योत्तरपदे प्रत्येकं "आद्वन्द्वे" इत्याकारः स्यादित्यर्थः । ग्रामो ग्राम इति-अत्र वीप्सायां सहोक्तिसद्भावेऽपि चार्थाभावाद् द्वन्द्वाभावः । सहोक्ताविति-यत्र समासे द्वयोर्धर्मयोर्धर्मिणोर्वा भिन्नयोः प्राधान्यं विवेद्यते सा सहोक्तिः । कर्मधारये तु धर्मिण आश्रयस्यैव प्राधान्यात्तस्य चैकत्वं, अतः खञ्जकुण्टादौ न सहोक्तिः । प्लक्षश्च न्यग्रोधश्च वीक्ष्यतामिति-पूर्वत्रेत्थं सम्बन्धः । इतरेतरयोगे तिष्ठतः कस्कः, प्लक्षश्च न्यग्रोधश्च, समाहारे तु प्लक्षश्च न्यग्रोधश्चेति समुदायस्तिष्ठति । तत्रैकमर्थं प्रतीत्यादि-अर्थः क्रियाकारकद्रव्यरूपः । द्व्यादीनां क्रियाकारकद्रव्यगुणानामिति-तत्रैकस्मिन् कारकेऽनेकक्रियाणामेकस्यां क्रियायामनेककारकाणामेकस्मिन् द्रव्येऽनेकद्रव्याणामेकस्मिन् कारकेऽनेकद्रव्याणामेकस्मिन् धर्मिण्यनेकधर्माणां ढौकनं समुच्चय इति । यथा चैत्रः पचति च पठति चेत्यादिषु यथाक्रमं दर्शयति । एकमर्थं प्रति द्व्यादीनामात्मरूपभेदेन चीयमानता समुच्चय इत्येव लक्षणमन्यस्तस्यैव प्रपञ्चः । अन्वाचयोऽप्येवंविध इति-इयता तु भिद्यते यत्समुच्चये समुच्चीयमानानाः क्रियाकारकादिविशेषाः सर्वे तुल्यकक्षाः । अन्वाचये तु एकस्य गुणभावोऽन्यस्य प्रधानभावस्तद्यथा "रुधां स्वराच्छ्नो नलुक् च" इति । अत्र हि विधीयमानं श्नं नलोपोऽपेक्षते, यत्र श्नस्तत्र नलोपो, यथा 'भञ्जोंप्' आमर्दने-भनक्ति । श्नस्तु नलोपं नाऽपेक्षते तदभावेऽपि प्रवृत्तेर्यथा युनक्तीति । परस्परसव्यपेक्षाणामिति-एतावता चादीनां द्योतकानां व्युदासः । सहोक्त्यभावादिति-ननु समुच्चयान्वाचययोः सामर्थ्याभावादेव समासो न भविष्यति, किं सहोक्तिग्रहणेन ? तथाहि-परस्परानपेक्षाणामनियतक्रमयौगपद्यानां क्रियाकारकादीनां समुच्चयो दृश्यते । यथा गामश्वमित्यत्र नयनक्रियायां गवादीनाम् ।

---

१ ३-४-८२ ।

अन्वाचयेऽपि गौणस्य प्रधानं प्रत्यपेक्षा न प्रधानस्य गौणं प्रतीति तत्राऽपि सामर्थ्या-भावः, नैष दोषः; यतः कारकाणि क्रिययोपश्लिष्यन्ते न परस्परेण क्रिया चौपश्ले-षिका समुच्चयान्वाचययोरपि सम्भवति तत्कथं समुच्चयेऽन्वाचये वाऽसमर्थानि नामानि स्युः। परस्परापेक्षा त्वविद्यमानाऽपि न सामर्थ्यस्य विघातिका। सा हि न श्रौती किन्तु वाक्यप्रकरणादिसमधिगम्या। तत्कथं श्रौतस्य सामर्थ्यस्य सम्भवे विपरीतस्य 5 सामर्थ्यस्याऽसम्भवः समासाप्रवृत्तौ निमित्तमिति सहोक्तिग्रहणमिति। यद्वर्तिपदैरि-त्यादि—अयमर्थः युगपद्द्वन्द्ववाच्यं समुदायरूपं यदोच्यते तदा द्वन्द्वो भवति। गामश्व-मित्यादौ तु परस्परं निरपेक्षाः स्वतन्त्रा गवादयो भिन्नैरेव शब्दैः पृथक् प्रत्याय्यन्त इति युगपद्वाचित्वाभावाद् द्वन्द्वाभाव इति। प्लक्षोऽपि द्व्यर्थ इति—नन्वत्र प्लक्षन्यग्रोधा-विति शब्दक्रमात् क्रमवदर्थानुगमात् न सम्भवत्येव, एकैकेनाऽनेकस्याऽभिधानम्, न; 10 तर्हि द्विवचनबहुवचनानुपपत्तिः। प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधा इति। यतः प्लक्षशब्दः स्वार्थको निवृत्तोऽन्यो न्यग्रोधशब्द उपस्थितः। तत्र न्यग्रोधार्थप्रतिपत्तिकाले यदि प्लक्षार्थस्याऽवगतिर्न स्यात्तदा न्यग्रोधशब्दादेकार्थत्वादेकवचनं स्यात्तस्माद् द्विवचन-बहुवचनान्यथानुपपत्त्या प्लक्षन्यग्रोधावित्यादावेकैकोऽनेकार्थाभिधायीत्यभ्युपगन्तव्यम्। ततश्च एकैकेन युगपदनेकस्याऽर्थस्याऽभिधानात् प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थ 15 इत्याह—प्लक्षन्यग्रोधावित्यत्रेत्यादि। नन्वेवं तर्हि प्लक्षश्च न्यग्रोधश्चेत्येकवचनान्तयो-र्वाक्यं वृत्तौ प्रदर्शितं द्विवचनान्तयोर्हि न्याय्यम्?, सत्यम्; लौकिकमेतद्वाक्यं न प्रक्रियावाक्यम्। यदा तु परस्परशक्त्यनुप्रवेशेन द्वन्द्वो भविष्यतीत्यभिधित्सयाऽति-वाहिकशरीरस्थानीयं वाक्यं क्रियते तथा खल्वलौकिकं समीपगतपदान्तरवस्तुख-चितं द्विवचनान्तयोर्वाक्यं क्रियते। यद्वाऽवश्यं सति प्रदर्शयितव्ये वरमेवं वाक्यं धवौ 20 च खदिरौ चेति। अलौकिकत्वाच्च वृत्तौ न प्रदर्शितम्। न चैवं प्लक्षन्यग्रोधयोर्द्विक-द्वयसंकल्पनेनाऽनेकार्थत्वाद्बहुवचनं प्राप्नोतीति वाच्यम्। यतो नाऽत्र चत्वारोऽर्थाः। किं तर्हि? द्वावेवाऽर्थौ यकाभ्यामेवाऽत्रैकः शब्दो द्व्यर्थस्ताभ्यामपरोऽपि, नहि द्वाभ्यां लक्षाभ्यामविभक्तिकौ भ्रातरौ चतुर्लक्षौ भवतः। समुदायरूपो हि द्वन्द्वार्थः प्रत्यवयवमवयविवत्प्रतिसंक्रान्त इति। यथा वनविटपिविलोकने वनं विलोकितमि- 25 त्येकैकस्तथारूपप्रतिभासभाग्भवति। तदुक्तं "अनुस्यते च भेदाभ्यामेका प्रख्योप-जायते। यद्वा सह विवक्षायां, तामाहुर्द्वन्द्वशेषयोः॥ १॥" इति। ननु लौकिकात् प्रयोगात् शब्दानामर्थावधारणं तत्र यथा घटशब्दः पटार्थं न प्रत्याययति, तथा प्लक्ष-न्यग्रोधशब्दौ परस्परार्थस्य प्रत्यायकौ न युक्तौ?, न; प्लक्षशब्दस्य न्यग्रोधार्थत्वान्न्य-ग्रोधस्य च प्लक्षार्थत्वात् स्वार्थस्यैवाऽभिधानान्नैतयोरर्थान्तराभिधायित्वं, लोकप्रसिद्ध्या 30 त्वर्थान्तराभिधायित्वमुच्यते। वृत्तिविषये त्वेकैकस्य द्वावर्थाविति स्वार्थावेवैतौ। ननु

परस्परसन्निधानेन यद्द्वयोः सामर्थ्यमाहितं तदन्यतरविगमेऽपि न हीयते वह्नि-
निवृत्तावपि वह्निसम्पादितपाकजरूपादिवदिति प्लक्षेणोक्तत्वान्न्यग्रोधस्याऽप्रयोगः
प्राप्नोति ?, नैवम्; न्यग्रोधार्थस्य प्लक्षेणाऽनुक्तत्वात् न्यग्रोधशब्दप्रयोगः। उक्तं ह्येतत्
द्वन्द्वावयवानामेवाऽनेकार्थाभिधायित्वं न केवलानां, यथा वह्निसन्निधावेव ताम्रं द्रव-
5 रूपं भवति, न तु तद्विनिवृत्ताविति। एवमिहाऽपि सहभूतावेवाऽन्योन्यस्यार्थमाहतुर्न
तु पृथग्भूतौ भारोद्वाहकवत्सहभूतानां परस्परशक्त्याविर्भावादिति। ततश्च प्लक्षस्य
न्यग्रोधस्य चाऽनेकार्थत्वे यद्यपि बहुत्वं प्राप्तं तथापि द्वन्द्वावयवत्वेन बाह्यमतो गौणं
न तु मुख्यमिति न बहुवचनम्। सहोक्तिरिति—नन्वस्तु यथाकथञ्चित्सहोक्तिः समा-
हारे तु न सम्भवति तस्यैकत्वात् सहोक्तेश्च भेदनिबन्धनत्वादिति ?, उच्यते—समाहारो
10 हि सङ्घातः, स च संहन्यमानानां धर्मः; संहन्यमानाश्च सहोच्यमाना एव न
पृथगुच्यमाना इति तत्राऽपि सहोक्तिसम्भव इत्यदोषः। एकविंशतिरित्यादि—नन्वेक-
विंशतिरित्यादि संख्याद्वन्द्वो यद्यवयवप्रधानस्तदैकविंशतिरिति द्विवचनं प्राप्नोति
द्वाविंशतिरिति बहुवचनम्। अथ समुदायप्रधानस्तदा नपुंसकत्वं स्यादित्याशङ्का।

'**समानामर्थेनैकः शेषः**'। ३। १। ११८॥ समानामिति निर्धारणष-
15 ष्ठ्यन्तं समुदायिसमुदायसम्बन्धषष्ठ्यन्तं वा न तु स्थानषष्ठ्यन्तम्। तत्र हि समानां
स्थाने एकः शिष्यत इत्येक आदेशो भवतीति। अविशेषेऽपि यस्तदभिधाने समर्थः
स एव तेषामन्यतमः स्यात्ततश्च विसे विसानीति कृतसकारस्य षत्वं स्यादिति। निर्धा-
रणषष्ठ्यां तु समानामित्येकसंख्याकः समानार्थो विशिष्यते। समुदायिसमुदायसम्बन्ध-
षष्ठ्या च समानार्थारब्धे समुदाये समानार्थ एवाऽवयवो विशिष्यत इत्यदोषः। ननु जातिः
20 शब्देनाऽभिधीयते, सा चैका ततो बहूनां प्रयोगाप्राप्तौ नाऽर्थ एक शेषेण; न,
प्रत्यर्थं शब्दनिवेशाद् द्रव्यं द्रव्यं प्रति शब्दप्रयोगादेकेन शब्देनाऽनेकस्य द्रव्यस्याऽ-
भिधानं नोपपद्यत इत्यनेकस्याऽर्थस्य प्रतिपादनेऽनेकशब्दानां वाचकानां प्रयोगः प्राप्नो-
तीति द्रव्यपदार्थदर्शने एकशेषारम्भः। अथ शेष इत्येकवचनादेक एव शेष इष्यते
किमेकग्रहणेन ? उच्यते—सुखार्थम्। ननु समग्रमेवेदं सूत्रं नाऽऽरम्भणीयं समानार्थैः
25 शब्दैरनेकस्याऽर्थस्याभिधित्सायां व्यक्तावपि पदार्थे एकस्यैव तत्प्रत्यायने शक्तत्वादन्ये
निवर्तन्ते उक्तार्थानामप्रयोग इति। आरब्धेऽप्येकशेषे निवर्तमानार्थप्रत्यायने स्वाभा-
विकी शक्तिर्यावन्नाऽनुसृता तावत्कथमसौ निवर्तमानानामर्थमभिदधीतेति ?, सत्यम्;
अर्थानुवादकत्वाददोषः। प्लक्षन्यग्रोधाविति—अर्थेन समानामिति वचनाल्लौकिक्याः
समानार्थतायाः समाश्रयणादिहैकशेषो न भवति। लौकिकी तु समानार्थता द्वन्द्वाद-
30 न्यत्र विज्ञायते। द्वन्द्वपदानां च परस्परार्थसंक्रमात् समानार्थत्वे विज्ञायमानेऽर्थेन

समानामित्यनर्थकं स्यात् । इहैकशेषे षट् पक्षाः सम्भवन्ति–तत्र प्रत्येकमेकविभक्तौ परतो विभक्तिपरित्यागेन नामैकशेषः स्यात् १, अथवा सविभक्तिकानां वृक्षस् वृक्षस् इति स्थिते एकस्य वृक्षस् इत्यस्य शेषः २, अथवा वृक्षश्च वृक्षश्च वृक्षश्चेति द्वन्द्वे कृते सत्येकस्य, वृक्ष इत्यस्य शेषः ३, अथवा विभक्तिमनुत्पाद्यैव नाममात्रेण वृक्षवृक्षेत्येवंविधानामेव शेषः कार्यस्ततो विभक्तिः ४, अथवा सहोक्तौ वृक्षश्च वृक्षश्चेति 5 द्वन्द्वे प्राप्ते एक शेषः ५, अथवा नामसमुदायस्यैवाऽर्थवत्त्वान्नामसंज्ञायां द्विवचनाद्युत्पत्तौ एक शेषः ६; इति षट्पक्षाः । तत्राऽऽद्यं पक्षत्रयं सावद्यकमिति तत्परिहारेणेतरत्पक्षत्रयमिहाऽऽश्रीयते । तथाहि तत्र प्रथमे पक्षे नामैकशेषेऽनेकविभक्तिश्रवणं स्यादिति प्रथमपक्षे दोषः । द्वितीये विभक्त्यन्तस्य लोपे कृते विभक्तभ्रातृधनन्यायेन शिष्यमाणस्य निवर्तमानपदसंख्यासम्बन्धेऽपि विभक्त्यन्तत्वाद् द्विवचनबहुवचनानुप- 10 पत्तिः स्यात्, ततश्च वृक्ष इति नित्यमेव स्यादिति द्वितीयपक्षदोषः । तृतीये तु समासान्तदोषः । तथाहि ऋक् च ऋक् चेति द्वन्द्वे तत एक शेषे "चवर्गदपह०" इति समासान्तः स्यादिति प्रथमपक्षत्रयं दुष्टम् । इतरत्र तु पक्षत्रये न कश्चिद्दोषः । तथाहि वृक्ष वृक्ष इति स्थितानां नाम्नां विभक्तिमनुपाद्यैवैकशेषप्रवृत्तिरिति प्रथमपक्षो निर्दोषः तुल्यकालं नामानि यदा भारोद्यन्तृन्यायेन परस्परशक्त्यनुप्रवेशादभिधेयमाहुस्तदा द्वन्द्वैक- 15 शेषाविष्टाविति द्विवचनं बहुवचनं चोपपन्नमिति द्वितीयेऽपि न कोऽपि दोषः । तृतीयपक्षे न कश्चिद्दोषः । नामसमुदायस्यैवाऽर्थवत्त्वान्नामत्वाद्विभक्त्युत्पत्तेरिति सोऽपीहाऽऽश्रीयते इति पक्षत्रयेऽपि द्वन्द्वः प्राप्तोऽनेनाऽपोद्यते इत्याह–द्वन्द्वापवादो योग इति ।

'**स्यादावसङ्ख्येयः**' । ३ । १ । ११९ ॥ सरूपार्थमिति–अन्यथा अर्थसाम्यस्य स्यादावप्यभिद्यमानत्वात् पूर्वेणाऽपि सिध्यति । पादा इति–पादोऽह्रिश्लोकचतुर्थां- 20 शरश्मिप्रत्यन्तगिरिषु । माषो माने धान्यभेदे मूर्खे त्वग्दोषभिद्यपि । औकारे रूपं भिद्यत इति–अयमर्थः–"तृस्वसृ०" इति सूत्रे तृग्रहणेनैव नप्त्रादिग्रहणे सिद्धे यन्नप्त्रादीनां पृथगुपादानं तदेवं ज्ञापयति । अत्र सूत्रे औणादिकानामेतावतामेव ग्रहणमेव, जननीदेवरजायावाचिनोर्मातृयातृशब्दयोरौणादिकयोरौकारे आर् न प्राप्नोति, द्वितीययोस्तु तृजन्तयोस्तृज्द्वारा प्राप्नोतीति रूप भेदः । वाचावित्यादीति–अत्र समाहारद्वन्द्ववि- 25 षयेऽप्येकशेषे वाग्शब्दाद् द्विवचनमेव भवति । कुतः "क्लीबेऽन्यतेनैकं च वा" इत्यत्र समाहारेतरविवक्षया विकल्पेनैकत्वे सिद्धेऽप्येकग्रहणात् तेन विशेषाभावे सर्वत्रैकशेषे द्विवचनाद्येव भवति । एकश्च एकश्चेति–"त्यदादिः" इत्यनेनाऽपि न भवत्येकशेषः, व्यावृत्तेर्व्यक्त्याप्रवृत्तेः ।

---

१ ७-३-९८ । २ १-४-३८ । ३ ३-१-१२८ ।

'त्यदादिः'। ३। १। १२०॥ अन्येन चेति—सहोक्ताविति वर्तमानात् सहार्थस्य च द्वितीयमन्तरेणाऽभावाद् द्वितीयो लभ्यते, स च विशेषानुपादानात्, त्यदादिरन्यश्च गृह्यते। कथमिति—यदि लिङ्गानां सह विवक्षायां परमेव लिङ्गं भवति, कथं ते कुक्कुटमयूर्याविति स्त्रीलिङ्गतेत्याशङ्कार्थः।

5 'भ्रातृपुत्राः स्वसृदुहितृभिः'। ३। १। १२१॥ बहुवचनमिति—ननु भ्रातृपुत्रयोः स्वसृदुहित्रोश्च द्व्यर्थत्वाद् द्विवचनेन भाव्यं किमर्थं बहुवचनमित्याह—पर्यायार्थमिति। भ्राता च भ्राता च भ्रातरौ भ्राता च स्वसा च भ्रातराविन्युभयप्रतिपत्तावपि प्रकरणादिना विशेषावगतिः।

'पिता मात्रा वा'। ३। १। १२२॥ पितृशब्दसाहचर्यात् जनयित्र्या एव 10 परिग्रहो न धान्यमातुरिति।

'श्वशुरः श्वश्रूभ्यां वा'। ३। १। १२३॥ द्विवचनमिति—अत एव पूर्वेण योगविभागः पितृश्वशुरौ मातृश्वश्रूभ्यां चेत्येकयोगे हि द्विवचनं श्वश्रूशब्दद्वयपरिग्रहार्थमिति विज्ञातुं न शक्यमिति। तेन जाताविति—धवयोगे तु तन्मात्रभेदो न भवति, धवयोगादिलक्षणस्याऽर्थस्याऽपि भिन्नत्वादिति जातावित्युक्तम्।

15 'वृद्धो यूना तन्मात्रभेदे'। ३। १। १२४॥ कृत्रिमाकृत्रिमयोरिति परिभाषया पौत्रप्रभृत्यपत्याभिधायिन एव वृद्धशब्दस्य ग्रहणं न वयोवृद्धस्य, एवं युवशब्दस्याऽपि। ननु "पौत्रादि वृद्धम्" इति सूत्रे वृद्धमिति नपुंसकमत्र तु पुंलिङ्गस्तत्कथं सोऽयं भवति? उच्यते—सर्ववस्तुनः सर्वलिङ्गयोगित्वस्योक्तत्वादिति। तन्मात्र एव चेद्भेद इति—सूत्रेऽनयाऽपि रीत्याऽवधारणे याति तावेत्र तन्मात्रम्, स चाऽसौ भेद-20 श्चेति; वृत्तौ तु तौ वृद्धयुवानावेव मात्रं स्वभावो यस्येति कर्तव्यमन्यथा पुंस्त्वं न स्यात्। गार्ग्यगर्गाविति—अत्र लघ्वक्षराद्यभावात् पूर्वनिपातानियमः, यदा तु गर्गस्याऽर्च्यत्वविवक्षा तदा तस्य पूर्वनिपातः।

'स्त्री पुंवच्च'। ३। १। १२५॥ नन्वत्र पुंवद्ग्रहणं किमर्थं स्त्रीत्येवोच्यतां ततश्च वृद्धस्त्रीवाचिनो युववाचिना पुंसैकशेषे स्त्रीपुंनपुंसकानामित्येव पुंस्त्वं भविष्यति। न च 25 वाच्यं युववाचिनो यदा स्त्रीत्वं तदा किं भविष्यतीति। अस्त्री युवेति भणनात् स्त्रीवाचिनो युवत्वसंज्ञाया अभावात् नाऽपि युववाचिनो नपुंसकत्वं वाच्यम्, आपत्यतद्धितस्य स्त्रीपुंस्त्वस्यैवोक्तत्वात्, न; स्त्रीपुंनपुंसकानामित्यस्य प्रायस्त्यदादिविषय एव प्रवर्तनेन प्रायिकत्वान्नियमार्थं वचनम्। किञ्च अरुणाचार्येण अपत्यप्रत्ययान्तानामा-

१ ६-१-२

श्रयलिङ्गत्वमुक्तं ततश्च गार्गी च गार्ग्यायणं चेत्यपि कृते तन्मतेऽपि पुंस्त्वं यथा स्यात् । पुमर्थो भवतीति–स्त्रीलक्षणोऽर्थो यस्य शब्दस्य स पुमर्थः । यद्वा शब्दस्येति वृत्तावध्याहर्तव्यं तस्य सम्बन्धी स्त्रीलक्षणोऽर्थः पुमर्थः । अर्थग्रहणाच्च विशेषणानामपि पुंस्त्वं सिद्धं, शब्दस्य तु पुंस्त्वे विशेषणानां न स्यात् ।

'पुरुषः स्त्रिया'। ३ । १ । १२६ ॥ अत्र वृद्धो यूनेति नाऽनुवर्तते, अघटनात् । तदनुवृत्तौ हि वृद्धः पुरुषो यूना युवसंज्ञया स्त्रियेति स्यात् । न चैतदस्ति । अस्त्रीतिवचनात् स्त्रिया युवसंज्ञाया अभावात् । ब्राह्मणाविति–ब्राह्मणश्च ब्राह्मणी च ब्राह्मणावित्यादौ जातिसामान्यविवक्षायामविवक्षितविशेषत्वात् "समानामर्थेनै०" इत्येकशेषः सिध्यति । भेदविवक्षायां तु द्वन्द्वः प्राप्नोतीति वचनम् । इमौ गावाविति–"स्यादावसंख्येयः" इत्यनेन त्वेकशेषे कदाचिदिमाविति स्यात् । कदाचिदिमे इति–स्त्रीपुंनपुंसकानामिति परं भविष्यतीत्यापि, न वाच्यं; ब्राह्मणश्च ब्राह्मणी च ब्राह्मणावित्यादिसिद्ध्यर्थमवश्यकर्तव्येनाऽनेनैव परत्वादिहाऽप्येकशेष इत्यदोषः । नदनदीपतेरिति–नन्वत्र "नदी०" सूत्रेणैकार्थता कथं न भवति ?, तथा "क्लीबे" इति ह्रस्वत्वे नदनदिपतेरिति स्यात्; उच्यते–तत्र नदीत्युक्तेऽपि नदीविशेषो गृह्यतेऽयं तु सामान्यवाचीति । घटघटीशरावोदश्चनानीति–चतुर्णामपि सहोक्तौ द्वयोरपि सहोक्तिरस्तीति घटघट्योरेकशेषे घटशरावोदश्चनानीति प्राप्तम् । एवं पूर्वसूत्रेष्वपि बहूनामपि सहोक्तौ यथाप्राप्तयोः पदयोरेकशेषो भवत्येव । भेदोऽस्तीति न भवतीति–तथाहि ब्राह्मणवत्साशब्दाद् ब्राह्मणीवत्सशब्दो भिद्यते कथमित्युच्यते–एकत्र ब्राह्मणस्य वत्सा ब्राह्मणवत्सेति पुमर्थो विशेषणम्, अन्यत्र तु ब्राह्मण्या वत्सो ब्राह्मणीवत्स इति स्त्र्यर्थ इत्यर्थोऽप्यन्य इति तन्मात्रभेदाभावादेकशेषाभावः । यदुपाध्यायः–स्त्रीपुंसयोः सहोक्तावेकशेषः; सा च प्रधानयोरेव भवतीति यत्र प्रधानस्त्रीपुंसकृतो विशेषस्तत्रैकशेषः । इह त्वप्रधानस्त्रीपुंकृतो विशेष इत्येकशेषाभावः । ब्राह्मणवत्सश्च ब्राह्मणीवत्सा चेत्यपि कृतेऽवान्तरस्त्रीलिङ्गभेदान्नैकशेषः, ब्राह्मणवत्सश्च ब्राह्मणवत्सा चेति तु कृते भवत्येव ।

'ग्राम्याशिशुद्विशफसङ्घे स्त्री प्रायः'। ३ । १ । १२७ ॥ इमौ गावाविति–ननु समुदायस्य सङ्घरूपत्वात्तस्य च द्वयोरपि सम्भवात् कथं सङ्घ इति वचनाद् द्वयोरपि न भवति ?, सत्यम्; द्वितीयेन विना सहोक्तेरभावात् सहोक्तिग्रहणादेव द्वयोः सङ्घे सिद्धे सङ्घग्रहणं संङ्घप्रकर्षार्थम् ।

'क्लीबमन्येनैकं च वा'। ३ । १ । १२८ ॥ ननु समाहारेतरेतरविवक्षाया-

१ ३-१-११८ । २ ३-१-११९ । ३ ३-१-१४२ । ४ २-४-९७ ।

मेकत्वविकल्पो भविष्यति किमेकग्रहणेन ?, सत्यम्; इदमेकग्रहणं ज्ञापकमन्यत्रैकशेषे समाहारविवक्षायामप्येकत्वं न भवति ।

'पुष्यार्थाद्भे पुनर्वसुः'। ३ । १ । १२९ ॥ एकशेषो निवृत्त इति–भिन्नसूत्रकरणादित्यर्थः, अन्यथा क्लीबमन्येनैकं च वा पुष्यार्थाद्भे पुनर्वसुश्च नित्यमित्येकमेव योगं कुर्यात् । भे नक्षत्रे वर्तमानादिति–भ इत्येकस्याऽप्यावृत्त्या उभयस्याऽपि विशेषणत्वम् । समाहारे त्विति–समाहारे त्वेकत्वानेकत्वयोर्नास्ति विशेष इति । पुष्यपुनर्वसवो माणवका इति–पुष्येण चन्द्रयुक्तेन युक्तः कालः "चन्द्रयुक्तात् काले०" इत्यण्, एवं पुनर्वसु शब्दादपि । ततो "लुप्त्वप्रयुक्ते" इति लुप् । एवं कालवृत्तिभ्यां पुष्ये जातः पुनर्वस्वोर्जाताविति "भर्तुसन्ध्यादे०" इत्यण् "बहुलाऽनुराधा०" इति तस्य लोपस्ततः पुष्यश्च पुनर्वसू चेति द्वन्द्वः । पुष्यपुनर्वसवो मुग्धा इति–मुह्यन्ति जना एष्विति "अद्यर्थाच्चाधारे" इति क्ते साध्यः ततो येषां पुष्यपुनर्वस्वादीनां मुग्धानां कोऽर्थः ? मोहोत्पादकानां मध्ये पुष्यः पुनर्वसू ज्ञायते लोकैस्तैः पुष्यपुनर्वसवः मुग्धा इति । कर्तरि क्ते तु विपर्यासप्रतिपत्तारः पुरुषा उच्यन्ते, ततः पुनर्वस्वर्थस्यैकत्वेऽपि अन्यपदार्थतया पुरुषबहुत्वे सति बहुवचनमुपपद्यत एव; अत्राऽवयवेन विग्रहः समुदायः समासार्थः, ततः पुष्य इत्येकोऽवयवः पुनर्वसू इति द्वितीयः; येषामिति समुदायः समासार्थः ।

'विरोधिनामद्रव्याणां नवा द्वन्द्वः स्वैः' । ३ । १ । १३० ॥ अद्रव्याणामिति–अत्र गुणादीनामाश्रयं द्रव्यं गृह्यते, न तु वैयाकरणप्रसिद्धमिदं तदित्यादिलक्षणम्; तस्मिंस्तु गृह्यमाणे सुखदुःखादीनामपि द्रव्यत्वप्रसङ्गः । छायातपमिति न भवति तयोर्द्रव्यत्वात् । बुद्धिसुखदुःखानीति–अत्र सुखदुःखे विरोधिनी बुद्धिस्त्वविरोधिनीति अविरोध्यवयवोऽसौ द्वन्द्वः स्वैरितिवचनात् नैकवद्भावः ।

'पशुव्यञ्जनानाम्'। ३ । १ । १३२ ॥ अत्र पशवो ग्राम्या गवादयो ग्राह्या न त्वारण्याः कुरङ्गादय उत्तरत्र मृगग्रहणात् । व्यञ्जनमिति–व्यञ्जनं येनाऽन्नं रुचिमापद्यते तद्दधिघृतशाकसूपादि ।

'तरुतृणधान्यमृगपक्षिणां बहुत्वे'। ३ । १ । १३३ ॥ तरुरिति सामान्येनोक्तेऽपि तरुविशेषा गृह्यन्ते, तेन धवाश्च वृक्षाश्चेति कृते इतरेतरयोग एव । प्लक्षौ च न्यग्रोधौ चेति–तरुतृणादीनां द्वन्द्वावयवानामेव बहुत्वे इति विशेषणात् द्वन्द्वस्य बहुत्वेऽपि न समाहारः । अमृगैरबहुत्वे चेति–यदा ग्राम्यपशूनामरण्यपशुभिः सहोक्तिर्भवति तदा मा भूदित्यर्थः ।

---

१ ६–२–६ । २ ६–३–८९ । ३ ६–३–१०७ । ४ ५–१–१२ ।

'**सेनाङ्गक्षुद्रजन्तूनाम्**'। ३। १। १३४॥ पृथग्योगादिति–अन्यथाऽर्थस्य समानत्वात् पूर्वेणैकयोगः स्यादित्यर्थः। अत्र यथाऽश्वरथमिति भवति तथा हस्त्यश्वारोहमिति न स्वीकीयत्वाभावात्। न च वाच्यं सेनाङ्गत्वेन स्वत्वमस्ति, यतो सेनाङ्गेष्वपि आरोह्याणामारोह्येणाऽऽरोहकाणामारोहकेण स्वस्वत्वमिष्यते; अत्र च न तथेति, एवं प्राणितूर्याङ्गाणामित्यत्राऽपि तुर्याङ्गेषु वाद्यानां वाद्येषु वादकानां वादकेन च स्वत्वं दृश्यम्। क्षुद्रजन्तव इति–" क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः। शतं वा प्रसृतिर्येषां, केचिदानकुलादपि ॥ १ ॥ क्षुद्रजन्तुरकं कालो, येषां स्वं नाऽस्ति शोणितम्। नाञ्जलिर्यत्सहस्रेण, केचिदानकुलादपि ॥ २ ॥"। 5

'**फलस्य जातौ**'। ३। १। १३५॥ बदरामलकमिति–बदर्या विकारः फलं हेमाद्यण्, आमलक्या विकारः फलं " दोरप्राणिनः[1] " मयट्; द्वयोरपि " फले[2] " लुप्। 10

'**अप्राणिपश्वादेः**'। ३। १। १३६॥ पूर्वयोगारम्भादिति–फलस्याऽप्राणित्वेन अनेनैव सिद्धत्वात्। न च पूर्वयोगमन्तरेणाऽत्र जाताविति न स्यादिति वाच्यम्। अत्रैव जातिग्रहणं करिष्याम इति। यत्राऽप्राणीति वचनात् प्राप्तिस्ते पश्वादिसूत्रोक्ता व्यञ्जनादयो ग्राह्या न तु पशवस्तत्र " अप्राणि०[3] " इत्यनेनैव निषेधसिद्धेः। ब्राह्मणक्षत्रियविट्शूद्रा इति–अत्र प्राणिवर्जनाद् ब्राह्मणादीनां गवादीनां च प्राणित्वादयं नित्यो विधिर्न भवति। दधिघृते इत्यादिप्रयोगेषु च पश्वादिवर्जनाद्दधिघृतादीनां च पश्वादिसूत्रोक्तत्वादनेन नित्यैकवद्भावाभावः, ततश्च यथाप्राप्तमेव भवति। कुशकाशाविति–बहुत्व इति व्यावृत्तिर्व्यक्तिविवक्षायां चरितार्थेति जातावेकार्थता प्रसज्येत। अश्वरथाविति–नन्वत्र यथा पश्वादिसूत्रोक्तवर्जने दधिघृते दधिघृतमित्यादिषु यथाप्राप्तस्य विधानं दर्शितमेवं " फलस्य जातौ[4] " इत्यास्याऽपि व्यवच्छिन्नत्वात् कथमत्र यथाप्राप्तं न दर्शितम्?, उच्यते–अत्र यथाप्राप्तेऽपि दर्श्यमाने तावदेकत्वेनैव नित्यं भवितव्यं फलस्य जातावित्यनेनाऽपि नित्यमेकत्वविधानात्। ततश्चाऽनेनैकत्वे फलस्य जातावित्यनेन चैकत्वे न काचिद्भेदप्रतिपत्तिरस्तीति विशेषाभावात् न दर्शितमिति। 15 20

'**प्राणितूर्याङ्गाणाम्**'। ३। १। १३७॥ निराकरणार्थमिति–प्राणिपणवावित्यत्र " अप्राणिपश्वादेः[5] " इति प्राप्तस्य प्राणिपणवयोरप्राणित्वेन स्वत्वात्। 25

'**चरणस्य स्थेणोऽद्यतन्यामनुवादे**'। ३। १। १३८॥ कर्तृत्वेनेति–गौणमुख्ययोरितिन्यायात् मुख्यवृत्त्या कर्ता लभ्यते, तेन यदा भावे प्रयोगस्तदा

१ ६–२–४९। २ ६–२–५८। ३ ३–१–१३५। ४ ३–१–१३६।

प्रत्यष्ठायि कठकालापाभ्यामिति भवति न तु समाहारः। शंसितानुशंसनमिति–शंसनं शंसस्तं करोति णिज्, ततः क्तः; अन्यथा "[1]वेटोऽपतः" इतीटो निषेधः। मौदपैप्पलादमिति–मुदस्य मोदस्य वा पिप्पलादस्य चाऽपत्यं "[2]ऋषिवृ०" इत्यण् मौदेन पैप्पलादेन च प्रोक्तमिति वाक्ये ईयस्येति बाधको "मौदादिभ्यः" इत्यण्, ततः "[3]तद्वे-
5 त्त्यधीते" इत्यण्, तस्य "प्रोक्तात्" इति लुप्। तार्किकेति–तर्केण चरति तर्कः प्रयोजनमस्येति वा "[4]चरति" "[5]प्रयोजनम्" इति वा इकणि, यद्वा तर्कं वेत्त्यधीते वा "[6]न्यायादेरिकण्"। परं तदा न्यायादिष्वपठितोऽपि दृश्यः।

'अक्लीबेऽध्वर्युक्रत्वोः'। ३। १। १३९॥ साह्वातिरात्रमिति–सह अह्ना वर्तते पृषोदरादित्वात् अह्नादेशे "[7]नाम्नि" इति नित्यं सादेशः, यद्वा अह्नां समूहः
10 "[8]श्वादिभ्योऽञ्" अनीनाद्यह्नोऽनोऽस्य लुप्। सहाऽह्नेन वर्तते साह्नश्चाऽतिरात्रश्च। गवामयनादित्यादिनामयने इति–आमीनातीति अच्, अमण् "[9]कुंगुवलि०" इत्ययो वा। आमयं करोति "[10]णिज्बहु०" आमय्यन्ते सरोगीक्रियन्तेऽनेनाऽनटि ततो गवामामयनं गवामयनम्, अयनशब्दे वा उत्तरपदे बाहुलकात् षष्ठ्या अलुप्। अदितेरपत्यानि आदित्या देवाः, न आमयनमनामयनं शेषं पूर्ववत्। दर्शपौर्णमासाविति–
15 दृश्यतेऽनेन व्यञ्जनाद्धञि दर्शोऽमावास्या उपचाराद्दर्शभवो यागोऽपि दर्शः। पूर्णो माश्चन्द्रोऽस्यां पूर्णमासोऽण् ङीः। पौर्णमास्यां भवो यागः "[11]भर्तुसन्ध्यादेरण्"।

'निकटपाठस्य'। ३। १। १४०॥ इह पाठशब्दो भावे कर्मणि वा। भावपक्षे पाठशब्देन पाठक्रियोच्यते तेन पाठक्रियया निकटव्यपदेशानामित्यर्थो जायते। निकटत्वं च कालरूपं प्रसिद्धमेव। यथा सूत्राध्ययनसमाप्तिसमनन्तरमेव धातवः
20 पठ्यन्ते, तथैव पदान्यधीत्य क्रमोऽधीयते इत्यर्थो भवति। यदा कर्मणि पठ्यते इति पाठो ग्रन्थो द्रव्यात्मोच्यते। स च ग्रन्थ एकोऽपि पदक्रमसंहिताभेदकल्पनया भिन्नस्ततश्च पठ्यमानैकग्रन्थनिमित्तं कालरूपतो नैकट्यं सम्भवति। तेन–पाठयोरिति पाठक्रिययोः, पाठ्यमानग्रन्थयोर्वेत्यर्थः। पितापुत्राविति–अत्र निकटा जननक्रिया न तु पाठ इति।

25 'नित्यवैरस्य'। ३। १। १४१॥ कौरवपाण्डवा इति–कुरुशब्दादिदमर्थे उत्साद्यञ्, पाण्डुशब्दादपत्ये शिवाद्यण्। वैर एवेति–तच्चोपचारात् श्वावराहादिकृतं वैरमपि श्वावराहम्।

---

१ ४–४–६२। २ ६–१–६१। ३ ६–३–१८२। ४ ६–२–११७। ५ ६–२–१२९। ६ ६–४–११। ७ ६–४–११७। ८ ६–२–११८। ९ ३–२–१४४। १० ६–२–२६। ११ उणा० ३६५। १२ ३–४–४२। १३ ६–३–८९।

**'नदीदेशपुरां विलिङ्गानाम्'** । ३ । १ । १४२ ॥ उध्येरावतीति–उज्झत्युदकं "कुप्यभिद्यो०" ह्रदस्याऽपि नदीत्वं स्तोकविशेषात् । विपाट् च स्त्रीति–विशिष्टं पाशितवती क्विपि पृषोदरादित्वाद्विपाडिति न्यासः, तेन यत्र विप्राडिति दृश्यते तन्न साधु । पुरां देशत्वादिति–पुरामप्युपभोगस्थानत्वस्य देशलक्षणस्य विद्यमानत्वात् किमर्थं पूर्ग्रहणं ?, उपलक्षणं चेदं नदीग्रहणमपि ग्रामनिषेधार्थमेव । जाम्बवशालूकिन्याविति– 5
जम्बूनामदूरभवो "निवासाऽदूरभवे०" इत्यण् । शालूकान्युत्पलादिमूलान्यत्र सन्ति । गौरीकैलासाविति–कं जलम्, इला भूमिस्तयोरास्ते केलासः स्फटिकस्तस्याऽयम् ।

**'पात्र्यशूद्रस्य'** । ३ । १ । १४३ ॥ पात्र्यशूद्रा द्विप्रकाराः, आर्यावर्त्तान्तरगतास्तद्बाह्याश्च । अत्राऽपि आर्यावर्त्तजानां तैः स्वत्वं, तद्बाह्यानां बाह्यैरिति द्रष्टव्यम् । उभयेऽपि क्रमेण तक्षायस्कारमित्यादिना दर्श्यन्ते । किं किं दधातीति वर्चस्कादित्वात्–किष्किन्धः । किष्किन्धादयश्चत्वार आर्यावर्ताद् बाह्या म्लेच्छभेदाः । 10

**'गवाश्वादिः'** । ३ । १ । १४४ ॥ गवाश्वादिष्वजैडकं यावत् "पैशुन्यञ्जनानाम्" इति विकल्पे नित्यार्थः पाठः । सर्वेषु च "स्वरे वाऽनक्षे" इत्यवादेशः । कुब्जवामनमित्यादिषु चतुर्षु तु न्यायसिद्धे समाहारेतरेतरयोगे नित्यार्थः । श्वचण्डालमिति–नित्यवैरे "नित्यवैरस्य" इत्येव सिद्धमित्याह–नित्यवैराभावपक्षे इति ये 15
चण्डालपाटके श्वानो वसन्ति तेऽत्र विवक्षिताः । न च तेषां चण्डालैः सह वैरमस्ति । यद्वा चण्डालाः श्वानं घ्नन्ति अतोऽसौ धावतीति नित्यवैराभावः । शाटीपच्छिकमिति–अत्र जातित्वाद् "अप्राणिप०" इति सिद्धावपि व्यक्तिपरनोदनायामपि यथा स्यादित्यस्य पाठः । उष्ट्रखरमिति- पशुत्वात् विकल्पे प्राप्ते, उष्ट्रशशमित्यत्र–त्वितरेतरयोगे प्राप्ते; पशुविकल्पश्च नाऽस्ति शशस्याऽग्राम्यत्वात् । मूत्रशकृदिति–धर्मा- 20
दित्वात् शकृन्मूत्रमपि, मूत्रशकृदित्यादौ व्यक्तिपरनोदनायां "अप्राणिप०" न सिध्यतीत्युपादानम् । दर्भशरमिति–दर्भादीनां तृणजातित्वादप्राणीति नित्यविधेस्तृणविकल्पे बाधके प्राप्तेऽयं विधिः । गवेलकमिति–"स्वरे वाऽनक्षे" इत्यवादेशेऽपि लत्वस्य विकृतत्वात् समाहृतिः ।

**'न दधिपयआदिः'** । ३ । १ । १४५ ॥ मधुसर्पिषीति–धर्मादित्वात् पर्यायेण 25
पूर्वनिपातः । परिजाकौशिकाविति–परिजा–नदी, कौशिकश्च पर्वतः, कुशोऽस्याऽस्ति कुशिकस्याऽपत्यं विदाद्यञि; अत्र नदीदेशेति स्वैरिति व्यावृत्त्या नित्यसमाहृतिर्निषिध्यते, न्यायेन वैकल्पिकस्तु प्राप्त एव स चाऽनेन निषिध्यते । नरनारायणाविति–

---

१ ५-१-३९ । २ ६-२-६९ । ३ ३-१-१३२ । ४ १-२-२९ । ५ ३-१-१४१ । ६ ३-१-१३६ ।

अर्च्यत्वात् नारायणस्य पूर्वनिपाते प्राप्ते राजदन्तादित्वात् नरस्य पूर्वनिपातः। भीमार्जुनाविति–"धर्मार्थादिषु द्वन्द्व" इति भीमस्य पूर्वनिपातः। मातापितराविति–मातुरर्च्यत्वात् पूर्वनिपातः यदाह–" सहस्रं हि पितुर्माता, गौरवेणाऽतिरिच्यते। तत्किं पितृगिरा रामो, विधत्ते रेणुकावधम् ॥ १ ॥" श्रुततपसीति–धर्मादित्वात्तपः श्रुते इत्यपि।

5 'संख्याने'। ३। १। १४६ ॥ वर्त्तिपदार्थानामिति–वर्तनं वर्तः समासार्थः, सोऽस्ति येषां पूर्वपदोत्तरपदार्थानां ते वर्तिनस्तदभिधायकानि पदानि वर्तिपदानि पूर्वपदोत्तरपदस्वभावानि तेषामर्था अभिधेयरूपास्तेषामिति। ननु दशेत्यादिना बह्वर्थेन गोमहिषमित्याद्येकार्थस्य सामानाधिकरण्याभावाद्दशेत्यादिसंख्याशब्दप्रयोगादेवएकवद्भावस्याऽयोगादेकवद्भावो न भविष्यतीति किमर्थमस्याऽऽरम्भ इति?,

10 उच्यते–अस्याऽनारम्भे विहितैकवद्भावप्रयोगे दशादिपदप्रयोगायोगात्तत्प्रयोगे विहितैकवद्भावस्याऽनिवर्तनादस्याऽऽरम्भ इत्यदोषः।

'वाऽन्तिके'। ३। १। १४७ ॥ उपदेशं गोमहिषमिति–यद्यप्युपदेशं गोमहिषमित्येकवद्भावे समाहारस्य द्वन्द्वाभिधेयस्यैकत्वात् साक्षात् तत्संख्यानं नाऽस्ति तथापि तदवयवद्वारेण भवतीति।

15 'राजदन्तादिषु'। ३। १। १४९ ॥ दन्तानां राजेति–तेन राजा च दन्ताश्चेति द्वन्द्वे राजदन्ता दन्तराजान इत्यव्यवस्थैव। भृष्टलुञ्चितमिति–ऋत्तृषमृषेति सूत्रे क्तस्याऽपि कित्त्वविकल्पं केचिदिच्छन्ति तन्मतेनेदम्, यद्वा ण्यन्तस्य लुचां करोति णिच्, ततः क्तः। उशीरबीजशिञ्जास्थमिति–उशीरं बीजमस्मिन् उशीरवद्बीजमस्मिन्निति वा, उशीरबीजो नाम पर्वतः। शिञ्जायां तिष्ठतीति शिञ्जास्थः पर्व-

20 तस्ततो द्वन्द्वः।

आरट्टायनिचान्धनीति–आरटतीति "म्रद्वाद्वा०" इति, "लैटिखटि०" इति बहुवचनाद्वा निपातस्तस्याऽपत्यं, "अवृद्धाद्दोर्नवा०" इत्यायनिञ्; चमन्तीति क्विब् दीर्घः, चामां धनमस्य स चान्धनः, यद्वा चम्यते "शैकितकि०" इति ये चम्यं धनमस्य पृषोदरादिः; यद्वा चमतीति "विंदनगगन०" चान्धनस्तस्याऽपत्यमत इञ्,

25 ततो द्वन्द्वः। वैकारिमतगाजवाजमिति–कर एव कारः विविधः कारो यस्य विकारयतीति वा विकारस्तस्याऽपत्यमिञ्। वैकारेर्मतः। गजमदने च। गजतीत्यच् गजस्तस्याऽयं गाजः, "वजव्रजण्०" गाजं वाजतीत्यण् गाजवाजः पुरुषविशेषस्ततो द्वन्द्वः। ननु दारशब्दस्य बह्वर्थत्वेन द्विवचनानुपपत्तिरित्याह–दारशब्द इत्यादि।

---

१ उणा० ५१४। २ उणा० ५०५। ३ ६-१-११०। ४ ५-१-२९। ५ उणा० २७५।

यथा धर्मप्रजासम्पन्ने दारे नाऽन्यं दारं कुर्वीत। एवं विष्वक्सेनार्जुनाविति–यथा स्वराद्यन्तत्वादर्थशब्दस्य पूर्वनिपातः प्राप्त एवमिहाऽपि विष्वक्सेनस्य वासुदेवरूपतया अर्जुनादर्च्यत्वेऽपि तदविवक्षायां पूर्वनिपातार्थः पाठः, वासुदेवादन्यो वा विष्वक्सेनः। चित्रास्वातीति–अत्र माणविके इत्यनुप्रयोगेण नाऽयं नक्षत्रद्वन्द्व इति दर्शयति। तत्र हि "भर्तृतुल्यस्वरम्" इत्येव सिद्धम्। जम्पतीति–न चाऽल्पस्वरत्वादेव जम्दमोः पूर्वनिपातो भविष्यतीति वाच्यम्। पत्युरर्चितत्वात्पूर्वनिपातः स्यादित्यदोषः। अधरबिम्बमिति–अधरो बिम्बमिव "उपमेयं व्याघ्राद्यैः०" समासः। 5

'**विशेषणसर्वादिसंख्यं बहुव्रीहौ**'। ३। १। १५०॥ कण्ठेकाल इति–कण्ठे स्थिताः कण्ठे स्थिता अलुप् सः। ततः कण्ठेस्थिताः काला यस्य, कण्ठेकाला अस्येति वैयधिकरण्ये वा समासः। आधेयं प्रत्याधारो विशेषणत्वं भजत इति वैयाकरणाः। सर्वशुक्ल इति–अत्र शुक्लशब्देन सर्वार्थस्य विशेष्यमाणत्वाद्विशेषणत्वाभावेऽपि सर्वादित्वात् सर्वशब्दस्य पूर्वनिपातः। विश्वदेव इति–विश्वे देवा यस्येति विश्वदेवः। द्रव्यशब्देन विशेष्येणैव भवितव्यमिति नियमाभावात् सत्यपि द्रव्यशब्दत्वे देवा इति विश्वेषां विशेषणमिति सर्वादित्वाद्विश्वशब्दस्य पूर्वप्रयोगः। द्विकृष्ण इति–अत्र द्व्याद्यर्थस्य विशेष्यत्वेन विवक्षितत्वात् संख्यात्वादेव द्व्यादिशब्दस्य पूर्वप्रयोगः। शब्दस्पर्धे परत्वादिति–अस्याऽयं तात्पर्यार्थः अल्पस्वरत्वात् संख्याशब्दस्य पूर्वप्रयोगे प्राप्ते लक्षणातिक्रमेण "विशेषणसर्वादिसंख्यं०" इति निर्देशः, शब्दपरस्पर्धार्थः। उभयोस्त्विति–संख्याशब्दस्य सर्वादित्वेऽसर्वादित्वे च पूर्वनिपात एव सूत्रे परत्रोपादानात्। द्व्यन्य इति–सर्वादिगणपाठापेक्षयाऽपि यातीत्युपात्तमन्यथा संख्यापेक्षयाऽपि याति। यद्वा द्व्यन्य इति संख्यास्पर्धेन सिद्धावपि गणपाठस्पर्धोऽप्यस्तीति ज्ञापनार्थमुदाहरणदिक्त्वेनोदाहृतम्। गणपाठस्पर्धस्य तूदाहरणं संख्याविमुक्तं दक्षिणपूर्वा दिगित्यादि द्रष्टव्यम्। सर्वादिसंख्ययोरिति–ननु सर्वादिसंख्याभ्यामारब्धेऽपि बहुव्रीहावन्यपदार्थस्यैव प्राधान्यात् तस्य च विशेष्यत्वादेतयोर्विशेषणत्वाद्विशेषणग्रहणेनैव भविष्यति किमर्थं पृथगुपादानमित्याशङ्का। 10 15 20

'**आहिताग्न्यादिषु**'। ३। १। १५३॥ नन्वग्निशब्दस्य जातिवाचित्वात् "जातिकाल०" इत्यनेनैव सिध्यति किमत्र पाठः?, सत्यम्, व्यक्तिविवक्षायामपि यथा स्यादित्येवमर्थम्। 25

'**प्रहरणात्**' ३। १। १५४॥ नन्वस्यादीनां जातिशब्दत्वात्। "जातिकाल०" इत्यनेनैव क्तान्तस्य पूर्वनिपातः सिद्धः किमनेन?, सत्यम्; व्यक्तिविव-

---

१ ३–१–१६२। २ ३–१–१०२। ३ ३–१–१५०। ४ ३–१–१५२।

क्षायामपि यथा स्यादित्यर्थम् । जातिकालेत्यनेन पृथग्योग उत्तरार्थस्तेनोत्तरत्र च शब्देन प्रहरणादित्याकृष्यते ।

'न सप्तमीन्द्वादिभ्यश्च' ३ । १ । १५५ ॥ ऊर्णनाभ इति "ङ्यापो बहुलं०" इति ह्रस्वः । सर्वेषु उष्ट्रमुखादित्वात् समासः ।

5 'प्रियः' । ३ । १ । १५७ ॥ प्रियगुड इति–अत्र प्रियशब्दस्य गुडादेर्वा विशेषणत्वेन नित्यमेकस्य पूर्वनिपातप्राप्तावुभयत्र प्रियशब्दस्य पाक्षिको निपातः । प्रियचत्वा इति–अत्र चतुःशब्दस्य संख्यात्वात् नित्यं पूर्वनिपातः प्राप्तः ।

'कडारादयः कर्मधारये' । ३ । १ । १५८ ॥ जैमनिकडार इति–जेमन्तीति विच् जेमामिनः जेमिनः । यद्वा जेमेः "[2]विपिनाजिनादयः" इतीने जेमिनस्तस्या-

10 ऽपत्यमृषित्वेऽपि बाह्वादेराकृतिगणत्वादिञि जैमिनिः । गडुलगालव इति–गडुरस्याऽस्ति सिध्मादित्वात् लः । गडोरपत्यम् ऋष्यण् । कपिडादित्वाल्लः ।

'धर्मार्थादिषु द्वन्द्वे' । ३ । १ । १५९ ॥ विपूयविनीयजित्या इति–यादृश एव गणे दृष्टस्तादृश एव प्रयोगः न तु विनीयविपूयजित्यादयः जित्याशब्दस्यैव पूर्वपरभावः ।

15 'लघ्वक्षरासखीदुत्स्वराद्यदल्पस्वरार्च्यमेकम्' । ३ । १ । १६० ॥ अक्षर-शब्देन स्वरोऽभिधीयते । शरसीर्यमिति पाठः, शरशीर्षमिति तु पाठे "[3]प्राणितूर्य०" इति स्वैरभावात् समाहाराप्राप्तिः । श्रद्धामेधे इति–अर्थग्राहिणी श्रद्धा, शब्दग्राहिणी मेधा; श्रद्धामूलत्वादभिप्रेतार्थसिद्धेरर्च्यत्वम् । दीक्षातपसीत्यादिषु–दीक्षाश्रद्धामेधानां बहूपकारकत्वात् मूलभूतत्वात् चाऽर्चितत्वात् परत्वात् पूर्वनिपातः । मातापितराविति–अनुभूतग-

20 र्भादिक्लेशत्वात् पितृतो माताऽभ्यर्हिता । एवं स्त्रीप्रधानत्वाद्विवाहस्य वराद्वधूरिति । एकस्यैव यथाप्राप्तमिति-दुन्दुभिशब्दादिदन्तात् परत्वादल्पस्वरत्वात् शङ्खवीणाशब्दयोर्युगपत्पूर्वनिपातप्राप्तावेकग्रहणादेकस्यैव क्रमेण पूर्वनिपातः । शेषाणां त्विति-शङ्खवीणाशब्दयोः अश्वइन्द्रशब्दयोरिव युगपत्पूर्वनिपातप्राप्तौ एकस्यैव पूर्वनिपातः । दुन्दुभिरथादीनां तु कामचार इत्यर्थः । एकस्यैवेत्युक्तेऽपि दुन्दुभिरथादीनां न पूर्वनिपातः । शब्दस्य स्पर्धे

25 परत्वात् तथाहि–दुन्दुभिशब्दोऽसखीदुत् शङ्खवीणाशब्दौ तु अल्पस्वराविति । एवमश्वरथेन्द्रा इत्यत्राऽपि रथशब्दो लघ्वक्षरः । अश्वेन्द्रशब्दौ तु स्वराद्यौ तौ च पराविति तयोरेव पूर्वनिपातो न तु रथस्य । शङ्खदुन्दुभिवीणा इति–"प्राणितूर्याङ्गाणाम्" इति बहुवचनं क्वचिदेकत्वविधेरनित्यार्थम्, तेनाऽत्रैकत्वाभावः; माङ्गल्यवाचकत्वेन शङ्खशब्दस्य विवक्षितत्वात् स्वैरित्यभावाद्वा । यतस्तूर्याङ्गस्य तूर्याङ्गेण हि स्वत्वं भवतीति ।

१ २–४–९९ । २ उणा० २८४ । ३ ३–१–१३७ ।

एवं मृदङ्गशङ्खपणवा इति–अथवा शङ्खदुन्दुभिवीणाः, मृदङ्गशङ्खपणवा इति शङ्खादीनां तूर्याङ्गत्वादेवैकवद्भावः कुतो न भवतीति ?, उच्यते–अत्र शङ्खादिशब्देन शङ्खादिसमुदायस्याऽभिधानात्तस्य चाऽतूर्याङ्गत्वादजातित्वाच्च नैकवद्भावः । उत्पलस्त्वाह–तूर्यांगता शङ्खादिवादकानां न तु शङ्खादीनामिति तूर्याङ्गत्वादत्रैकवद्भावो नाऽऽशङ्कनीयः । अत एव "[1]प्राणितूर्याङ्गाणाम्" इत्यत्र पूर्वैर्मार्दङ्गिकपाणविकं वीणावादकपरिवादकमित्येवोदाह्रियते, न तु भेरीमृदङ्गमित्यादि । तदा तु प्राणिरूपं तूर्याङ्गं प्राणितूर्याङ्गमिति विग्रहः । 5

**'मासवर्णभ्रात्रऽनुपूर्वम्'** । ३ । १ । १६१ । ब्राह्मणक्षत्रियाविति–अत्राऽनियमः प्राप्तः क्षत्रियवैश्याविस्यत्र त्वल्पस्वरत्वाद्वैश्यशब्दस्य पूर्वनिपातः प्राप्तः वैश्यशूद्रावित्यत्राऽप्यनियमः ब्राह्मणक्षत्रियविट्शूद्रा–इत्यत्र त्वल्पस्वरत्वाद्विशः पूर्वनिपाते 10 प्राप्तेऽनेन ब्राह्मणादीनामनुपूर्वं पूर्वनिपातः । आनुपूर्व्यं च जन्मकृतं यदाह–" मुखतो ब्राह्मणा जाता, बाहुभ्यां क्षत्रियाः स्मृताः । ऊरुभ्यां तु विशः प्रोक्ताः, पद्भ्यां शूद्रो अजायत ॥१॥" न चाऽत्राऽर्च्यत्वात् पूर्वनिपातः सिध्यतीति वाच्यम्, निन्दितस्याऽपि ब्राह्मणादेः सम्भवादिति ।

**'भर्तुतुल्यस्वरम्'** । ३ । १ । १६२ ॥ अत्राऽपि नक्षत्राणामृतूनां चाऽऽनु- 15 पूर्व्यं लोकप्रसिद्ध्यैव वेदितव्यम् ।

**'संख्या समासे'** । ३ । १ । १६३ ॥ द्विदशा इति–ननु द्विदशा इत्यादौ "[2]सुज्वार्थे०" इत्यनेन सुजर्थे समासस्ततः "[3]प्रथमोक्तं प्राक्" इत्यनेनाऽपि सिध्यति किमेषामुपादानम् ?, सत्यम्; यदा दशन्शब्दः सुजर्थः समस्यते तदाऽप्यनेनाऽऽनुपूर्व्या संख्यायाः पूर्वनिपातो भवतीति फलम् । 20

इत्याचार्यश्रीहेमचन्द्रानुस्मृते श्रीसिद्धहेमचन्द्रशब्दानुशासनेऽवचूर्णिकायां तृतीयस्याऽध्यायस्य प्रथमः पादः सम्पूर्णः ॥

---

संवत् १२६४ वर्षे श्रावणशुदि ३ रवौ श्रीजयानन्दसूरिशिष्येणाऽमरचन्द्रेणाऽऽत्मयोग्याऽवचूर्णिकायाः प्रथमपुस्तिका लिखिता । शुभं भवतु लेखकपाठकयोः ।

---

इति श्रेष्ठि देवचन्द्र–लालभ्रातृ–जैन–पुस्तकोद्धार–ग्रन्थाङ्के–ग्रन्थाङ्कः ९२ । 25



---

१ ३–१–१३७ । २ ३–१–१९ । ३ ३–१–१४८ ।

# श्रीमती आगमोदयसमिति तथा शेठ देवचंद लालभाई जैन पुस्तकोद्धार फंडना हालमां मलतां ग्रंथो.





इति श्रेष्ठि देवचंद्र-लालभ्रातृ-जैन-पुस्तकोद्धार-ग्रन्थाङ्के-ग्रन्थाङ्कः ९२

# १ परिशिष्टम् ।

कलिकालसर्वज्ञश्रीहेमचन्द्राऽऽचार्यविरचितानि–

## श्रीसिद्धहेमचन्द्रशब्दानुशासनसूत्राणि ।



### प्रथमोऽध्यायः ।

अर्हं । १।१।१।
सिद्धिः स्याद्वादात् । १।१।२।
लोकात् । १।१।३।
औदन्ताः स्वराः । १।१।४।
एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः।१।१।५।
अनवर्णा नामी । १।१।६।
लृदन्ताः समानाः । १।१।७।
एऐओऔ सन्ध्यक्षरम् । १।१।८।
अंअः अनुस्वारविसर्गौ । १।१।९।
कादिर्व्यञ्जनम् । १।१।१०।
अपञ्चमान्तस्थो धुट् । १।१।११।
पञ्चको वर्गः । १।१।१२।
आद्यद्वितीयशषसा अघोषाः ।१।१।१३।
अन्यो घोषवान् । १।१।१४।
यरलवा अन्तस्थाः । १।१।१५।
अंअः ≍क () पशषसाः शिट् । १।१।१६।
तुल्यस्थानाऽऽस्यप्रयत्नः स्वः । १।१।१७।
स्यौजसमौशस्टाभ्यांभिस्ङेभ्यांभ्य–
स्ङसिभ्यांभ्यस्ङसोसांङ्योस्सुपां
त्रयी त्रयी प्रथमादिः । १।१।१८।
स्त्यादिर्विभक्तिः । १।१।१९।
तदन्तं पदम् । १।१।२०।
नाम सिदय्व्यञ्जने । १।१।२१।
नं क्ये । १।१।२२।
न स्तं मत्वर्थे । १।१।२३।
मनुर्नभोऽङ्गिरोवति । १।१।२४।
वृत्त्यन्तोऽसषे । १।१।२५।
सविशेषणमाख्यातं वाक्यम् । १।१।२६।
अधातुविभक्तिवाक्यमर्थवन्नाम ।
१।१।२७।
शिर्घुट् । १।१।२८।
पुंस्त्रियोःस्यमौजस् । १।१।२९।
स्वरादयोऽव्ययम् । १।१।३०।
चादयोऽसत्त्वे । १।१।३१।
अधण्तस्वाद्या शसः । १।१।३२।
विभक्तिथमन्ततसाद्याभाः । १।१।३३।
वत्तस्याम् । १।१।३४।
क्त्वातुमम् । १।१।३५।
गतिः । १।१।३६।
अप्रयोगीत् । १।१।३७।
अनन्तः पञ्चम्याः प्रत्ययः । १।१।३८।
डत्यतु संख्यावत् । १।१।३९।
बहुगणं भेदे । १।१।४०।

कसमासेऽध्यर्द्धः । १।१।४१।
अर्द्धपूर्वपदः पूरणः । १।१।४२।

---

## प्रथमोऽध्यायः

### द्वितीयः पादः ।

समानानां तेन दीर्घः । १।२।१।
ऋलृति ह्रस्वो वा । १।२।२।
लृत लृ ऋलृभ्यां वा । १।२।३।
ऋतो वा तौ च । १।२।४।
ऋस्तयोः । १।२।५।
अवर्णस्येवर्णादिनैदोदरल् । १।२।६।
ऋणे प्रदशार्णवसनकम्बलवत्सरवत्सतरस्यार् । १।२।७।
ऋते तृतीयासमासे । १।२।८।
ऋत्यारुपसर्गस्य । १।२।९।
नाम्नि वा । १।२।१०।
लृत्याल्वा । १।२।११।
ऐदौत्सन्ध्यक्षरैः । १।२।१२।
ऊटा । १।२।१३।
प्रस्यैषैष्योढोढ्यूहे स्वरेण । १।२।१४।
स्वैरस्वैर्यक्षौहिण्याम् । १।२।१५।
अनियोगे लुगेवे । १।२।१६।
वौष्ठौतौ समासे । १।२।१७।
ओमाङि । १।२।१८।
उपसर्गस्यानिणेधेदोति । १।२।१९।
वा नाम्नि । १।२।२०।
इवर्णादेरस्वे स्वरे यवरलम् ।१।२।२१।
ह्रस्वोऽपदे वा । १।२।२२।
एदैतोऽयाय् । १।२।२३।
ओदौतोऽवाव् । १।२।२४।
य्यक्ये । १।२।२५।
ऋतो रस्तद्धिते । १।२।२६।
एदोतः पदान्तेऽस्य लुक् । १।२।२७।
गोर्नाम्न्यवोऽक्षे । १।२।२८।
स्वरे वाऽनक्षे । १।२।२९।
इन्द्रे । १।२।३०।
वाऽत्यसन्धिः । १।२।३१।
प्लुतोऽनितौ । १।२।३२।
इ३ वा । १।२।३३।
ईदूदेद्द्विवचनम् । १।२।३४।
अदो मुमी । १।२।३५।
चादिः स्वरोऽनाङ् । १।२।३६।
ओदन्तः । १।२।३७।
सौ नवेतौ । १।२।३८।
ऊँ चोञ् । १।२।३९।
अञ्वर्गात् स्वरे वोऽसन् । १।२।४०।
अइउवर्णस्यान्तेऽनुनासिकोऽनीदादेः । १।२।४१।

---

## प्रथमोऽध्यायः

### तृतीयः पादः ।

तृतीयस्य पञ्चमे । १।३।१।
प्रत्यये च । १।३।२।
ततो हश्चतुर्थः । १।३।३।
प्रथमादधुटि शश्छः । १।३।४।
रः कखपफयोः )(क()पौ । १।३।५।
शषसे शषसं वा । १।३।६।
चटते सद्वितीये । १।३।७।
नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्परे । १।३।८।

पुमोऽशिट्यघोषेऽख्यागिरः। १।३।९।
नॄनः पेषु वा । १।३।१०।
द्विः कानः कानि सः । १।३।११।
स्सटि समः । १।३।१२।
लुक् । १।३।१३।
तौ मुमो व्यञ्जने स्वौ । १।३।१४।
मनयवलपरे हे । १।३।१५।
सम्राट् । १।३।१६।
ङ्णोः कटावन्तौ शिटि नवा। १।३।१७।
ङ्नः सः त्सोऽश्चः । १।३।१८।
नः शि ञ्च् । १।३।१९।
अतोऽति रोरुः । १।३।२०।
घोषवति । १।३।२१।
अवर्णभोभगोऽघोर्लुगसन्धिः।१।३।२२।
व्योः । १।३।२३।
स्वरे वा । १।३।२४।
अस्पष्टाववर्णात्त्वनुञि वा। १।३।२५।
रोर्यः । १।३।२६।
ह्रस्वान्ङ्णनो द्वे । १।३।२७।
अनाङ्माङो दीर्घाद्वा छः।१।३।२८।
प्लुताद्वा । १।३।२९।
स्वरेभ्यः । १।३।३०।
हीदर्हस्वरस्याऽनु नवा। १।३।३१।
अदीर्घाद्विरामैकव्यञ्जने । १।३।३२।
अञ्वर्गस्याऽन्तस्थातः । १।३।३३।
ततोऽस्याः । १।३।३४।
शिटः प्रथमद्वितीयस्य । १।३।३५।
ततः शिटः । १।३।३६।
न रात्स्वरे । १।३।३७।

पुत्रस्याऽऽदिन्पुत्रादिन्याक्रोशे ।
१।३।३८।
म्नां धुड्वर्गेऽन्त्योऽपदान्ते। १।३।३९।
शिड्हेऽनुस्वारः । १।३।४०।
रो रे लुग्दीर्घश्चादिदुतः । १।३।४१।
ढस्तड्ढे । १।३।४२।
सहिवहेरोच्चाऽवर्णस्य । १।३।४३।
उदः स्थास्तम्भः सः । १।३।४४।
तदः सेः स्वरे पादार्था । १।३।४५।
एतदश्च व्यञ्जनेऽनग्नञ्समासे।१।३।४६।
व्यञ्जनात् पञ्चमान्तस्थायाः सरूपे वा।
१।३।४७।
धुटो धुटि स्वे वा । १।३।४८।
तृतीयस्तृतीयचतुर्थे । १।३।४९।
अघोषे प्रथमोऽशिटः । १।३।५०।
विरामे वा । १।३।५१।
न सन्धिः । १।३।५२।
रः पदान्ते विसर्गस्तयोः । १।३।५३।
ख्यागि । १।३।५४।
शिट्यघोषात् । १।३।५५।
व्यत्यये लुग्वा । १।३।५६।
अरोः सुपि रः । १।३।५७।
वाहर्पत्यादयः । १।३।५८।
शिढ्याद्यस्य द्वितीयो वा । १।३।५९।
तवर्गस्य श्चवर्गष्टवर्गाभ्यां योगे
चटवर्गौ । १।३।६०।
सस्य शषौ । १।३।६१।
न शात् । १।३।६२।
पदान्ताट्टवर्गादनाम्नगरीनवतेः ।
१।३।६३।

षि तवर्गस्य । १।३।६४।
लि लौ । १।३।६५।

---

प्रथमोऽध्यायः

चतुर्थः पादः ।

अत आः स्यादौ जस्भ्याम्ये । १।४।१।
भिस ऐस् । १।४।२।
इदमदसोऽक्येव । १।४।३।
एद्बहुस्भोसि । १।४।४।
टाङसोरिनस्यौ । १।४।५।
ङेङस्योर्यातौ । १।४।६।
सर्वादेः स्मैस्मातौ । १।४।७।
ङेः स्मिन् । १।४।८।
जस इः । १।४।९।
नेमाऽर्धप्रथमचरमतयाऽयाल्पकतिप-
यस्य वा । १।४।१०।
द्वन्द्वे वा । १।४।११।
न सर्वादिः १।४।१२।
तृतीयान्तात् पूर्वावरं योगे । १।४।१३।
तीयं ङित्कार्ये वा । १।४।१४।
अवर्णस्यामः साम् । १।४।१५।
नवभ्यः पूर्वेभ्य इस्मात्स्मिन्वा ।
१।४।१६।
आपो ङितां यैयास्यास्याम् ।
१।४।१७।
सर्वादेर्डस्पूर्वाः । १।४।१८।
टौस्येत् । १।४।१९।
औता । १।४।२०।
इदुतोऽस्त्रेरीदूत् । १।४।२१।
जस्येदोत् । १।४।२२।
ङित्यदिति । १।४।२३।
टः पुंसि ना । १।४।२४।
ङिडौं । १।४।२५।
केवलसखिपतेरौः । १।४।२६।
न ना ङिदेत् । १।४।२७।
स्त्रिया ङितां वा दैदास्दास्दाम् ।
१।४।२८।
स्त्रीदूतः । १।४।२९।
वेयुवोऽस्त्रियाः । १।४।३०।
आमो नाम् वा । १।४।३१।
ह्रस्वापश्च । १।४।३२।
संख्यानां र्ष्णाम् । १।४।३३।
त्रेस्त्रयः । १।४।३४।
एदोद्भ्यां ङसिङसो रः । १।४।३५।
खितिखीतीय उर् । १।४।३६।
ऋतो डुर् । १।४।३७।
तृस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृप्रशास्त्रो
घुट्यार् । १।४।३८।
अडौं च । १।४।३९।
मातुर्मातः पुत्रेऽर्हे सिनाऽऽमन्त्र्ये ।
१।४।४०।
ह्रस्वस्य गुणः । १।४।४१।
एदापः । १।४।४२।
नित्यदिद्द्विस्वराऽम्बार्थस्य ह्रस्वः ।
१।४।४३।
अदेतः स्यमोर्लुक् । १।४।४४।
दीर्घङ्याब्व्यञ्जनात् सेः । १।४।४५।
समानादमोऽतः । १।४।४६।
दीर्घो नाम्यतिसृचतसृषः । १।४।४७।
नुर्वा । १।४।४८।

शसोऽता सश्च नः पुंसि । १।४।४९।
संख्यासायवेरह्नस्याहन् ङौ वा । १।४।५०।
निय आम् । १।४।५१।
वाऽष्टन आः स्यादौ । १।४।५२।
अष्टऔर्जस्शसोः । १।४।५३।
डतिष्णः संख्याया लुप् । १।४।५४।
नपुंसकस्य शिः । १।४।५५।
औरीः । १।४।५६।
अतः स्यमोऽम् । १।४।५७।
पञ्चतोऽन्यादेरनेकतरस्य दः । १।४।५८।
अनतो लुप् । १।४।५९।
जरसो वा । १।४।६०।
नामिनो लुग्वा । १।४।६१।
वान्यतः पुमांष्टादौ स्वरे । १।४।६२।
दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान् । १।४।६३।
अनाम्स्वरे नोऽन्तः । १।४।६४।
स्वराच्छौ । १।४।६५।
धुटां प्राक् । १।४।६६।
र्लो वा । १।४।६७।
घुटि । १।४।६८।
अचः । १।४।६९।
ऋदुदितः । १।४।७०।
युञ्जोऽसमासे । १।४।७१।
अनडुहः सौ । १।४।७२।
पुंसोः पुमन्स् । १।४।७३।
ओत औः । १।४।७४।
आ अम्शसोऽता । १।४।७५।
पथिन्मथिन्नृभुक्षः सौ । १।४।७६।
एः । १।४।७७।
थो न्थ् । १।४।७८।
इन् ङीस्वरे लुक् । १।४।७९।
वोशनसो नश्चामन्त्र्ये सौ ।१।४।८०।
उतोऽनडुच्चतुरो वः । १।४।८१।
वाः शेषे । १।४।८२ ।
सख्युरितोऽशावैत् । १।४।८३।
ऋदुशनस्पुरुदंशोऽनेहसश्च सेर्डाः । । १।४।८४।
नि दीर्घः । १।४।८५।
न्स्महतोः । १।४।८६।
इन्हन्पूषार्यम्णः शिस्योः ।।१।४।८७।
अपः । १।४।८८।
नि वा । १।४।८९।
अभ्वादेरत्वसः सौ । १।४।९०।
क्रुशस्तुनस्तृच् पुंसि । १।४।९१।
टादौ स्वरे वा । १।४।९२।
स्त्रियाम् । १।४।९३।

---

द्वितीयोऽध्यायः ।

प्रथमः पादः ।

त्रिचतुरस्तिसृचतसृ स्यादौ । २।१।१।
ऋतो रः स्वरेऽनि । २।१।२।
जराया जरस्वा । २।१।३।
अपोद् भे । २।१।४।
आ रायो व्यञ्जने । २।१।५।
युष्मदस्मदोः । २।१।६।
टाङ्योसि यः । २।१।७।
शेषे लुक् । २।१।८।

